गानभिज्ञानामप्यपकारः कश्चन [1]संभवतीति, तद्विभागस्यापि व्यञ्जितत्वात्।

§ १३. अत्रापरः कश्चिदाह–ननु येषां सत्यासत्यमतविभागाविर्भावके ग्रन्थकारवचसि सम्यगास्था न भवित्री तेषां का वार्तेति। उच्यते–येषामास्था न भाविनी ते द्वेधा–एके रागद्वेषाभावेन मध्यस्थचेतसः, अन्ये पुना रागद्वेषादिकालुष्यकलुषितत्वाद् दुर्बोधचेतसः। ये दुर्बोधचेतसः तेषां सर्वज्ञेनापि सत्यासत्यविभागप्रतीतिः कर्तुं दुःशका किं पुनरपरेणेति तानवगणय्य मध्यस्थचेतस उद्दिश्य विशेषणावृत्त्या सत्यासत्यमतविभागज्ञानस्योपायं प्राह–सद्दर्शनमिति। वीरं कथंभूतम्। सद्दर्शनम्–सन्तः साधवो मध्यस्थचेतस इति यावत्। तेषां दर्शनं ज्ञानम् अर्थात्सत्यासत्यमतविभागज्ञानं यथावदाप्तत्वपरीक्षाक्षमत्वेन यस्माद्वीरात्स सद्दर्शनस्तम्। एतेन श्रीवीरस्य यथावदाप्तत्वादिस्वरूपमेव परीक्षणीयम् इति सूचितम्। अथवा, सतां साधूनां दर्शनं तत्त्वार्थश्रद्धानलक्षणं यस्मात् स सद्दर्शनः। अथवा, सन्तो विद्यमाना जीवाजीवादयः पदार्थास्तेषां दर्शनं यथावदवलोकनं यस्माद्वीरात्स सद्दर्शनस्तम्। कुत एवंविधम्। यतः स्याद्वाददेशकं प्रागुक्तस्याद्वादभाषकम्। एवंविधमपि कुतः। इत्याह–यतो–जिनं राग-द्वेषादिजयनशीलम्। जिनो हि वीतरागत्वादसत्यं न भाषते, तत्कारणा-

---

सत्यताका तथा समस्त परदर्शनोंपर विजय प्राप्त करनेवाले वचनका अभिधान करके यह सूचित किया है कि अन्य समस्त दर्शन हेय हैं तथा जैनदर्शन उपादेय है। इसलिए इस ग्रन्थकारसे उन अल्पबुद्धि श्रोताओंके भी अपकारकी सम्भावना नहीं की जा सकती जो दर्शनोंकी सत्यासत्यताका निर्णय करनेमें असमर्थ हैं।

§ १३ शंका–दर्शनोंमें सत्यासत्य विभाग करनेवाले इस ग्रन्थकारके वचनोंमें जिन श्रोताओंकी सम्यक् श्रद्धा न हो उनको सत्यासत्यका परिज्ञान कैसे होगा?

**समाधान**–जो श्रद्धा नहीं करेंगे ऐसे श्रोता दो प्रकारके हो सकते हैं–(१) रागद्वेषादिजन्य दुराग्रहसे रहित मध्यस्थ चित्तवृत्तिवाले, (२) रागद्वेषादिसे कलुषित होनेके कारण दुर्बोध चित्तवाले। इनमें जो दुर्बोध चित्तवाले हैं उन्हें तो स्वयं सर्वज्ञ भी सत्यासत्य विभाग नहीं करा सकता दूसरोंकी तो बात ही क्या? इसलिए ऐसे श्रोताओंकी उपेक्षा करके मध्यस्थ चित्तवृत्तिवाले जिज्ञासु श्रोताओंको लक्ष्यमें रखकर 'सद्दर्शन' आदि विशेषणोंकी पुनः आवृत्ति करके सभी दर्शनोंमें सत्यासत्य विवेक करनेका उपाय बताते हैं।

मूलमें वीरको सद्दर्शन कहा गया है। 'सद्दर्शन'का अर्थ है–जिस भगवान् वीरके प्रसादसे सत् अर्थात् मध्यस्थ चित्तवृत्तिवाले साधु पुरुषोंको आप्तकी यथावत् परीक्षा करनेकी शक्ति होनेके कारण दर्शन-ज्ञान अर्थात् मतोंमें सत्यासत्यका विवेक ज्ञान उत्पन्न होता है, वह सद्दर्शन वीर है। इस विशेषणसे यह सूचित होता है कि भगवान् वीरके आप्तत्व आदि स्वरूपकी ही यथावत् परीक्षा करनी चाहिए। अर्थात् चूँकि भगवान् वीर आप्तत्वकी कठिन परीक्षाको सह सकते हैं, वे उसमें खरे उतर सकते हैं अतः इन वीरके प्रसादसे अन्य साधुपुरुषोंको भी सत्यासत्य विवेक करनेकी सामर्थ्य प्राप्त हो सकती है। इसीलिए टीकाकार यहाँ भगवान् वीरके आप्तत्वकी परीक्षाकी सूचना दे रहे हैं। अथवा जिस वीरके प्रसादसे सत् अर्थात् साधुजनोंको दर्शन अर्थात् तत्त्वार्थश्रद्धान रूप सम्यग्दर्शनकी प्राप्ति होती है वह सद्दर्शन वीर है। अथवा जिस वीरके प्रसादसे सत् अर्थात् विद्यमान जीवाजीवादि पदार्थोंका दर्शन अर्थात् यथार्थ अवलोकन होता है वह सद्दर्शन वीर है।

**प्रश्न**–वीर भगवान्की सद्दर्शनता कैसे जानी जाती है?

**उत्तर**–चूँकि भगवान् वीर स्याद्वादके उपदेशक हैं इसीलिए वे सद्दर्शन हैं। और वे यतः राग-द्वेषादि शत्रुओंके जीतनेके कारण जिन हैं इसीलिए वे सत्य-स्याद्वादके उपदेशक हैं। जिन

---

१. संभवी तद्वि–प. १, २, भ. १, २।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

भावादिति भावः[1] । शेषश्लोकव्याख्यानं प्राग्वत् ।

§ १४. एवं चात्रैवमुक्तं भवति–ये हि श्रीवीरस्य यथावदाप्तत्वापरीक्षां विधास्यन्ते स्याद्वादं च तत्प्रणीतं मध्यस्थतया सम्यगवलोक्य पश्चात् परमतान्यप्यालोकिष्यन्ते[2] ते सत्यासत्यदर्शनविभागमपि स्वयमेवावभोत्स्यन्ते, किमस्मद्वचनस्यास्थाकरणाकरणेनेति । एतेन ग्रन्थकृता स्वस्य सर्वथात्रार्थे माध्यस्थ्यमेव दर्शितं द्रष्टव्यम् । सत्यासत्यदर्शनविभागपरिज्ञानोपायश्च हितबुद्धयात्राभिहितोऽवगन्तव्यः, पुरातनैरपीत्थमेव सत्यासत्यदर्शनविभागस्य करणात् । तदुक्तं पूज्यश्रीहरिभद्रसूरिभिरेव लोकतत्त्वनिर्णये—

"बन्धुर्न नः स भगवान् [3]रिपवोऽपि नान्ये,
साक्षान्न [4]दृष्टचर एकतमोऽपि[5] चैषाम् ।
श्रुत्वा वचः सुचरितं च पृथग् विशेषं
वीरं गुणातिशयलोलतया श्रिताः स्मः ॥१॥"

[ लोकतत्त्व. १।३२ ]

"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥२॥"

[ लोकतत्त्व. १।३८ ]

---

वीतराग होनेके कारण असत्य नहीं बोल सकते, क्योंकि असत्य बोलनेके कारण राग-द्वेष-मोह तथा अज्ञान होते हैं। और ये उनमें नहीं हैं। श्लोकके अन्य पदोंकी व्याख्या पहलेकी तरह यहाँ समझ लेनी चाहिए।

§ १४. इस व्याख्याका यह फलितार्थ हुआ कि जो तटस्थ जिज्ञासु वीरभगवान्के आप्तत्वकी यथावत् परीक्षा करके उनके द्वारा प्रणीत स्याद्वाद सिद्धान्तका मध्यस्थवृत्तिसे अच्छी तरह आलोडन करनेके बाद दूसरे दर्शनोंका अध्ययन करेंगे उन्हें दर्शनोंके सत्यासत्यविवेकका स्वयं ही अनुभव हो जायेगा, ऐसे जिज्ञासु श्रोताओंको हमारे ( ग्रन्थकारके ) वचनोंपर श्रद्धा या अश्रद्धा करनेकी आवश्यकता ही नहीं पड़ेगी। इस तरह ग्रन्थकारने अपने वचनोंमें ही बलात् श्रद्धा करनेपर भार न देकर सर्वत्र अपनी परम मध्यस्थवृत्ति दिखायी है। यहाँ सत्यासत्य विभागज्ञानके उपायोंका प्रदर्शन तो मात्र परहितबुद्धिसे ही किया गया है, किसी दर्शनपर बलात् सत्यत्व या असत्यत्वके आरोप करनेका लेशमात्र भी अभिप्राय नहीं है। पुरातन आचार्योंमें भी इसी तटस्थवृत्तिसे दर्शनोंमें सत्यासत्यविभाग करनेकी शैली रही है। पूज्य श्रीहरिभद्रसूरिने ही लोकतत्त्वनिर्णय ग्रन्थमें कहा है कि—"न तो भगवान् हमारे बन्धु ही हैं और न अन्य हरि-हरादिक शत्रु ही हैं। और न इन सबमें-से किसीको भी हमने प्रत्यक्ष ही देखा है। हाँ, इन सबके द्वारा उपदिष्ट शास्त्रोंका श्रवण कर तथा इनके चरित्रका अच्छी तरह विचार अवश्य किया है। और इसी विचारके परिणाम स्वरूप हमारी गुणानुरागिणी बुद्धि, तथा गुणातिशयपर मोहित हृदय भगवान् महावीरकी शरणमें पहुँच गया है ॥ १ ॥ "हमारा वीरमें कोई पक्षपात-राग नहीं है और न कपिलादिकमें द्वेष ही। हमारी तो यह स्पष्ट नीति है कि—जिसके वचन युक्तियुक्त हों, तर्कशुद्ध हों उसीका स्वीकार करना चाहिए ॥२॥"

---

१. तुलना—"आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः । क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात् ॥"—सांख्य. माठर. पृ. १३ । "रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषास्तस्यानृतकारणं नास्ति ॥"—यश. उ. पृ. २७४ । आप्तस्व. श्लो. ३-४ । २.—लोकयिष्यन्ते आ., क. । ३. 'अरयोऽपि'—लोकतत्त्व. । ४. 'दृष्टतर एकतमोऽपि'—लोकतत्त्व. । दृष्टतर प. १, २, भ. १, २ । ५. एकतरोपि क., प. १, २, भ. १ ।

Jain Education International . For Private & Personal Use Only www.jainelibrary.org

§ १५. प्रभुश्रीहेमसूरिभिरप्युक्तं वीरस्तुतौ—

"न श्रद्धयैव त्वयि पक्षपातो न द्वेषमात्रादरुचिः परेषु।
यथावदाप्तत्वपरीक्षया तु त्वामेव वीरप्रभुमाश्रिताः स्मः ॥१॥"

[ अयोगव्य. श्लो. २९ इति ]

§ १६. नन्वत्र सर्वदर्शनवाच्योऽर्थो वक्तुं प्रक्रान्तः, स च संख्यातिक्रान्तः, तत्कथं स्वल्पीयसानेन प्रस्तुतशास्त्रेण सोऽभिधातुं शक्यः, जैनादन्यदर्शनानां परसमयापरनामधेयानामसंख्यातत्वात्। तदुक्तं सन्मतिसूत्रे श्रीसिद्धसेनदिवाकरेण—

"जावइया वयणपहा तावइया चेव हुंति नयवाया।
जावइया नयवाया तावइया चेव परसमया ॥१॥"

[ सन्मति. ३।४७ ]

§ १७. व्याख्या[1]—अनन्तधर्मात्मकस्य वस्तुनो य एकदेशोऽन्यदेशनिरपेक्षस्तस्य यदवधारणं सोऽपरिशुद्धो नयः। स एव च वचनमार्ग उच्यते। एवं चानन्तधर्मात्मकस्य सर्वस्य वस्तुन एकदेशानामितरांशनिरपेक्षाणां यावन्तोऽवधारणप्रकाराः संभवन्ति तावन्तो नया अपरिशुद्धा भवन्ति। ते च वचनमार्गा इत्युच्यते। ततोऽयं गाथार्थः–सर्वस्मिन् वस्तुनि यावन्तो यावत्संख्या वचनपथा वचनानामन्योन्यैकदेशवाचकानां शब्दानां मार्गा अवधारणप्रकारा[2] हेतवो नया भवन्ति तावन्त एव भवन्ति नयवादाः, नयानां तत्तदेकदेशावधारणप्रकाराणां वादाः प्रतिपादकाः शब्दप्रकाराः। यावन्तो नयवादा एकैकांशावधारणवाचकशब्दप्रकाराः तावन्त एव परसमयाः परदर्शनानि भवन्ति, स्वेच्छा-

§ १५. प्रभु श्रीहेमचन्द्राचार्य भी वीरस्तुतिमें कहते हैं कि—"अहो वीर, मैंने श्रद्धाके कारण तुम्हारे साथ पक्षपात नहीं किया है और न कपिलादिमें द्वेषके कारण अरुचि ही की है। हम तो परीक्षाकी तुला लिये हैं। तुम्हारे आप्तत्वकी यथावत् परीक्षा करके ही हम तुम्हारी शरणको प्राप्त हुए हैं।"

§ १६. शंका—इस ग्रन्थमें सर्वदर्शनोंका वर्णन करनेकी प्रतिज्ञा की गयी है परन्तु सर्वदर्शन तो असंख्यात हैं अतः इस छोटे-से ग्रन्थके द्वारा कैसे उनका वर्णन किया जा सकता है, क्योंकि जैनदर्शनसे भिन्न अन्य परसमय असंख्यात हैं? इसी बातको सन्मतिसूत्रमें श्रीसिद्धसेन दिवाकरने भी बताया है—"जितने वचनमार्ग हैं, उतने ही नयवाद हैं, और जितने नयवाद हैं उतने ही परसमय हैं—परदर्शन हैं।"

§ १७. व्याख्या–वस्तु अनन्तधर्मात्मक है। उसके किसी भी एक धर्मका अन्य धर्मोंकी अपेक्षा न करके 'यह ऐसा ही है' इस प्रकार अवधारण करनेवाले जितने भी नय हैं वे सब अपरिशुद्ध नय हैं। अर्थात् दुर्नय हैं। इन्हीं अपरिशुद्ध नयोंको वचनमार्ग कहते हैं। वस्तुमें जितने वचनमार्ग अर्थात् एक-एक धर्मोंके निरपेक्ष भावसे अवधारण करनेके प्रकार सम्भावित हैं उतने ही नयवाद होते हैं। और जितने नयवाद अर्थात् एक-एक धर्मोंको अवधारण करनेवाले वचनोंके प्रकार हैं उतने ही परसमय अर्थात् परदर्शन हैं। क्योंकि अपनी इच्छासे कल्पित शाब्दिक विकल्पोंसे ही परसमयोंकी

१. 'अनेकान्तात्मकस्य वस्तुनः एकदेशस्य यदन्यनिरपेक्षस्य अवधारणम् अपरिशुद्धो नयः, तावन्मात्रार्थस्य वाचकानां शब्दानां यावन्तो मार्गाः हेतवो नयाः तावन्त एव भवन्ति, स्वेच्छाप्रकल्पितविकल्पनिबन्धनत्वात् परसमयानां परिमितिर्न विद्यते। ननु यद्यपरिमिताः परसमयाः कथं तन्निबन्धनभूतानां नयानां संख्यानियमः—"नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः" [तत्त्वार्थसू. १।३३] इति श्रूयते; न; स्थूलतस्तच्छ्रुतेः, अवान्तरभेदेन तु तेषामपरिमितत्वमेव स्वकल्पनाशिल्पिघटितविकल्पानामनियतत्वात् तदुत्थप्रवादानामपि तत्संख्यापरिमाणत्वात्।" —सन्मति. टी. पृ. ४५५। शास्त्रवा. यशो. पृ. २७४ A.। तुलना—धवला. पृ. ८०। गो. कर्म. गा. ८९४। २. –रा भव—क., प. १, २, भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रकल्पितविकल्पनिबन्धनत्वात्परसमयानाम्, विकल्पानां चासंख्यत्वात् । अयं भावः—यावन्तो जने तत्तदपरापरवस्त्वेकदेशानामवधारणप्रतिपादकाः शब्दप्रकारा भवेयुस्तावन्त एव परसमया भवन्ति । ततस्तेषामपरिमितत्वमेव, स्वकल्पनाशिल्पिघटितविकल्पानामनियतत्वात् तदुत्थप्रवादानामपि तत्संख्यापरिमाणत्वादिति । तदेवं गणनातिगाः परसमया भवन्ति ।

§ १८. अथवा सूत्रकृदाख्ये द्वितीयेऽङ्गे परप्रवादुकानां त्रीणि शतानि त्रिषष्ट्यधिकानि परिसंख्यायन्ते । तदर्थसंग्रहगाथेयम्—

"[2]असिइसयं किरियाणं अकिरियवाईण होइ चुलसीई ।
अन्नाणि अ सत्तट्ठी वेणइयाणं च बत्तीसं ॥१॥"

[ सूत्रकृ. नि. गा. ११९ ]

§ १९. अस्या व्याख्या—अशीत्यधिकं शतम्, "किरियाणं ति" क्रियावादिनाम् । तत्र क्रियां जीवाद्यस्तित्वं वदन्तीत्येवंशीलाः क्रियावादिनः[3], मरीचिकुमारकपिलोलूकमाठरप्रभृतयः । ते

सृष्टि होती है तथा विकल्प असंख्य होते हैं । तात्पर्य यह है कि—लोकमें जितने एक-एक धर्मोंके अवधारण करनेवाले शब्द प्रयोग हो सकते हैं उतने ही परदर्शन होते हैं । चूँकि काल्पनिक विकल्प अपरिमित हैं अतः उनसे उत्पन्न होनेवाले प्रवाद भी उतने ही होते हैं । इस तरह परसमय अनगिनत होते हैं ।

§ १८. अथवा, सूत्रकृत[4] नामके दूसरे अंगमें परवादियोंके ३६३ प्रकारोंका इस गाथामें संग्रह किया है—"क्रियावादियोंके १८०, अक्रियावादियोंके ८४, अज्ञानवादियोंके ६४, तथा विनयवादियोंके ३२ प्रकार होते हैं ।"

§ १९. व्याख्या–क्रियावादियोंके १८० भेद हैं । क्रिया अर्थात् जीवादि पदार्थोंके अस्तित्वको

१. —कृताख्ये प. १, २, भ. १, २ । २. "चउविहा समोसरणा पण्णत्ता, तं जहा—किरियावादी, अकिरियावादी, अण्णाणिवादी, वेणइयवादी ।"—भग. ३०।१। स्था. ४।४।३४५ सर्वार्थसि. ८।१ । —"अत्थि त्ति किरियवाइं वयंति नत्थि त्ति किरियवाइओ । अण्णाणिय अण्णाणं वेणइया विणयवायंति ।" सूत्र. नि. गा. ११८ । "असियसयं किरियाणं अक्किरियाणं च होइ चुलसीती । अन्नाणि य सत्तट्ठी वेणइयाणं च बत्तीसा ।" सूत्र. नि. गा. ११९ । तुलना—"सूअगडे णं असीअस्स किरियावाइसयस्स चउरासीइए अकिरिआवाईणं सत्तट्ठीए अण्णाणिअवाईणं बत्तीसाए वेणइअवाईणं तिण्हं तेसट्ठाणं पासंडिअसयाणं ।"—नन्दीसू. ४६ । "असियसयं किरियाणं अकिरियवाईण होई चुलसीई ।...."—आचा. शी. १।१।१।३। "असियसयं किरियवाई अक्किरियाणं च होइ चुलसीदी । सत्तट्ठी अण्णाणी वेणेया होंति बत्तीसा ।" भावप्रा. गा. १३५ । "उक्तं च– असिदिसदं...."—सर्वार्थसि. ८।१। "असिदिसदं किरियाणं अक्किरियाणं च आहु चुलसीदी । सत्तट्ठण्णाणीणं वेणयियाणं तु बत्तीसं ॥"—गो. कर्म. गा. ८७६ । ३. तुलना—"कौत्कलं काण्डेविद्धि कौशिक-हरिश्मश्रु-मांछयिक-रोमस-हारीत-मुण्डाश्वलायनादीनां क्रियावाददृष्टीनामशीतिशतम् ।"—राजवा. पृ. ५१ । "जीवादिपदार्थसद्भावोऽस्त्येवेत्येवं सावधारणक्रियाभ्युपगमो येषां ते अस्तीतिक्रियावादिनः ।"सूत्र. शी. १।१२ । "क्रिया कर्त्रा विना न संभवति, सा चात्मसमवायिनीति वदन्ति तच्छीलाश्च ये ते क्रियावादिनः । अन्ये त्वाहुः–क्रियावादिनो ये ब्रुवते क्रियाप्रधानं किं ज्ञानेन । अन्ये तु व्याख्यान्ति क्रियां जीवादिः पदार्थोऽस्तीत्यादिकां वदितुं शीलं येषां ते क्रियावादिनः ।"—भग. अभ. ३०।१ । "क्रियां जीवाजीवादिरर्थोऽस्तीत्येवं रूपां वदन्तीति क्रियावादिनः आस्तिका इत्यर्थः ।—स्था. अभ. ४।४।३४५ । "तत्र न कर्तारमन्तरेण क्रिया पुण्यबन्धादिलक्षणा संभवति तत एवं परिज्ञाय तां क्रियाम् आत्मसमवायिनीं वदन्ति तच्छीलाश्च ये ते क्रियावादिनः ।"—नन्दि. म. पृ. २११ B । ४. प्रस्तुतमें सूत्रकृतकी निर्युक्ति भी सूत्रकृतांगमें सन्निविष्ट मानकर विधान है ।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

पुनरमुनोपायेनाशीत्यधिकशतसंख्या विज्ञेयाः। जीवाजीवास्रवबन्धसंवरनिर्जरापुण्यापुण्यमोक्षरूपान्नवपदार्थान् [1] परिपाटया पट्टिकादौ विरचय्य जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ, तयोरधो नित्यानित्यभेदौ, तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः। ततश्चैवं विकल्पाः कर्तव्याः। तद्यथा 'अस्ति जीवः स्वतो नित्यः कालतः' इत्येको विकल्पः।

अस्य च विकल्पस्यायमर्थः [3]—विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च कालतः

---

माननेवाले मरीचिकुमार, कपिल, उलूक, माठर आदि क्रियावादी हैं। इनके १८० भेद इस प्रकार समझना चाहिए—जीव, अजीव, आस्रव, बन्ध, संवर, निर्जरा, पुण्य, पाप तथा मोक्ष इन नव पदार्थोंको पट्टी आदिपर एक पंक्तिमें स्थापित करो। जीव पदार्थके नीचे स्वतः और परतः ये दो भेद स्थापित करके फिर एकके नीचे नित्य और अनित्यरूपसे भी भेद स्थापित करो। फिर हर एकके नीचे काल, ईश्वर, आत्मा, नियति तथा स्वभाव रूपसे पाँच-पांच भेद स्थापित करना चाहिए। इस तरह एक जीव पदार्थके इस प्रकार विकल्प होंगे—जीव स्वतो नित्य रूप है कालादिसे—पांच भेद, स्वतोऽनित्य रूप है कालादिसे—पांच भेद, जीव परतो नित्य रूप है कालादिसे—पांच भेद तथा परतोऽनित्यरूप कालादिसे—पांच भेद मिलकर बीस भेद हुए। इस तरह नव पदार्थोंके, २० × ९ = १८० भेद हो जाते हैं। इन विकल्पोंका अर्थ इस प्रकार है—पहला विकल्प 'अस्ति जीवः स्वतो नित्यः कालतः'–जीव स्वतः अपने स्वरूपसे विद्यमान है, नित्य है तथा कालके अधीन प्रवृत्ति करता है।

कालवादियोंके मतसे यह आत्मा स्वरूपसे विद्यमान है, नित्य है तथा कालाधीन होकर प्रवृत्ति

---

१. तुलना—"जीवादयो नव पदार्थाः परिपाट्या स्थाप्यन्ते, तदधः 'स्वतः परतः' इति भेदद्वयम्, ततोऽप्यधो नित्याऽनित्यभेदद्वयम्, ततोऽप्यधस्तत्परिपाट्या कालस्वभावनियतीश्वरात्मपदानि पञ्च व्यवस्थाप्यन्ते। ततश्चैवं चारणिकाक्रमः; तद्यथा अस्ति जीवः स्वतो नित्यः कालतः, तथा अस्ति जीवः स्वतोऽनित्यः कालत एव। एवं परतोऽपि भङ्गकद्वयम्। सर्वेऽपि चत्वारः कालेन लब्धाः, एवं स्वभावनियतीश्वरात्मपदान्यपि प्रत्येकं चतुर एव लभन्ते। तथा च पञ्चापि चतुष्कका विंशतिर्भवन्ति। सापि जीवपदार्थेन लब्धा। एवमजीवादयोऽप्यष्टौ प्रत्येकं विंशति लभन्ते। ततश्च नव विंशतयो मीलिताः क्रियावादिनामशीत्युत्तरं शतं भवन्तीति।" —सूत्र. शी. १।१२। आचा. शी. १।१।१।३ स्था. अभ. ४।४।३४५। नन्दी. मलय. सू. ४६। "अत्थि सदो परदो वि य णिच्चाणिच्चत्तणेण य णवत्था। कालीसरप्पणियदिसहावेहि य ते हि भंगा हु॥ प्रथमतः अस्तिपदं लिखेत्, तस्योपरि स्वतः परतः नित्यत्वेन अनित्यत्वेनेति चत्वारि पदानि लिखेत्, तेषामुपरि जीवः अजीवः पुण्यं पापम् आस्रवः संवरः निर्जरा बन्धः मोक्ष इति नव पदानि लिखेत्, तदुपरि काल ईश्वर आत्मा नियतिः स्वभाव इति पञ्च पदानि लिखेत्। तैः खल्वक्षसंचारक्रमेण भङ्गा उच्यन्ते; तद्यथा—स्वतः सन् जीवः कालेन अस्ति क्रियते। परतो जीवः कालेन अस्ति क्रियते। नित्यत्वेन जीवः कालेन अस्ति क्रियते। अनित्यत्वेन जीवः कालेन अस्ति क्रियते। तथा अजीवादिपदार्थं प्रति चत्वारश्चत्वारो भूत्वा कालेनैकेन सह षट्त्रिंशत्। एवमीश्वरादिपदैरपि षट्त्रिंशत् षट्त्रिंशत् भूत्वा अशीत्यग्रशतं क्रियावादभङ्गाः स्युः।"—गो. कर्म., टी., गा. ८७७। २. "किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः। अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्॥ कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः॥" —श्वेताश्व. १।२; ६।१ नारदपरि. ९।१। "कालो सहाव णियई पुव्वकयं पुरिसकारणे गंता।" —सन्मति. ३।५३। धर्म सं. गा. ५६६। ३. "तत्र स्वत इति स्वेनैव रूपेण जीवोऽस्ति न परोपाध्यपेक्षया ह्रस्वत्वदीर्घत्वे इव। नित्यः शाश्वतः न क्षणिकः पूर्वोत्तरकालयोरवस्थितत्वात्। कालत इति काल एव विश्वस्य स्थित्युत्पत्तिप्रलयकारणम्। उक्तं च—'कालः पचति भूतानि कालः संहरते प्रजाः।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कालवादिनो मते । कालवादिनश्च[1] नाम ते मन्तव्या ये कालकृतमेव जगत्सर्वं मन्यन्ते । तथा च ते प्राहुः—न कालमन्तरेण चम्पकाशोकसहकारादिवनस्पतिकुसुमोद्गमफलबन्धादयो हिमकणानुषक्तशीतप्रपातनक्षत्रचारगर्भाधानवर्षादयो वर्तुविभागसंपादिता बालकुमारयौवनवलीपलितागमादयो

करता है। कालवादी इस समस्त जगत्को कालकृत मानते हैं। उनका अभिप्राय है कि—कालके बिना चम्पा-अशोक-आम आदि वनस्पतियोंमें फूल तथा फलोंका लगना, कुहरेसे जगत्को धूमिल करनेवाला हिमपात, नक्षत्रोंका संचार, गर्भाधान, वर्षा आदि ऋतु विभागसे होना; बचपन,

कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः।' स चातीन्द्रियः युगपच्चिरक्षिप्रक्रियाभिव्यङ्ग्यो हिमोष्णवर्षाव्यवस्थाहेतुः क्षणलवमुहूर्तयामाहोरात्रमासर्तु-अयन-संवत्सरयुगकल्पपल्योपमसागरोपमोत्सर्पिण्यवसर्पिणीपुद्गलपरावर्तातीतानागतवर्तमानसर्वाद्धादिव्यवहाररूपः। द्वितीयविकल्पे तु कालादेव आत्मनोऽस्तित्वमभ्युपेयं किन्त्वनित्योऽसौ इति विशेषोऽयं पूर्वविकल्पात् । तृतीयविकल्पे तु परत एवास्तित्वमभ्युपगम्यते ? कथं पुनः परतोऽस्तित्वमात्मनोऽभ्युपेयते ? नन्वेतत् प्रसिद्धमेव सर्वपदार्थानां परपदार्थस्वरूपापेक्षया स्वरूपपरिच्छेदो यथा दीर्घत्वापेक्षया ह्रस्वत्वपरिच्छेदो ह्रस्वत्वापेक्षया च दीर्घत्वस्येति । एवमेव चात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुनि आत्मबुद्धिः प्रवर्तते इति, अतो यदात्मनः स्वरूपं तत् परत एवावधार्यते न स्वत इति । चतुर्थविकल्पोऽपि प्रागुवदिति चत्वारो विकल्पाः।"—आचा. शी. १।१।१।४। स्था. अभ. ४।४।३४५। "अस्य च विकल्पस्यायमर्थः—विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च। कालतः कालवादिनो मते। कालवादिनश्च नाम ते मन्तव्या ये कालकृतमेव सर्वं जगत् मन्यन्ते। तथा च ते आहुः—न कालमन्तरेण चम्पकाशोकसहकारादिवनस्पतिकुसुमोद्गमफलबन्धादयो हिमकणानुषक्तशीतप्रपातनक्षत्रगर्भाधानवर्षादयो वा ऋतुविभागसंपादिता बालकुमारयौवनवलिपलितागमादयो वाऽवस्थाविशेषा घटन्ते, प्रतिनियतकालविभाग एव तेषामुपलभ्यमानत्वात्, अन्यथा सर्वमव्यवस्था भवेत्, न चैतद् दृष्टमिष्टं वा। अपि च मुद्गपक्तिरपि ...."—नन्दि. मलय. पृ. २१३ B।

१. "विधातृविहितं मार्गं न कश्चिदतिवर्तते। कालमूलमिदं सर्वं भावाभावौ सुखासुखे॥ कालः सृजति भूतानि कालः संहरते प्रजाः। संहरन्तं प्रजाः कालं कालः शमयते पुनः॥ कालो विकुरुते भावान् सर्वाल्लोके शुभाशुभान्। कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः॥ कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः। कालः सर्वेषु भूतेषु चरत्यविधृतः समः॥ अतीतानागता भावा ये च वर्तन्ति साम्प्रतम्। तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि॥"—महाभा. आदि. १।२७२-७६। "कालः पचति भूतानि ..."यस्मिंस्तु पच्यते कालो यस्तं वेद स वेदवित्।"—मैत्रा. ६।१५; उपनिषद्वाक्यकोष। "कालः कलयते लोकं कालः कलयते जगत्। कालः कलयते विश्वं तेन कालोऽभिधीयते॥ कालस्य वशगाः सर्वे देवर्षिसिद्धकिन्नराः। कालो हि भगवान् देवः स साक्षात्परमेश्वरः॥ सर्गपालनसंहर्ता स कालः सर्वतः समः। कालेन कल्प्यते विश्वं तेन कालोऽभिधीयते॥ येनोत्पत्तिश्च जायेत येन वै कल्प्यते कला। सोऽन्तवच्च भवेत्कालो जगदुत्पत्तिकारकः॥ यः कर्माणि प्रपश्येत प्रकर्षे वर्तमानके। सोऽपि प्रवर्त्तको ज्ञेयः कालः स्यात् प्रतिपालकः॥ येन मृत्युवशं याति कृतं येन लयं व्रजेत्। संहर्ता सोऽपि विज्ञेयः कालः स्यात् कलनापरः॥ कालः सृजति भूतानि कालः संहरते प्रजाः। कालः स्वपिति जागर्ति कालो हि दुरतिक्रमः॥ काले देवा विनश्यन्ति काले चासुरपन्नगाः। नरेन्द्राः सर्वजीवाश्च काले सर्वं विनश्यति॥" हारीत सं. स्था. १ अ. ४। "केचित् कालं कारणतया वर्णयन्ति—कालः सृजति भूतानि ...."—सांख्य. माठर. पृ. ७१। माध्य. वृ. पृ. ३८९। चतुः श. पृ. ३८। लोकत. १।६१। सन्मति. टी. पृ. ७११। "कालो सव्वं जणयदि कालो सव्वं विणस्सदे भूदं। जागत्ति हि सुत्तेसु वि ण सक्कदे वंचिदुं कालो॥"—गो. कर्म. गा. ८७९। २.—नक्षत्रगर्भा—क०, प. १, २, म. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

बावस्थाविशेषा घटन्ते, प्रतिनियतकालविभागत एव तेषामुपलभ्यमानत्वात्। अन्यथा सर्वमव्यवस्थया भवेत्। न चैतद्दृष्टमिष्टं वा। अपि च, मुद्गपक्तिरपि न कालमन्तरेण लोके भवन्ती दृश्यते, किंतु कालक्रमेण। अन्यथा स्थालीन्धनादिसामग्रीसंपर्कसंभवे प्रथमसमयेऽपि तस्या भावो भवेत्, न च भवति, तस्माद्यत्कृतकं तत्सर्वं कालकृतमिति।

§ २०. तथा चोक्तम्—

"न कालव्यतिरेकेण गर्भबालयुवादिकम्[1]।
यत्किंचिज्जायते लोके तदसौ कारणं किल ॥१॥
किंच कालादृते नैव मुद्गपक्तिरपीक्ष्यते।
स्थाल्यादिसंनिधानेऽपि ततः कालादसौ मता ॥२॥
कालाभावे च गर्भादि सर्वं स्यादव्यवस्थया।
परेष्टहेतुसद्भावमात्रादेव तदुद्भवात् ॥३॥"

[शास्त्रवा. श्लो. १६५-६८]

"कालः पचति भूतानि कालः [2]संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥४॥

[महाभा., हारीतसं.]

---

जवानी तथा मुँह आदिमें झुरियाँ तथा बालोंमें सफेदी लानेवाली वृद्धावस्था आदि अवस्थाओंका होना असम्भव हो जायेगा; क्योंकि ये सब कालके प्रतिनियत विभागसे ही सम्बन्ध रखती हैं। काल न हो तो यह सब अव्यवस्थित हो जायेगा। परन्तु इनकी अव्यवस्था न तो अनुभवमें ही आती है और न इष्ट ही है। मूँगकी दालका परिपाक भी कालक्रमसे ही होता है। यदि कालके बिना ही परिपाक हो जाय तो बटलोई, ईंधन आदि सामग्रीके मिलते ही प्रथम क्षणमें ही दाल पक जानी चाहिए। पर ऐसा तो नहीं देखा जाता अर्थात् मूँगकी दालको पकानेके लिए १५-२० मिनिटका समय तो अपेक्षित होता ही है। इसलिए यह नियम है कि जो-जो कृतक अर्थात् कार्य हैं वे सब कालकृत ही हैं। जिन वस्तुओंकी उत्पत्तिमें दूसरे कारणके व्यापारकी अपेक्षा होती है उन्हें कृतक कहते हैं।

§ २०. कहा भी है—"इस संसारमें गर्भाधान बाल्यकाल जवानी आदि जो कुछ भी उत्पन्न होता है वह सब कालकी सहायतासे हो उत्पन्न होता है, कालके बिना नहीं। क्योंकि काल एक समर्थ कारण है ॥१॥ बटलोई ईंधन आदि पाककी सामग्री मिल जानेपर भी जबतक उसमें काल अपनी सहायता नहीं करता तबतक मूँगकी दालका परिपाक नहीं देखा जाता अतः यह मानना ही होगा कि मूँगकी दालका परिपाक कालने ही किया है ॥२॥

यदि दूसरोंके द्वारा माने गये हेतुके सद्भाव मात्रसे ही कार्य हो और कालको कारण न माना जाय तो गर्भाधान आदिकी कोई व्यवस्था ही नहीं रहेगी। अर्थात् यदि ऋतुकालकी कोई अपेक्षा नहीं है तो मात्र स्त्री-पुरुषके संयोगसे ही गर्भाधान हो जाना चाहिए ॥३॥"

"काल पृथिवी आदि भूतोंके परिणमनमें सहायक होता है, काल ही प्रजाका संहार करता है अर्थात् उन्हें एक अवस्थासे दूसरी अवस्थामें ले जाता है। सदा जाग्रत् काल ही सुषुप्तिदशामें भी प्राणियोंकी रक्षा करता है। अतएव यह काल दुरतिक्रम है अर्थात् उसका निराकरण अशक्य है।"

---

१. –बालशुभादि—क., प. १, २, भ. १, २। २. संहरति प. १, २, भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अत्र परेष्टहेतुसद्भावमात्रादिति पराभिमतवनितापुरुषसंयोगादिरूपहेतुसद्भावमात्रादेव तदुद्भवादिति गर्भाद्युद्भवप्रसङ्गात्। तथा कालः पचति—परिपाकं नयति परिणतिं नयति भूतानि पृथिव्यादीनि। तथा कालः संहरते प्रजाः—पूर्वपर्यायात्प्रच्याव्य पर्यायान्तरेण प्रजा लोकान्स्थापयति। तथा कालः सुप्तेषु जागर्ति–काल एव सुप्तं जनमापदो रक्षतीति भावः। तस्माद् हि स्फुटं दुरतिक्रमोऽपाकर्तुमशक्यः काल इति।

§ २१. [1]उक्तेनैव प्रकारेण द्वितीयोऽपि विकल्पो वक्तव्यः, नवरं कालवादिन इति वक्तव्य ईश्वरवादिन इति वक्तव्यम्। तद्यथा—अस्ति जीवः स्वतो नित्यः ईश्वरतः। [2]ईश्वरवादिनश्च सर्वं जगदीश्वरकृतं मन्यन्ते। ईश्वरं च सहसिद्धज्ञानवैराग्यधर्मैश्वर्यरूपचतुष्टयं प्राणिनां च स्वर्गापवर्गयोः प्रेरकमिति। तदुक्तम्—

"[3]ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥१॥"

---

इन श्लोकोंमें आये हुए कुछ विशिष्ट पदोंका अर्थ—

परेष्टहेतुसद्भावमात्रात् = दूसरोंको अभिमत स्त्री-पुरुष सम्भोग मात्रसे।

तदुद्भवात् = गर्भाधान हो जानेसे।

कालः पचति = काल ही पृथिवी आदि भूतोंमें परिवर्तन करता है।

कालः संहरते प्रजाः = काल ही आत्माओंको एक पर्यायसे दूसरी पर्यायमें ले जाता है–उनमें परिणमन कराता है।

कालः सुप्तेषु जागर्ति = काल ही सोते हुए प्राणीकी आपत्तियोंसे रक्षा करता है।

कालो हि दुरतिक्रमः = अतः काल अलंघ्य शक्ति है उसे कोई नहीं टाल सकता।

§ २१. जिस प्रकार पहला विकल्प कालवादियोंकी अपेक्षासे है उसी तरह 'अस्ति जीवः स्वतो नित्यः ईश्वरतः अर्थात् जीव स्वतः विद्यमान है, नित्य है और ईश्वरके अधीन प्रवृत्ति करता है' यह दूसरा विकल्प ईश्वरवादियोंकी अपेक्षासे है। ईश्वरवादी इस जगत्को ईश्वरकृत मानते हैं। वह ईश्वर सहजसिद्ध ज्ञान-वैराग्य-धर्म और ऐश्वर्य इस चतुष्टयका धारक है तथा प्राणियोंको स्वर्ग और नरकमें भेजनेवाला है। कहा भी है—

"जगत्पति ईश्वरको अप्रतिहत ज्ञान, वैराग्य, धर्म तथा ऐश्वर्य रूप चतुष्टय सहज ही प्राप्त है ॥१॥

---

१. "उक्तेनैव प्रकारेण द्वितीयोऽपि विकल्पो वक्तव्यः, नवरं कालवादिन इति वक्तव्ये ईश्वरवादिन इति वक्तव्यम्। तद्यथा..."—नन्दि. मलय. पृ. २१४ A.। "तथाऽन्येऽभिदधते—समस्तमेतज्जीवादि ईश्वरात्प्रसूतम् ..."—आचा. शी. १।१।१।४। बुद्धच. ९।६३। "अण्णाणी हु अणीसो अप्पा तस्स य सुह च दुक्खं च। सग्गं णिरयं गमणं सव्वं ईसरकयं होदि ॥"—गो. कर्म. गा. ८८०। २. "यतो वा इमानि भूतानि जायन्ते..."—तैत्ति. २।१।१। "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्। संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥"—श्वेता. ३।३। "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।"—गीता १०।८। "यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।"—गीता १५।१७। "संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्"—वैशे. २।१।१८। "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"—न्यायसू. ४।१।२०। ३. श्लोकोऽयं निम्नग्रन्थेष्वपि समुद्धृतः—शास्त्रवा. श्लो. १९२। सूत्र. शी. पृ. २५६। सन्मति. टी. पृ. १९। प्रमागमी. पृ. १२। नन्दि. मलय. पृ० २१४।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

"[1]अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं [2]वा श्वभ्रमेव वा ॥२॥"

[ महाभा. वन. ३०।२१ ] इत्यादि।

§ २२. तृतीयो विकल्प [3]आत्मवादिनाम्। आत्मवादिनो नाम "[4]पुरुष एवेदं सर्वम्" [ ऋग्वेद पुरुषसू० ] इत्यादि प्रतिपन्नाः।

§ २३. चतुर्थो विकल्पो नियतिवादिनाम्[5]। ते ह्येवमाहुः—नियतिर्नाम तत्त्वान्तरमस्ति यद्वशादेते भावाः सर्वेऽपि नियतेनैव रूपेण प्रादुर्भावमश्नुवते, नान्यथा। तथाहि—यद्यदा यतो भवति तत्तदा तत एव नियतेनैव रूपेण भवदुपलभ्यते, अन्यथा कार्यकारणव्यवस्था, प्रतिनियतरूपव्यवस्था च न भवेत्, नियामकाभावात्। तत एवं कार्यनैयत्यतः प्रतीयमानामेनां नियतिं को नाम प्रमाणपथकुशलो बाधितुं क्षमते। मा प्रापदन्यत्रापि प्रमाणपथव्याघातप्रसङ्गः। तथा चोक्तम्—

अपने सुख-दुःख भोगके क्षेत्रको खोजनेमें स्वयं असमर्थ ये बिचारे अज्ञ जन्तु ईश्वरके द्वारा प्रेरित होकर ही सुख-दुःख भोगनेके लिए स्वर्ग तथा नरकमें जाते हैं ॥२॥"

§ २२. तीसरा विकल्प आत्मवादियोंकी अपेक्षासे है। आत्मवादी "इस समस्त जगत्को पुरुष रूप ही मानते हैं"। इनके मतसे जगत् पुरुष-ब्रह्मरूप है, अद्वैत है।

§ २३. चौथा विकल्प नियतिवादियोंकी दृष्टिसे है। नियतिवादियोंका अभिप्राय है कि—नियति नामका एक स्वतन्त्र तत्त्व है। इस नियतिसे ही सभी पदार्थ नियत रूपमें उत्पन्न होते हैं अनियत रूपमें नहीं। जो जिस समय जिससे उत्पन्न होता है वह उस समय उससे नियतरूपमें ही उत्पत्ति लाभ करता है। यदि नियत तत्त्व न हो तो संसारसे कार्यकारणकी व्यवस्था तथा पदार्थोंके अपने निश्चित स्वरूपकी व्यवस्था ही उठ जायेगी। इस तरह जब कार्योंकी नियत अवस्था ही इस नियतितत्त्वके अस्तित्वका सबसे बड़ा साधक प्रमाण विद्यमान है तब कौन प्रामाणिक इस नियतितत्त्वके अस्तित्वसे इनकार कर सकता है। यदि प्रतीतिसिद्ध वस्तुका एक जगह लोप किया जाता है तो संसारसे प्रमाण मार्ग ही उठ जायेगा। कहा भी है—

१. अन्यो जन्तु—आ., प. १, २; भ. १, २। २. 'स्वर्गं नरकमेव वा'—महाभा.। ३. "तथाऽन्ये ब्रुवते—न जीवादयः पदार्थाः कालादिभ्यः स्वरूपं प्रतिपद्यन्ते किं तर्हि ? आत्मनः। कः पुनरयमात्मा ? आत्माद्वैतवादिनां विश्वपरिणतिरूपः। उक्तं च–एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" तथा "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्' इत्यादि।" —आचा. शी. १।१।१।४। बुद्धच. ९।६४। सन्मति. टी. पृ. ७१५। नन्दि. मलय. पृ. २१४ A। "वेदवादिनः पुनरित्थं कारणमाहुः—"पुरुष एवेदं सर्वम्' इत्यतः पुरुषः कारणमाहुः।" —सांख्य. माठर. पृ. ७५। "एक्को चेव महप्पा पुरिसो देवो य सव्ववावी य। सव्वंगणिगूढो वि य सचेयणो णिग्गुणो परमो ॥"—गो. कर्म. गा. ८८१। ४. "पुरुष एवेदं यद्भूतं यच्च भाव्यम्। यदिदं वर्तमानं जगत् सर्वं तत् पुरुष एव। यच्च भूतमतीतं जगत् यच्च भव्यं भविष्यज्जगत्तदपि पुरुष एव। यथा अस्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैव अतीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः।"—ऋग्वे. पुरुषसू. सायणभा.। श्वेताश्व. ३।१५। ५. तथाऽन्ये नियतित एवात्मनः स्वरूपमवधारयन्ति। का पुनरियं नियतिरिति ? उच्यते—पदार्थानामवश्यंतया यद्यथा भवने प्रयोजककर्त्री नियतिः। उक्तं च—'प्राप्तव्यो नियतिबलाश्रयेण ...इयं च मस्करिपरिव्राण्मतानुसारिणी प्राय इति।"—आचा. शी. १।१।१।४। स्था. अभ. ४।४।३४५। सन्मति. टी. पृ. ७१४। नन्दि. मलय. पृ. २१४ A। "न चर्ते नियतिं लोके मुद्गपक्तिरपीक्ष्यते। तत्स्वभावादिभावेऽपि नासावनियता यतः ॥ अन्यथाऽनियतत्वेन सर्वाभावः प्रसज्यते। अन्योऽन्यात्मकतापत्तेः क्रियावैफल्यमेव च ॥"—शास्त्रवा. श्लो. १७५-७६। "जत्तु जदा जेण जहा जस्स य णियमेण होदि तत्तु तदा। तेण तहा तस्स हवे इदि वादो णियदिवादो दु ॥ गो. कर्म. गा. ८८२।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"नियतेनैव रूपेण सर्वे भावा भवन्ति यत् ।
ततो नियतिजा ह्येते तत्स्वरूपानुवेधतः ॥१॥
यद्यदेव यतो यावत्तत्तदेव ततस्तथा ।
नियतं जायते न्यायात् क एनां बाधितुं क्षमः ॥२॥"

[ शास्त्रवा., श्लो. १७३, १७४ ]

**§ २४. पञ्चमो विकल्पः स्वभाववादिनाम्[1] । स्वभाववादिनो ह्येवमाहुः–इह वस्तुनः स्वत एव परिणतिः स्वभावः सर्वे भावाः स्वभाववशादुपजायन्ते । तथाहि—मृदः कुम्भो भवति न पटादिः, तन्तुभ्योऽपि पट उपजायते न घटादिः । एतच्च प्रतिनियतं भवनं न तथास्वभावतामन्तरेण घटासंटङ्कमाटीकते । तस्मात्सकलमिदं स्वभावकृतमवसेयम् । तथा चाहुः—**

"चूँकि संसारके सभी पदार्थ अपने-अपने नियत स्वरूपसे उत्पन्न होते हैं अतः यह ज्ञान हो जाता है कि ये सब नियतिसे उत्पन्न हुए हैं। यह समस्त चराचर जगत् नियतितत्त्वसे गुँथा हुआ है उससे तादात्म्यको प्राप्त होकर नियतिमय हो रहा है ॥१॥

"जिसे जिस समय जिससे जिस रूपमें होना है वह उससे उसी समय उसी रूपमें उत्पन्न होता है। इस तरह अबाधित प्रमाणसे प्रसिद्ध इस नियतिके स्वरूपको कौन बाधा दे सकता है ? वह सर्वतः निर्बाध है" ॥२॥

§ २४. पाँचवाँ विकल्प स्वभाववादियोंकी अपेक्षासे है। स्वभाववादियोंका कथन है कि वस्तुओंका स्वतः ही परिणति करनेका स्वभाव है। सभी पदार्थ अपने परिणमनस्वभावके कारण ही उत्पन्न होते हैं। उदाहरणार्थ-मिट्टीसे घड़ा ही बनता है कपड़ा नहीं, सूतसे भी कपड़ा ही उत्पन्न होता है घड़ा नहीं। यह प्रतिनियत कार्यकारणभाव स्वभावके बिना नहीं बन सकता। इसलिए यह समस्त जगत् अपने स्वभावसे ही निष्पन्न है। कहा भी है—

१. "केचित्स्वभावादिति वर्णयन्ति शुभाशुभं चैव भवाभवौ च । स्वाभाविकं सर्वमिदं च यस्मादतोऽपि मोघो भवति प्रयत्नः ।। यदिन्द्रियाणां नियतः प्रचारः प्रियाप्रियत्वं विषयेषु चैव । संयुज्यते यज्जरयार्तिभिश्च कस्तत्र यत्नो ननु स स्वभावः ।। यत्पाणिपादोदरपृष्ठमूर्ध्ना निर्वर्तते गर्भगतस्य भावः । यदात्मनस्तस्य च तेन योगः स्वाभाविकं तत्कथयन्ति तज्ज्ञाः ।। कः कण्टकाना····"—बुद्धच. ९।५८-६२ । "अपरे स्वभावमाहुः—स्वभावः कारणमिति । तथाहि–येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स नो वृत्तिं विधास्यति ।।"—सांख्य. माठर. पृ. ७५ । "सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते । स्वभाववादिभिस्ते हि नाहुः स्वमपि कारणम् ।। राजीवकेसरादीनां वैचित्र्यं कः करोति हि । मयूरचन्द्रकादिर्वा विचित्रः केन निर्मितः ।। यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् । कादाचित्कतया तद्वद् दुःखादीनामहेतुता ।।" —तत्त्वसं. का. ११०-११२ । बोधिचर्या. पं. पृ. ५४१ । "न स्वभावातिरेकेण गर्भबालशुभादिकम् । यत्किंचिज्जायते लोके तदसौ कारणं किल ।। सर्वभावाः स्वभावेन स्वस्वभावे तथा तथा । वर्तन्तेऽथ निवर्त्तन्ते कामचारपराङ्मुखाः ।। न विनेह स्वभावेन मुद्गपक्तिरपीष्यते । तथा कालादिभावेऽपि नाश्वमासस्य सा यतः ।। अतत्स्वभावात्तद्भावेऽतिप्रसङ्गोऽनिवारितः । तुल्ये तत्र मृदः कुम्भो न पटादीत्ययुक्तिमत् ।। शास्त्रवा. १६९-१७२ । "अपरे पुनः स्वभावादेव संसारव्यवस्थामभ्युपयन्ति । कः पुनरयं स्वभावः ? स्वत एव तथापरिणतिभावः स्वभावः । उक्तं च–कः कण्टकानां प्रकरोति····॥ स्वभावतः प्रवृत्तानां निवृत्तानां स्वभावतः । नाहं कर्त्तेति भूतानां यः पश्यति स पश्यति ।। केनाञ्जितानि नयनानि मृगाङ्गनानां कोऽलंकरोति रुचिराङ्गरुहान् मयूरान् । कश्चोत्पलेषु दलसन्निचयं करोति को वा दधाति विनयं कुलजेषु पुंस्सु ।।" —आचा. शी. १।१।१।४ । सन्मति. टी. पृ. ७११ । नन्दि-मलय. पृ. २१४ A "को करइ कंटयाणं तिक्खत्तं मियविहंगमादीणं । विविहत्तं तु सहाओ इदि सव्वं पि य सहाओत्ति ।।"—गो. कर्म. गा. ८८३ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"कः कण्टकानां प्रकरोति तैक्ष्ण्यं, विचित्रभावं मृगपक्षिणां च ।
स्वभावतः सर्वमिदं प्रवृत्तं न [1]कामचारोऽस्ति कुतः प्रयत्नः ॥१॥"

[ बुद्धच. ९।६२ ]

"बदर्याः कण्टकस्तीक्ष्ण ऋजुरेकश्च कुञ्चितः ।
फलं च वर्तुलं तस्या वद केन विनिर्मितम् ॥२॥"

[ लोकतत्त्व. २।२२ ] इत्यादि ।

§ २५. अपि च, आस्तामन्यत्कार्यजातमिह मुद्गपक्तिरपि न स्वभावमन्तरेण भवितुमर्हति । तथाहि—स्थालीन्धनकालादिसामग्रीसंभवेऽपि न [2]कंकदुकमुद्गानां पक्तिरुपलभ्यते, तस्माद्यद्भावे भवति तत्तदन्वयव्यतिरेकानुविधायि तत्कृतमिति स्वभावकृता मुद्गपक्तिरप्येष्टव्या । ततः सकलमेवेदं वस्तुजातं स्वभावहेतुकमवसेयमिति ।

§ २६. तदेवं [3] स्वत इति पदेन लब्धा पञ्च विकल्पाः । एवं च परत [4] इत्यनेनापि पञ्च

"यह सारा संसार स्वभावसे ही अपनी सारी प्रवृत्ति कर रहा है, इसमें किसीकी इच्छा या प्रयत्नका कोई हस्तक्षेप नहीं है । बताओ—काँटोंमें तीक्ष्णता—नुकीलापन किसने पैदा किया, किसने उन काँटोंको घिसकर पैना किया होगा ? हरिण तथा पक्षियोंके विचित्र स्वभाव किसने किये । पक्षियोंके अनेक रंगके पर, उनकी मधुर कूजन, हिरणकी सुन्दर आँखें, उसका छलाँगें भरकर कूदना-फाँदना ये सब स्वभावसे ही हैं ॥१॥

विचार करके बताइए कि—बेरके अत्यन्त नुकीले कुछ सीधे और कुछ तिरछे काँटे किसने पैदा किये ? फिर उसका अत्यन्त स्वादु और गोल फल किसने बनाया ? तात्पर्य यह—सब स्वभावकी ही लीला है ॥२॥" इत्यादि ।

§ २५. अन्य कार्योंकी बात तो जाने दो, मूँगकी दालका पाक भी स्वभावके बिना नहीं हो सकता । बटलोई, ईंधन, समय आदि सभी सामग्री उपस्थित है, पर कुकड़ू-मूँगका पाक नहीं होता । इससे स्पष्ट मालूम होता है कि जिसमें पकनेका स्वभाव है वही पक सकता है अन्य नहीं । इस तरह स्वभावके साथ अन्वय-व्यतिरेक होनेसे समस्त कार्य स्वभावकृत ही समझना चाहिए । मूँगका पाक भी स्वभावकृत ही है ।

§ २६. इस तरह 'स्वतः' पदके काल नियति आदि पाँच विकल्प होते हैं । आत्मा 'परतः' पदके भी इसी तरह पाँच विकल्प होते हैं । आत्मा परतः—परसे व्यावृत्त है, अर्थात् आत्मा स्वरूपसे

---

१. "कामकारोऽस्ति" बुद्धच. । उद्धृतोऽयम्—लोकत. २।२१। आचा. शी. १।१।१।४ । सन्मति. टी. पृ. ७१२ । शास्त्रवा. यशो. पृ. ८३ A । २. कंकदुक–क. भ. २ । ३. "तत एवं स्वत इति पदेन लब्धाः पञ्च विकल्पाः । एवं परत इत्यनेनापि पञ्च लभ्यन्ते । परत इति-परेभ्यो व्यावृत्तेन रूपेण विद्यते खल्वयमात्मेत्यर्थः । एवं नित्यत्वापरित्यागेन दश विकल्पा लब्धाः एवमनित्यपदेनापि दश, सर्वे मिलिता विंशतिः । एते च जीवपदार्थेन लब्धाः । एवमजीवादिष्वष्टसु पदार्थेषु प्रत्येकं विंशतिर्विंशतिर्विकल्पा लभ्यन्ते, ततो विंशतिर्नवगुणिताः शतमशीत्युत्तरं क्रियावादिनां भवति ।—नन्दि. मलय. पृ. २१४ B । ४. "तृतीयविकल्पे तु परत एवास्तित्वमभ्युपगम्यते, कथं पुनः परतोऽस्तित्वमात्मनोऽभ्युपेयते ? नन्वेतत् प्रसिद्धमेव सर्वपदार्थानां परपदार्थस्वरूपापेक्षया स्वरूपपरिच्छेदः यथा दीर्घत्वापेक्षया ह्रस्वस्वपरिच्छेदो ह्रस्वत्वापेक्षया च दीर्घत्वस्येति । एवमेव च अनात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुनि आत्मबुद्धिः प्रवर्तते इति, अतो यदात्मनः स्वरूपं तत् परत एवावधार्यते न स्वत इति ।"—आचा. शी. १।१।१।४ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

लभ्यन्ते। परत इति परेभ्यो व्यावृत्तेन रूपेणात्मा विद्यते। यतः प्रसिद्धमेतत् सर्वपदार्थानां परपदार्थस्वरूपापेक्षया स्वरूपपरिच्छेदो यथा दीर्घत्वाद्यपेक्षया ह्रस्वत्वादिपरिच्छेदः, एवमात्मनि स्तम्भादीन्समीक्ष्य तद्व्यतिरिक्तबुद्धिः[1] प्रवर्तते। अतो यदात्मनः स्वरूपं तत्परत एवावधार्यते न स्वत इति। एवं नित्यत्वापरित्यागेन दश विकल्पा लब्धाः। एवमनित्यपदेनापि, सर्वेऽपि मिलिता विंशतिः। एते च जीवपदार्थेन लब्धाः। एवमजीवादिष्वष्टसु पदार्थेषु प्रत्येकं विंशतिर्विंशतिर्विकल्पा लभ्यन्ते। ततो विंशतिर्नवगुणिता शतमशीत्युत्तरं क्रियावादिनां भवति।

§ २७. तथा न कस्यचित्प्रतिक्षणमवस्थितस्य पदार्थस्य क्रिया संभवति उत्पत्त्यनन्तरमेव विनाशादित्येवं ये वदन्ति ते अक्रियावादिन[2] आत्मादिनास्तित्ववादिन इत्यर्थः। ते च[3] कोक्कुलकाण्ठेविद्धिरोमकसुगतप्रमुखाः। तथा चाहुरेके—

"[4]क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया।
भूतिर्ये ( र्यें ) षां क्रिया सैव कारणं सैव चोच्यते ॥१॥"

है पररूपसे नहीं। यह तो प्रसिद्ध ही है कि सभी पदार्थोंके स्वरूपका निश्चय परदार्थकी व्यावृत्ति करके ही होता है। जैसे दीर्घत्वादि–लम्बाई आदिकी अपेक्षासे ह्रस्वत्वादि–छुटाई आदिका स्वरूप निश्चित होता है। उसी तरह सभी पदार्थोंके स्वरूपका निर्णय पररूपके निश्चयकी अपेक्षा रखता है। इसी तरह स्तम्भादि जड़ पदार्थोंकी समीक्षा करनेके अनन्तर ही आत्मामें स्तम्भादिसे भेदबुद्धि होती है। अतः आत्माके स्वरूपका निश्चय परपदार्थके निरूपण करनेके बाद उससे व्यावृत्त बुद्धि होनेपर ही होता है। परपदार्थसे बिलकुल निरपेक्ष होकर किसी भी वस्तुका मात्र स्वतः ही निर्णय करना असम्भव है। इस तरह नित्य पदके 'स्वतः और परतः' इन दो भंगोंको काल आदि पाँचोंके साथ गुणा करनेपर दस विकल्प होते हैं। इसी तरह 'अनित्य' पदके भी दस भेद समझ लेने चाहिए। जिस प्रकार ये बीस विकल्प जीव पदार्थके होते हैं उसी तरह अजीव आदि अन्य आठ पदार्थोंके भी बीस-बीस ही विकल्प होते हैं। इस प्रकार बीस विकल्पोंको नव पदार्थोंसे गुणा करनेपर क्रियावादियोंके १८० भेद हो जाते हैं।

§ २७. अक्रियावादी क्रिया अर्थात् अस्तित्वका सर्वथा उच्छेद करते हैं। उनका कहना है कि सभी पदार्थ क्षणिक हैं। किसी भी क्षणिक पदार्थकी दूसरे क्षण तक सत्ता नहीं रहती अतः उसमें क्रियाकी सम्भावना ही नहीं है। और इसीलिए आत्मा आदि नित्य पदार्थोंका अस्तित्व नहीं है। कोक्कुल काण्ठेविद्धिरोमक सुगत आदि प्रमुख अक्रियावादी हैं। इन्हींमें-से किसीने कहा भी है कि—

"सभी संस्कार क्षणिक हैं। अस्थिर पदार्थोंमें क्रिया कैसे हो सकती है? अतः इन पदार्थों-

---

१. -रिक्ते बुद्धिः प. १, २, भ. १, २। २. "तथा नास्त्येव जीवादिकः पदार्थ इत्येवं वादिनः अक्रियावादिनः।"—सूत्र. शी. १।१२। आचा. शी. १।१।१।४। "अक्रियां क्रियाया अभावम्, न हि कस्यचिदप्यनवस्थितस्य पदार्थस्य क्रिया समस्ति तद्भावे च अनवस्थितेरभावादित्येवं ये वदन्ति ते अक्रियावादिनः। तथा चाहुरेके–'क्षणिकाः सर्वसंस्कारा……।' इत्यादि। अन्ये त्वाहुः–अक्रियावादिनो ये ब्रुवते किं क्रियया, चित्तशुद्धिरेव कार्या, ते च बौद्धा इति। अन्ये तु व्याख्यान्ति–अक्रियां जीवादिपदार्थो नास्तीत्यादिकां वदितुं शीलं येषां ते अक्रियावादिनः।"—भग. अभ. ३०।१। "—अक्रियावादिनो नास्तिका इत्यर्थः"—स्था. अभ. ४।४।३४५। नन्दि. मलय. पृ. २१५A। ३. "मरीचिकुमारकपिलोलूकगार्ग्यव्याघ्रभूतिवाद्धलिमाठरमौद्गलायनादीनामक्रियावाददृष्टीनां चतुरशीतिः।"—राजवा० पृ. ५१। ४. उद्धृतोऽयम्—"क्षणिकाः………भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते॥" बोधिचर्या. पं. पृ. ३७६। "तत्रेदमुक्तं भगवता–क्षणिकाः…भूतिर्येषां क्रिया सैव कारकं सैव………" —तत्त्वसं. पं. पृ. ११। "भूतिर्येषां क्रिया सैव कारकं सैव……" —नन्दि. मलय. पृ. २१५ A भग. अभ. ३०।१।

Jain Education International                For Private & Personal Use Only                www.jainelibrary.org

§ २८. एतेषां चतुरशीतिर्भवति । सा चामुनोपायेन द्रष्टव्या—पुण्यापुण्यवर्जितशेषजीवाजीवादिपदार्थसप्तकन्यासः, तस्य चाधः प्रत्येकं स्वपरविकल्पोपादानम्, असत्त्वादात्मनो नित्यानित्यविकल्पौ न स्तः, कालादीनां पञ्चानामधस्तात्षष्ठी यदृच्छा न्यस्यते । इह यदृच्छावादिनः सर्वेऽप्यक्रियावादिनस्ततः प्राग्यदृच्छा नोपन्यस्ता । ततं एवं विकल्पाभिलापः–'नास्ति जीवः स्वतः कालतः' इत्येको विकल्पः । अयं भावः–इह पदार्थानां लक्षणतः सत्ता निश्चीयते कार्यतो वा । न चात्मनस्तादृगस्ति लक्षणं येन तत्सत्तां प्रतिपद्येमहि । नापि कार्यमणूनामिव महीध्रादि संभवति, अतो

को भूति अर्थात् उत्पत्ति या एक क्षण स्थायिनी सत्ता ही क्रिया है और इसी भूतिको ही कारण या कारक कहते हैं ।"

§ २८. इनके चौरासी भेद इस प्रकार होते हैं—पुण्य और पापको छोड़कर जीवादि सात पदार्थोंको स्व और पर इन दोसे तथा काल, ईश्वर, आत्मा, नियति, स्वभाव और यदृच्छा इन छहसे गुणा करनेपर चौरासी भेद हो जाते हैं । अक्रियावादी आत्मा आदि नित्य पदार्थोंका असत्त्व मानते हैं अतः इनमें नित्य और अनित्य ये दो विकल्प नहीं होते हैं । जितने यदृच्छावादी हैं वे सब अक्रियावादी हैं अतः क्रियावादियोंकी भेद गणनामें यदृच्छा विकल्पको नहीं गिनाया है । अक्रियावादियोंका प्रथम विकल्प 'नास्ति जीवः स्वतः कालतः' अर्थात् 'जीव स्वतः नहीं है कालकी दृष्टिसे' इस प्रकारका होता है । इसका तात्पर्य यह है कि—पदार्थोंकी सत्ताका निश्चय या तो लक्षण अर्थात् असाधारण स्वरूपसे होता है या फिर उसका कार्य देखकर । परन्तु आत्माका कोई भी ऐसा असाधारण लक्षण नहीं है जिससे उसकी सत्ता साधी जा सके । जगत्में पर्वत आदि स्थूल कार्योंको देखकर उनके उत्पादक सूक्ष्म परमाणुरूप जगत्में कारणोंका अनुमान किया जाता है; पर

१. "तेषामपि जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षाख्याः सप्तपदार्थाः स्वपरभेदद्वयेन तथा कालयदृच्छानियतिस्वभावेश्वरात्मभिः षड्भिश्चिन्त्यमानाश्चतुरशीति विकल्पा भवन्ति । तद्यथा–'नास्ति जीवः स्वतः कालतः, नास्ति जीवः परतः कालतः' इति कालेन द्वौ लब्धौ । एवं यदृच्छानियत्यादिष्वपि द्वौ द्वौ भेदौ प्रत्येकं भवतः, सर्वेऽपि जीवपदार्थे द्वादश भवन्ति, एवमजीवादिषु प्रत्येकं द्वादश एते सप्तद्वादशकाः चतुरशीतिरिति ।" —आचा. शी. १।१।१।४ । सूत्र. शी. १।१२ । नन्दि. मलय. पृ. २१५A । स्था. अभ. ४।४।३४५ । "णत्थि सदो परदो वि य सत्त पयत्था य पुण्णपाऊणा । कालादियादिभंगा सत्तरि चदुपंति संजादा ॥ णत्थि य सत्तपदत्था णियदीदो कालदो तिपंतिभवा । चोद्दस इदि णत्थित्ते अक्किरियाणं च चुलसीदी ।"—गो. कर्म. गा. ७८४-८५ । २. "अयमत्रार्थः—नास्ति जीवः स्वतः कालत इति । इह पदार्थानां लक्षणेन सत्ता निश्चीयते कार्यतो वा । न चात्मनस्तादृगस्ति किंचिल्लक्षणं येन सत्तां प्रतिपद्येमहि । नापि कार्यमणूनामिव महीध्रादि संभवति । यच्च लक्षणकार्याभ्यां नाभिगम्यते वस्तु तन्नास्त्येव वियदिन्दीवरवत्, तस्मान्नास्त्यात्मेति । द्वितीयविकल्पोऽपि–यच्च स्वतो नात्मानं बिभर्ति गगनारविन्दादिकं तत् परतोऽपि नास्त्येव । अथवा सर्वपदार्थानामेव परभागादर्शनात् सर्वाविभागसूक्ष्मत्वाच्चोभयानुपलब्धेः सर्वानुपलब्धितो नास्तित्वमध्यवसीयते । उक्तं च–'यावद् दृश्यं परस्तावद्भागः स च न दृश्यते ।' इत्यादि । तथा यदृच्छातोऽपि नास्तित्वमात्मनः । का पुनर्यदृच्छा ? अनभिसंधिपूर्विका अर्थप्राप्तिर्यदृच्छा । 'अतर्कितोपस्थितमेव..........वृथाभिमानः ॥ सत्यं पिशाचाः स्म वने वसामो भेरीं कराग्रैरपि न स्पृशामः । यदृच्छया सिद्धयति लोकयात्रा भेरीं पिशाचाः परिताडयन्ति ॥ यथा काकतालीयमबुद्धिपूर्वकम्, न काकस्य बुद्धिरस्ति मयि तालं पतिष्यति, नापि तालस्याभिप्रायः काकोपरि पतिष्यामि, अथ च तत्तथैव भवति । एवमन्यदपि अतर्कितोपनतमजाकृपाणीयमातुरभेषजीयमन्धकण्टकीयमित्यादि द्रष्टव्यम् । एवं जातिजरामरणादिकं लोके यादृच्छिकं काकतालीयादिकल्पमवसेयमिति ।"—आचा. शी. १।१।१।४ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नास्त्यात्मेति। एवमीश्वरादिवाविभिरपि यदृच्छापर्यन्तैर्विकल्पा वाच्याः।[1] सर्वेऽपि मिलिताः षड्विकल्पाः। अमीषां च विकल्पानामर्थः प्राग्वद्भावनीयः।

§ २९. नवरं यदृच्छात इति यदृच्छावादिनां मते यदृच्छा ह्यनभिसंधिपूर्विकार्थप्राप्तिः। अथ के ते यदृच्छावादिनः? उच्यते–इह[2] ये भावानां संतानापेक्षया न प्रतिनियतं कार्यकारणभावमिच्छन्ति किंतु यदृच्छया ते यदृच्छावादिनः। ते ह्येवमाहुः–न खलु प्रतिनियतो वस्तूनां कार्यकारणभावस्तथा प्रमाणेनाग्रहणात्। तथाहि–शालूकादपि जायते शालूको गोमयादपि जायते शालूकः। वह्नेरपि जायते वह्निररणिकाष्ठादपि। धूमादपि जायते धूमोऽग्नीन्धनसम्पर्कादपि। कन्दादपि जायते कदली[3] बीजादपि। वटादयो बीजादुपजायन्ते शाखैकदेशादपि। गोधूमबीजादपि जायन्ते गोधूमा वंशबीजादपि। ततो न प्रतिनियतः क्वचिदपि कार्यकारणभाव इति। यदृच्छातः क्वचित्किंचिद्भवतीति प्रतिपत्तव्यम्। न खल्वन्यथा वस्तुसद्भावं पश्यन्तोऽन्यथात्मानं प्रेक्षावन्तः परिक्लेशयन्ति। यदुक्तम्–

---

आत्माका कोई भी स्थूल कार्य हमारे दृष्टिगोचर नहीं होता जिससे उसका अनुमान किया जाय। इस तरह प्रत्यक्ष और अनुमानका विषय न होनेके कारण आत्माका अस्तित्व सिद्ध नहीं होता अतः आत्मा नहीं है। इसी तरह ईश्वर आदि यदृच्छा पर्यन्त विकल्पोंकी अपेक्षासे 'नास्ति'की मीमांसा कर लेनी चाहिए। इन काल आदि छहों विकल्पोंमें कालादि पांचका अर्थ तो पहलेकी तरह ही समझना चाहिए।

§ २९. 'यदृच्छा' विकल्पका अर्थ इस प्रकार है–यदृच्छावादियोंके मतानुसार यदृच्छाका अर्थ है–बिना संकल्पके ही अर्थकी प्राप्ति होना, या जिसका विचार ही नहीं किया उसकी अतर्कित उपस्थिति होना। यदृच्छावादी पदार्थोंमें सन्तानकी अपेक्षासे निश्चित कार्यकारणभाव नहीं मानते। उनका कहना है कि पदार्थोंमें कोई नियत कार्यकारणभाव नहीं है किन्तु यदृच्छासे अर्थात् जो कोई भी पदार्थ जिस किसीसे भी उत्पन्न हो जाता है। वे कहते हैं कि पदार्थोंके प्रतिनियत कार्यकारणभावका किसी भी प्रमाणसे ग्रहण नहीं होता, अतः प्रतिनियत कार्यकारणभाव काल्पनिक ही है प्रामाणिक नहीं है। देखो, कमलकन्दसे भी कमलकन्द उत्पन्न होता है और गोबरसे भी कमलकन्दकी उत्पत्ति देखी जाती है। एक जगह अग्निकी उत्पत्ति अग्निसे देखते हैं तो दूसरी जगह अरणिके मन्थनसे भी अग्निकी उत्पत्ति प्रत्यक्ष सिद्ध है। एक जगह अग्नि और ईंधनके सम्पर्कसे यदि धूमका उत्पाद होता है तो दूसरी जगह धूमसे भी धूमकी पैदाइश दृष्टिगोचर होती है। केला कन्दसे भी उत्पन्न होता है और बीजसे भी। वट आदि वृक्ष बीजसे भी उत्पन्न होते हैं और डाली काटकर उसकी कलम लगानेपर भी उनकी उत्पत्ति देखी जाती है। एक जगह गेहूँके बीजसे गेहूँका अंकुर निकलता है तो दूसरी जगह बांसके बीजसे भी गेहूँका अंकुर लहलहाता हुआ निकल आता है। इस तरह ध्यानसे देखा जाये तो पदार्थोंमें कहीं भी निश्चित कार्यकारणभाव नहीं है। यदृच्छासे जो कोई जिस किसी भी पदार्थसे उत्पन्न हो जाता है। जब वस्तुओंका स्वरूप ही यादृच्छिक–अनियत है तब उसको प्रतिनियत कार्यकारणभावके शिकंजेमें क्यों कसा जाये? कोई भी बुद्धिमान् क्यों इस अप्रामाणिक कार्यके सिद्ध करनेमें अपनी बुद्धिको क्लेश देगा? कहा भी है–

---

१. सर्वे मिलिताः प. १, २, भ. १, २। २. नन्दि. मलय. पृ. ११५A। ३. कन्दली–क., प. १, २; भ. १, २।

Jain Education International                    For Private & Personal Use Only                    www.jainelibrary.org

"अतर्कितोपस्थितमेव सर्वं चित्रं जनानां सुखदुःखजातम् ।
काकस्य तालेन यथाभिघातो न बुद्धिपूर्वोऽस्ति वृथाभिमानः ॥१॥"

[ आचा० २।१।१।१४ ] इत्यादि ।

**§ ३०. [1]वृष्टमेव सर्वं जातिजरामरणादिकं लोके [2]काकतालीयाभमिति । तथा च स्वतः षड्विकल्पा लब्धास्तथा नास्ति परतः कालत इत्येवमपि षड्विकल्पा लभ्यन्ते । सर्वेऽपि मिलिता द्वादश विकल्पा जीवपदेन लब्धाः । एवमजीवादिष्वपि षट्सु पदार्थेषु प्रत्येकं द्वादशद्वादश विकल्पा लभ्यन्ते । ततो द्वादशभिः सप्त गुणिताश्चतुरशीतिर्भवन्त्यक्रियावादिनां विकल्पाः ।**

**§ ३१. तथा कुत्सितं[3] ज्ञानमज्ञानं तदेषामस्तीत्यज्ञानिकाः । "[4]अतोऽनेकस्वरात्" [ हैम० ७।२ ] इति मत्वर्थीय इकप्रत्ययः । अथवाऽज्ञानेन चरन्तीत्यज्ञानिकाः, असंचिन्त्यकृतकर्मबन्धवैफल्यादिप्रतिपत्तिलक्षणाः [5]शाकल्यसात्यमुग्रिमौदपिप्पलादबादरायणजैमिनिवसुप्रभृतयः । ते ह्येवं**

---

"जिस प्रकार 'काकतालीय' न्यायमें तालवृक्षसे गिरते हुए तालफलसे जुड़ते हुए कौवेकी टक्कर अकस्मात् बिना विचारे ही होती है, उसी तरह इस संसारमें सभी प्राणियोंको नाना प्रकारके सुख-दुःख अतर्कितोपस्थित—बिना विचारे ही अपने आप ही हो जाते हैं। सुख-दुःखकी उत्पत्तिमें किसीका भी बुद्धिपूर्वक व्यापार नहीं होता। अतः इस यादृच्छिक जगत्में 'अहं करोमि—मैं करता हूँ' यह अहंकार करना व्यर्थ है। कोई किसीका कुछ भी नहीं करता, सब यों ही होता रहता है।"

§ ३०. संसारी प्राणियोंकी उत्पत्ति बुढ़ापा तथा मरण आदि सभी काकतालीय न्यायसे अचानक—पूर्वसूचनाके बिना ही होते हैं, यह तो सबके अनुभवकी ही बात है। इस तरह 'स्वतः' की अपेक्षा छह भेद हुए। 'नास्ति परतः कालतः—परतः नहीं है कालकी अपेक्षासे' इस तरह 'परतः' की अपेक्षा भी छह भंग समझना चाहिए। जिस प्रकार जीवके ये १२ भेद 'स्वतः परतः' की अपेक्षा होते हैं उसी तरह अजीवादि छहके भी बारह-बारह विकल्प समझना चाहिए। इस प्रकार सातों जीवादि पदार्थोंका बारह विकल्पोंसे गुणा करने पर (७ × १२) अक्रियावादियोंके चौरासी भेद हो जाते हैं।

§ ३१. खोटे ज्ञानको अज्ञान कहते हैं, खोटे ज्ञानवाले अज्ञानिक–अज्ञानवादी हैं। अज्ञानशब्दसे 'अतोऽनेकस्वरात्' सूत्रसे मत्वर्थीय इक प्रत्यय करनेपर अज्ञानिक शब्द सिद्ध होता है। अथवा अज्ञानपूर्वक जिनका आचरण—व्यवहार है उन्हें अज्ञानिक कहते हैं। इनका सिद्धान्त है कि—बिना विचारे अज्ञानपूर्वक किया गया कर्मबन्ध विफल हो जाता है, वह दारुण दुःख नहीं देता। इत्यादि शाकल्य, सात्यमुग्रि, मौद, पिप्पलाद, बादरायण, जैमिनि तथा वसु आदि प्रमुख अज्ञानवादी

---

१. दुष्ट—आ. । २. –तालीयाभ्यामिति क. । —तालीयाभाविति प. १, २ । ३. "हिताहितपरीक्षाविरहोऽज्ञानिकत्वम्"—सर्वार्थसि. ८।१ । "तथा न ज्ञानमज्ञानं तद्विद्यते येषां तेऽज्ञानिनः, ते ह्यज्ञानमेव श्रेय इत्येवं वदन्ति ।"—सूत्र. शी. १।१२ । स्था. अभ. ४।४।३४५ । "कुत्सितं ज्ञानमज्ञानं तद्येषामस्ति ते अज्ञानिकाः ते च वादिनश्चेत्यज्ञानिकवादिनः । ते चाज्ञानमेव श्रेयः, असञ्चिन्त्यकृतकर्मबन्धवैफल्यात्, तथा न ज्ञानं कस्यापि क्वचिदपि वस्तुन्यस्ति प्रमाणानामसंपूर्णवस्तुविषयत्वादित्याद्यभ्युपगमवन्तः ।"—भग. अभ. ३०।१ । अथवा अज्ञानेन चरन्तीति अज्ञानिकाः असञ्चिन्त्यकृतबन्धवैफल्यादिप्रतिपत्तिलक्षणाः । तथाहि ते एवमाहुः—न ज्ञानं श्रेयः…" —नन्दि. मलय. पृ. २१०B । ४. ततोऽनेक—आ., क., प. १, २, भ. १ । ५. "शाकल्यवाल्कलकुथुमिसात्यमुद्रिनारायणकण्ठमाध्यन्दिनमौदपैप्पलादबादरायणाम्बष्ठीकृदौरिकायनवसुजैमिन्यादीनामज्ञानकुदृष्टीनां सप्तषष्टिः ।"—राजवा. पृ. ५१ ।

ब्रुवते-न ज्ञानं श्रेयः, तस्मिन् सति विरुद्धप्ररूपणायां विवादयोगतश्चित्तकालुष्यादिभावतो दीर्घतरसंसारप्रवृत्तेः । यदा पुनरज्ञानमाश्रीयते तदा नाहंकारसंभवो नापि परस्योपरि चित्तकालुष्यभावः, ततो न बन्धसंभवः । अपि च, यः संचिन्त्य क्रियते कर्मबन्धः, स दारुणविपाकोऽत एवावश्यं[1] वेद्यः, तस्य तीव्राध्यवसायतो निष्पन्नत्वात् । यस्तु मनोव्यापारमन्तरेण कायवाक्कर्मप्रवृत्तिमात्रतो विधीयते, न तत्र मनसोऽभिनिवेशस्ततो नासाववश्यं[2] वेद्यो नापि तस्य दारुणो विपाकः । केवलमतिशुष्कसुधापङ्कधवलितभित्तिगतरजोमल इव स[3] कर्मसंगः स्वत एव शुभाध्यवसायपवनविक्षोभितोऽपयाति । मनसोऽभिनिवेशाभावश्चाज्ञानाभ्युपगमे समुपजायते, ज्ञाने सत्यभिनिवेशसंभवात् । तस्मादज्ञानमेव मुमुक्षुणा मुक्तिपथप्रवृत्तेनाभ्युपगन्तव्यं न ज्ञानमिति[4] ।

§ ३२. अन्यच्च, भवेद्युक्तो ज्ञानस्याभ्युपगमः, यदि ज्ञानस्य निश्चयः, कर्तुं[5] पार्येत । यावता स एव न पार्यते[6] । तथाहि-सर्वेऽपि दर्शनिनः परस्परं भिन्नमेव ज्ञानं प्रतिपन्नाः, ततो न निश्चयः कर्तुं शक्यते 'किमिदं[7] सम्यगुतेदम्' इति । अथ यत्सकलवस्तुस्तोमसाक्षात्कारिभगवद्वर्धमानोपदेशा-

---

रहे हैं । इनका कथन है कि ज्ञान कल्याणकारी नहीं है । यह ज्ञान हो तमाम वितण्डावादोंकी सृष्टि करता है । इस ज्ञानसे ही एक वादी दूसरेके विरुद्ध तत्त्व प्ररूपण करके विवादका अखाड़ा बनाता है । वादविवादसे चित्तमें कलुषता आदि दोष होते हैं और उससे दीर्घ संसारमें भ्रमण होता है । जब इस अनर्थमूल ज्ञानको छोड़कर अज्ञानका आश्रय लेते हैं तब 'मेरा यह सिद्धान्त है, मैं तुम्हारा खण्डन करूँगा' इत्यादि ज्ञानमूलक अहंकार कभी उत्पन्न ही नहीं हो सकता । और अहंकार न होनेसे दूसरेके ऊपर कलुषता न हो सकेगी । इस तरह चित्तमें कालुष्यके न होनेसे कर्मबन्धकी कभी भी सम्भावना ही नहीं है । इसी तरह, जो कार्य विचार कर जान-बूझकर किये जाते हैं उनसे दारुण फल देनेवाला कर्मबन्ध होता है, और उस कर्मबन्धका कठोर फल अवश्य ही भुगतना पड़ता है । तीव्र अध्यवसायसे अर्थात् बुद्धिपूर्वक होनेवाले कषायावेशसे जो कर्मबन्ध होता है वह अकाट्य होता है, उसका फल भोगना ही पड़ता है, इस कर्मकी गति टारै नाँहि टरै । किन्तु जो कर्म मनके अभिप्रायके बिना ही केवल वचन और कायकी प्रवृत्तिमात्रसे उपार्जित किये जाते हैं, उनमें चित्तका तीव्राभिनिवेश-अत्यन्त कषायवृत्ति न होनेसे उनका फल भी अवश्य ही नहीं भुगतना पड़ता, ये फल दिये बिना भी झड़ सकते हैं और यदि इसने फल भी दिया तो इनका दारुण फल नहीं होता । अज्ञानपूर्वक होनेवाला कर्मबन्ध तो जिस दीवालपर पोता गया चूना खूब सूख गया है उस शुष्क भित्तिपर आयी हुई धूलके समान है, जो थोड़ी-सी भी शुभ-अध्यवसाय रूप हवाके चलनेसे अपने ही आप झड़ जाती है । 'मनमें रागद्वेषादि रूप अभिनिवेश उत्पन्न न होने देनेका सबसे सरल उपाय है ज्ञानपूर्वक व्यापारको छोड़कर अज्ञानमें ही सन्तोष करना । क्योंकि जबतक ज्ञान रहेगा तबतक वह कुछ-न-कुछ रागद्वेषादिरूप उत्पात करता रहेगा, वह कभी शान्त रहनेवाला नहीं है । अतः मोक्षके अभिलाषी मोक्षमार्गमें लगे हुए मुमुक्षुको अज्ञान ही साधक हो सकता है, ज्ञान नहीं ।

§ ३२. दूसरी बात यह है कि ज्ञान तो तब उपादेय कहा जा सकता है जब ज्ञानके स्वरूपका ठीक-ठीक निश्चय हो जाये । पर संसारमें अनेकों मत-मतान्तर हैं और जब सभी अपने तत्त्वज्ञानको सच्चा कहते हैं तब 'कौन सच्चा है ?' यही जानना सबसे कठिन कार्य क्या, असम्भव ही है । सभी दर्शनवाले जब अपनी-अपनी ढाई चावलकी खिचड़ी अलग-अलग पका रहे हैं, अपने-अपने सिद्धान्तोंमें सत्यताकी दुहाई देते हैं, तब 'यह सच्चा कि यह' यही विवेक करना कठिन हो रहा है । जैन लोग जब यह कहते हैं कि—'समस्त वस्तुओंका हस्तामलकवत् साक्षात्कार करनेवाले

---

१.–वश्यवेद्यः क., प. १, २, भ. १, २ । २. –वश्यवे–भ. २ । ३. सकलसंगः भ. २ । ४. –मिति च–भ. २ । ५. पार्यते क. । ६. पार्येत आ. । ७. उत वेदमिति भ. २ ।



Jain Education International    For Private & Personal Use Only    www.jainelibrary.org

दुपजायते[1] ज्ञानं तत् सम्यग्, नेतरत्, असर्वज्ञमूलत्वादिति चेत्; सत्यमेतत्; किं तु स एव सकलवस्तुस्तोमसाक्षात्कारी, न तु सौगतादिसंमतः सुगतादिरिति कथं प्रतीयते, तद्ग्राहकप्रमाणाभावादिति तदवस्थः संशयः। ननु यस्य दिवः समागत्य देवाः पूजादिकं कृतवन्तः, स एव वर्धमानः सर्वज्ञः, न शेषाः सुगतादय इति चेत्; न; वर्धमानस्य चिरातीतत्वेनेदानीं तद्भावग्राहकप्रमाणाभावात्। संप्रदायादवसीयत इति चेत्। ननु सोऽपि संप्रदायो धूर्तपुरुषप्रवर्तितः, किं वा सत्यपुरुषप्रवर्तित इति कथमवगन्तव्यम्, प्रमाणाभावात्। न चाप्रमाणकं[2] वयं प्रतिपत्तुं क्षमाः। मा प्रापदतिप्रसङ्गः। अन्यच्च, मायाविनः स्वयमसर्वज्ञा अपि जगति स्वस्य सर्वज्ञभावं प्रविकटयिषवस्तथाविधेन्द्रजालवशाद्दर्शयन्ति देवानितस्ततः संचरतः स्वस्य पूजादिकं कुर्वतः, ततो देवाऽऽगमदर्शनादपि कथं तस्य सर्वज्ञत्वनिश्चयः। तथा चाह जैन एव स्तुतिकारः समन्तभद्रः—

"देवाऽऽगम-नभोयान-चामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान् ॥१॥" [ आप्तमी. १।१ ]

§ ३३. भवतु वा वर्धमानस्वामी सर्वज्ञः। तथापि 'तस्य सत्कोऽयमाचाराङ्गादिक उपदेशः

---

भगवान् वर्धमानके उपदेशसे होनेवाला ज्ञान सम्यग्ज्ञान है, दूसरे मतोंका उपदेश तो असर्वज्ञोंने किया है, अतः उनके मतसे होनेवाला ज्ञान मिथ्या ज्ञान है।' तब मनमें सहज ही यह विकल्प आता है कि—वर्धमान ही सर्वज्ञ थे, वे ही समस्त वस्तुओंका साक्षात्कार करते थे, बौद्धादि मतवालोंके देव सुगत, कपिल आदि सर्वज्ञ नहीं थे' यह कैसे माना जाये ? वर्धमानकी सर्वज्ञता तथा सुगतादिकी असर्वज्ञताको ग्रहण करनेवाला कोई प्रमाण ही जब नहीं मिलता तब यह सन्देह और भी पुष्ट हो जाता है कि—'कौन सर्वज्ञ थे-वर्धमान या सुगतादि ?'। 'स्वर्गसे देवता आकर वर्धमानकी पूजा करते थे उनके प्रातिहार्य थे इसलिए वर्धमान ही सर्वज्ञ थे, सुगतादि नहीं' यह तर्क तो बिलकुल लँगड़ा है; क्योंकि वर्धमानका निर्वाण हुए करीब २॥ हजार वर्ष बीत चुके हैं, 'उस समय देव आये थे या नहीं' यही सन्दिग्ध है। देवोंकी बात जाने दीजिए 'वर्धमान हुए भी थे इसीको सिद्ध करनेवाला कोई प्रमाण आज नहीं मिलता।' 'यदि भगवान् वर्धमान न होते तो आजकल जो जैन सम्प्रदाय चल रहा है उसे किसने चलाया ? अतः इसी सम्प्रदाय प्रवर्तनके कारण उनका अस्तित्व और उनकी सर्वज्ञता सिद्ध होती है' यह कहना भी असंगत है; क्योंकि–'यह सम्प्रदाय स्वयं वर्धमानने चलाया है या किसी धूर्तने ?' इसीका निश्चय करना, साधक प्रमाणका अभाव होनेसे कठिन है। बिना प्रमाणके तो हम एक भी बात स्वीकार नहीं कर सकते। इस तरह इस चर्चामें अब अधिक कहनेकी आवश्यकता नहीं है। संसारमें मायावी लोग स्वयं असर्वज्ञ रहकर भी जगत्में अपनी सर्वज्ञताका ढिंढोरा पीटनेके लिए नाना प्रकारसे इन्द्रजाल करके देवोंका आकाशसे आना-जाना, उनके द्वारा अपनी पूजा कराना आदि चमत्कार दिखाते हैं। इसलिए देवोंके आनेसे या उनके द्वारा पूजित होने मात्रसे सर्वज्ञताका निश्चय कैसे किया जा सकता है ? तुम्हारे जैनमतके ही स्तुतिकार आचार्य समन्तभद्रने स्वयं ही कहा है कि "देवोंका आगमन, आकाशमें विहार करना तथा चँवर-छत्र आदि विभूतियाँ मायावियोंमें भी देखी जाती हैं। इसलिए हे वीर ! तुम हम-जैसे परीक्षकोंपर अपनी महत्ता, इन देवागम-जैसी साधारण वस्तुओंसे नहीं जमा सकते। अर्थात् इन मायावी साधारण देवागम आदिसे तुम हमारे महान् पूज्य नहीं हो सकते ॥१॥"

§ ३३. अथवा, 'वर्धमान स्वामीको सर्वज्ञ मान भी लिया जाये तब भी यह जो आचारांग

---

१. –ते तत्स–म. २। २. –णकं प्रतिपत्तुं क्षमा वयं मा म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

न पुनः केनापि धूर्तेन स्वयं विरचय्य प्रवर्तितः' इति कथमवसेयम्, अतीन्द्रिये विषये प्रमाणाभावात्[1]। भवतु वा तस्यैवायमुपदेशस्तथापि तस्यायमर्थो नान्य इति न शक्यं प्रत्येतुम्। नानार्था हि शब्दा लोके प्रवर्तन्ते, तथादर्शनात्। ततोऽन्यथाप्यर्थसंभावनायां कथं विवक्षितार्थनियमनिश्चयः[2]। छद्मस्थेन हि परचेतोवृत्तेरप्रत्यक्षत्वात् कथमिदं ज्ञायते–'एष सर्वज्ञस्याभिप्रायोऽनेन [3]चाभिप्रायेणायं शब्दः प्रयुक्तो नाभिप्रायान्तरेण' इति। तदेवं दीर्घतरसंसारकारणत्वात् सम्यग्निश्चयाभावाच्च न ज्ञानं श्रेयः, किं त्वज्ञानमेवेति स्थितम्।

§ ३४. ते चाज्ञानिकाः सप्तषष्टिसंख्या अमुनोपायेन प्रतिपत्तव्याः। इह जीवाजीवादीन् पदार्थान् क्वचित् पट्टकादौ व्यवस्थाप्य पर्यन्त उत्पत्तिः स्थाप्यते। तेषां च जीवादीनां नवानां प्रत्येकमधः

---

आदिमें महावीरके नामसे प्रचलित उपदेश निबद्ध हैं वे उपदेश महावीरने ही दिये थे या किसी धूर्तने स्वयं बनाकर उनके नामसे प्रचलित किये हैं?' इसका निश्चय किस प्रकार किया जाये? जो बात आंखोंके सामने नहीं है अतीन्द्रिय है उसको सिद्ध करनेवाला तो कोई प्रमाण ही नहीं मिलता। अथवा यह भी मान लिया जाये कि—भगवान् महावीरने ही इन आचारांग आदिका उपदेश किया था, फिर भी 'इन शब्दोंका यही अर्थ है दूसरा नहीं' इसका निश्चय कौन कैसे करेगा? जगत्में एक ही शब्दके अनेक अर्थ देखे जाते हैं। इसलिए जो अर्थ आपको विवक्षित है उससे विपरीत अर्थ यदि उन्हीं शब्दोंका निकलता है तब अर्थका नियम कैसे होगा? 'भगवान् वर्धमानके चित्तमें इन शब्दोंका यही अर्थ था' यह तो अल्पज्ञानी हम लोग जान ही नहीं सकते। अतः 'सर्वज्ञका यह अभिप्राय है, इसी अभिप्रायसे उनने इन शब्दोंका प्रयोग किया है, दूसरे अभिप्रायसे नहीं' यह जानना नितान्त असम्भव है। सारांश यह है कि यह ज्ञान ही अनेक झगड़ोंकी जड़ है। इसीसे (अहंकारपूर्वक राग-द्वेष होकर) अनन्त संसारकी वृद्धि होती है। और इसका सम्यग् निश्चय करना भी अत्यन्त कठिन है। इस अनर्थमूल ज्ञानसे कभी कल्याण नहीं हो सकता, अतः 'अज्ञान ही श्रेयःसाधक है' यही अन्तिम निष्कर्ष निकलता है।

§ ३४. इन अज्ञानवादियोंके ६७ प्रकार इस तरह समझना चाहिए—किसी पट्टी आदिपर जीवादि नव पदार्थोंको एक पंक्तिमें लिखकर अन्तमें दशवें स्थानपर 'उत्पत्ति' नामका पद लिखना

---

१. –र्थभाव–म. २। २. –तार्थे निश्चयः क.। ३. चाभि–म. २। ४. "ते चामी–जीवादयो नव पदार्थाः उत्पत्तिश्च दशमी, 'सत् असद् सदसत् अवक्तव्यः सदवक्तव्यः असदवक्तव्यः सदसदवक्तव्यः' इत्येतैः सप्तभिः प्रकारैः विज्ञातुं न शक्यन्ते, न च विज्ञातैः प्रयोजनमस्ति। भावना चेयम्–सन् जीव इति को वेत्ति। किं वा तेन ज्ञातेन। असन् जीव इति को जानाति। किं वा तेन ज्ञातेन। इत्यादि। एवमजीवादिष्वपि प्रत्येकं सप्त विकल्पाः। नवसप्तकाः त्रिषष्टिः। अमी चान्ये चत्वारः त्रिषष्टिमध्ये प्रक्षिप्यन्ते; तद्यथा–सती भावोत्पत्तिरिति को जानाति। किं वाऽनया ज्ञातया। एवमसती सदसती अवक्तव्या भावोत्पत्तिरिति को वेत्ति। किं वानया ज्ञातयेति? शेषविकल्पत्रयमुत्पत्त्युत्तरकालं पदार्थावयवापेक्षमतोऽत्र न संभवतीति नोक्तम्। एतच्चतुष्टयप्रक्षेपात् सप्तषष्टिर्भवन्ति।" —आचा. शी. १।१।१।४। नन्दि. मलय. पृ. २१७A। सूत्र. शी. १।१२। स्था. अभ. ४।४।३४५। "को जाणइ णवभावे सत्तमसत्तं दयं अवच्चमिदि। अवयणजुदसत्ततयं इदि भंगा होंति तेसट्ठी॥ को जाणइ सत्तचऊ भावं सुद्धं खु दोण्णिपंतिभवा। चत्तारि होंति एवं अण्णाणीणं तु सत्तट्ठी॥—जीवादि नवपदार्थेषु एकैकस्य अस्त्यादिसप्तभङ्गेषु एकैकेन जीवोऽस्तीति को जानाति। जीवो नास्तीति को जानाति। इत्याद्यालापे कृते त्रिषष्टिर्भवन्ति। पुनः शुद्धपदार्थं इति लिखित्वा तदुपरि अस्ति नास्ति अस्तिनास्ति अवक्तव्य इति चतुष्कं लिखित्वा एतत्पङ्क्तिद्वयसंभवाः खलु भङ्गाः शुद्धपदार्थोऽस्तीति को जानीते। इत्यादयश्चत्वारो भवन्ति। एवं मिलित्वा अज्ञानवादाः सप्तषष्टिः।"—गो. कर्म. टी. गा. ८८६–८७।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

सप्त सत्त्वादयो न्यस्यन्ते। तद्यथा–सत्त्वम्, असत्त्वम्, सदसत्त्वम्, अवाच्यत्वम्, सदवाच्यत्वम्, असदवाच्यत्वम्, सदसदवाच्यत्वं चेति। तत्र सत्त्वं स्वरूपेण विद्यमानत्वम्। असत्त्वं पररूपेणाविद्यमानत्वम्। सदसत्त्वं स्वरूपपररूपाभ्यां विद्यमानाविद्यमानत्वम्।[1] →तत्र यद्यपि सर्वं वस्तु स्वपररूपाभ्यां सर्वदैव स्वभावत एव सदसत्, तथापि क्वचित्किंचित्कदाचिदुद्भूतं प्रमात्रा विवक्ष्यते, तत एवं त्रयो विकल्पा भवन्ति←। तथा तदेव सत्त्वमसत्त्वं च यदा युगपदेकेन शब्देन वक्तुमिष्यते तदा तद्वाचकः शब्दः कोऽपि न विद्यत इत्यवाच्यत्वम्।[2] →एते चत्वारो विकल्पाः सकलादेशा इति सकलवस्तुविषयत्वात्←।४। यदा त्वेको भागः सन्नपरश्चावाच्यो युगपद्विवक्ष्यते तदा सदवाच्यत्वम्। यदा त्वेको भागोऽसन्नपरश्चावाच्यस्तदासदवाच्यत्वम्। यदा त्वेको भागः सन्नपरश्चासन्नपरतरश्चावाच्यस्तदा सदसदवाच्य [त्व] मिति। न चैतेभ्यः[3] सप्तभ्यो विकल्पेभ्योऽन्यो विकल्पः संभवति, सर्वस्यैतेष्वेवान्तर्भावात्। ततः सप्त विकल्पा उपन्यस्ताः। सप्त च विकल्पा नवभिर्गुणिता जातास्त्रिषष्टिः। उत्पत्तेश्चत्वार एवाद्या[4] विकल्पाः। तद्यथा–सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं चेति। शेषविकल्पत्रयं तूत्पत्त्युत्तरकालं पदार्थावयवापेक्षमतोऽत्रासंभवीति नोक्तम्। एते चत्वारो विकल्पास्त्रिषष्टिमध्ये प्रक्षिप्यन्ते ततः सप्तषष्टिर्भवन्ति[5]। ततः[6] 'को जानाति जीवः सन्' इत्येको विकल्पः, न कश्चिदपि

---

चाहिए। जीवादि नव पदार्थोंके नीचे सत्त्व असत्त्व आदि सात भंग स्थापित करना चाहिए। वे सात भंग इस प्रकार हैं—१ सत्त्व, २ असत्त्व, ३ सदसत्त्व, ४ अवाच्यत्व, ५ सदवाच्यत्व, ६ असदवाच्यत्व, ७ सदसदवाच्यत्व। १. सत्त्व—वस्तु अपने स्वरूपसे है। २. असत्त्व—वस्तु पररूपसे नहीं है। ३. सदसत्त्व—वस्तु स्वरूपकी अपेक्षा सत् तथा पररूपकी अपेक्षा असत् होनेसे क्रमशः दोनों अपेक्षाओंसे सदसदुभय रूप है। यद्यपि वस्तु स्वभावसे हमेशा ही सदसद्–उभयधर्मवाली है फिर भी जो अंश प्रयोग करनेवालेको विवक्षित होता है तथा उद्भूत होता है उसी अंशसे वस्तुका सत् असत् या क्रमशः विवक्षित सदसत् रूपसे व्यवहार हो जाता है। ४. अवाच्यत्व—जब सत्त्व और असत्त्व दोनों ही धर्मोंको एक साथ एक ही शब्दसे कहनेकी इच्छा होती है तब युगपत् दोनों धर्मोंको प्रधानरूपसे कहनेवाले शब्दका अभाव होनेसे वस्तु अवक्तव्य है। ये चार भंग सकलवस्तुको विषय करनेके कारण सकलादेश कहलाते हैं। ५. सदवाच्यत्व—जब एक अंश सद्रूपसे तथा दूसरा अवक्तव्यरूपसे विवक्षित होता है तब वस्तु सदवाच्य होती है। ६. असदवाच्य—जब एक भाग असद्रूपसे तथा दूसरा अवाच्यरूपसे विवक्षित होता है तब वस्तु असदवाच्यरूप होती है। ७. सदसदवाच्य—जब एक भाग सत् दूसरा असत् तथा तीसरा अवाच्यरूपसे विवक्षित होता है तब वस्तु सदसदवाच्यरूप होती है। इन सातों भंगोंको जीवादि नव पदार्थोंसे गुणा करनेपर (७×९) ६३ भंग होते हैं। दसवें यह 'उत्पत्ति'के सत्, असत्, उभय, तथा अनुभय–अवाच्य ये चार ही विकल्प होते हैं। बाकीके तीन भंग तो उत्पत्तिके बाद जब पदार्थकी सत्ता हो जाती है तब उसके अवयवोंकी अपेक्षा बनते हैं। इस तरह उत्पत्तिके चार भंगोंको उक्त ६३ भंगोंमें मिलानेपर

---

१. →←एतदन्तर्गतः पाठो नास्ति क., प. १, २, म. १। २. →←एतदन्तर्गतः पाठो नास्ति क., प. १, २, म. १। ३. –भ्योऽत्र सप्तभ्यो म. २। ४. –द्या विकल्पास्त्रिषष्टिमध्ये प्रक्षिप्यन्ते ततः सप्तषष्टिर्भवन्ति। तत्र को जानाति जीवः सन्निति एको विकल्पो भाव्यते। कोऽर्थः, जीवो वर्तत इति न कश्चिदपि जानापि म. २। ५. भवति प. १, २, म. १, २। ६. "तत्र सन् जीव इति को वेत्ति' इत्यस्यायमर्थः—न कस्यचिद्विशिष्टं ज्ञानमस्ति योऽतीन्द्रियान् जीवादीनवभोत्स्यते, न च तैर्ज्ञातैः किंचित्फलमस्ति। तथाहि—यदि नित्यः सर्वगतोऽमूर्तो ज्ञानादिगुणोपेत एतद्गुणव्यतिरिक्तो वा, ततः कृतमस्य पुरुषार्थस्य सिद्धिरिति तस्मादज्ञानमेव श्रेयः। अपि च, तुल्येऽप्यपराधे अकामकरणे लोके स्वल्पो दोषः, लोकोत्तरेऽपि आकुट्टिकानाभोगसहसाकारादिषु क्षुल्लकभिक्षुकस्थविरोपाध्यायसूरीणां यथाक्रममुत्तरोत्तरं प्रायश्चित्तमिति।"—आचा. शी. ११११४। नन्दि, मलय. पृ. २१७ बी.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

जानाति, तद्ग्राहकप्रमाणाभावादिति भावः। ज्ञातेन वा किं तेन प्रयोजनम्, ज्ञानस्याभिनिवेशहेतुतया परलोकप्रतिपन्थित्वात्। एवमसदादयोऽपि विकल्पा भावनीयाः। 'उत्पत्तिरपि किं सतोऽसतः सदसतोऽवाच्यस्य वा' इति को जानाति, ज्ञातेन वा न किंचिदपि प्रयोजनमिति।

§ ३५. तथा विनयेन चरन्तीति वैनयिकाः[1], वसिष्ठपराशरवाल्मीकिव्यासेलापुत्रसत्यदत्तप्रभृतयः[2]। एते चानवधृतलिङ्गाचारशास्त्रा विनयप्रतिपत्तिलक्षणा वेदितव्याः। ते च द्वात्रिंशत्संख्या अमुनोपायेन द्रष्टव्याः। सुरनृपतियतिज्ञातिस्थविराधममातृपितृष्वष्टसु स्थानेषु कायेन मनसा वाचा दानेन च देशकालोपपन्नेन विनयः कार्य इति चत्वारः कायादयः स्थाप्यन्ते। चत्वारश्चाष्टभिर्गुणिता जाता द्वात्रिंशत्[3]। एवमेतानि त्रीणि शतानि त्रिषष्ट्यधिकानि परदर्शनानां भवन्ति।

अज्ञानवादियोंके कुल ६७ भेद हो जाते हैं।

अज्ञानवादी कहते हैं कि—कौन जानता है कि 'जीव सत् है'? जीवकी सत्ता सिद्ध करनेवाला कोई प्रमाण नहीं है अतः उसकी सत्ताको कोई सिद्ध नहीं कर सकता। अथवा जीवकी सत्ताका ज्ञान भी हो जाये तो उससे कोई प्रयोजन सिद्ध नहीं होता, प्रत्युत ज्ञान अहंकारमें कारण होनेसे परलोकका बिगाड़नेवाला ही है। इसी तरह 'जीवो नास्ति' इत्यादि विकल्पोंमें अज्ञानवादकी प्रक्रिया समझ लेनी चाहिए। इसी तरह उत्पत्ति सत्की होती है, या असत्की, अथवा उभयात्मककी, या अवाच्यकी? यह सब कौन जान सकता है? इसके जाननेसे कोई प्रयोजन भी सिद्ध नहीं होता। इसलिए इन सबके समझनेमें माथापच्ची करना व्यर्थ ही है। इत्यादि।

§ ३५. विनयपूर्वक जिनका आचार-व्यवहार है वे वैनयिक कहलाते हैं। वसिष्ठ, पाराशर, वाल्मीकि, व्यास, इलापुत्र, सत्यदत्त आदि प्रमुख वैनयिक हुए हैं। इनका वेष, आचार तथा शास्त्र आदि कुछ भी निश्चित नहीं हैं, हर एक शास्त्र, वेष तथा आचार इन्हें इष्ट है। विनय करना ही इनका मुख्य कर्तव्य है। इनके बत्तीस भेद इस प्रकार समझना चाहिए—देवता, राजा, साधु, ज्ञाति, वृद्ध, अधम, माता तथा पिता इन आठोंकी मन, वचन, काय तथा देश-कालानुसार दान देकर विनय की जाती है। अतः देवता आदि आठको मन, वचन आदि चारसे गुणा करनेपर वैनयिकोंके बत्तीस भेद सिद्ध होते हैं। इस तरह क्रियावादी, अक्रियावादी आदि सभीके कुल भेद ३६३ होते हैं। ये सभी परदर्शन हैं।

१. "सर्वदेवतानां सर्वसमयानां च समदर्शनं वैनयिकम्"—सर्वार्थसि. ८।१। "तथा विनयादेव मोक्ष इत्येवं गोशालकमतानुसारिणो विनयेन चरन्तीति वैनयिका व्यवस्थिताः"—सूत्र. शी. १।६।२७। "तथा वैनयिका विनयादेव केवलात् स्वर्गमोक्षावाप्तिमभिलषन्तः मिथ्यादृष्टयः…"—सूत्र. शी. १।१२। "विनयेन चरति स वा प्रयोजन एषामिति वैनयिकाः, ते च ते वादिनश्चेति वैनयिकवादिनः, विनय एव वा वैनयिकं तदेव ये स्वर्गादिहेतुतया वदन्त्येवंशीलाश्च ते वैनयिकवादिनः विधृतलिङ्गाचारशास्त्राविनयप्रतिपत्तिलक्षणाः…"—भग. अभ. ३०।१। स्था. अभ. ४।४।३४५। २. "वसिष्ठपाराशरजतुकर्णिवाल्मीकिरोमर्षिसत्यदत्तव्यासैलापुत्रोपमन्यवैन्द्रदत्तायस्थूणादीनां वैनयिकदृष्टीनां द्वात्रिंशत्। एषां दृष्टिशतानां त्रयाणां त्रिषष्ट्युत्तराणां प्ररूपणं निग्रहश्च दृष्टिवादे क्रियते।"—राजवा. पृ. ५१। ३. "सुरनृपयतिज्ञातिस्थविराधममातृपितृष्वष्टसु मनोवाक्कायप्रदानचतुर्विधविनयकरणात्। तद्यथा देवानां विनयं करोति मनसा वाचा कायेन तथा देशकालोपपन्नेन दानेनेत्येवमादि। एते च विनयादेव स्वर्गापवर्गमार्गमभ्युपयन्ति। नीचैर्वृत्त्यनुत्सेकलक्षणो हि विनयः, सर्वत्र चैवंविधेन विनयेन देवादिषु उपतिष्ठमानः स्वर्गापवर्गभाग् भवति।"—आचा. शी. १।१।१।४। सूत्र. शी. १।१२। स्था. अभ. ४।४।३४५। नन्दि. मलय. पृ. २१७ बी.। "मणवयणकायदाणगविणवो सुरणिवइणाणिजदिवुड्ढे। बाले मादुपिदुम्मि च कायव्वो चेदि अट्ठचऊ॥—देवनृपतिज्ञानियतिवृद्धबालमातृपितृष्वष्टसु मनोवचनकायदानविनयाश्चत्वारः कर्त्तव्याश्चेति द्वात्रिंशद्वैनयिकवादाः स्युः।" —गो. कर्म. टी. गा. ८८८।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

§ ३६. अथवा लोकस्वरूपेऽप्यनेके वादिनोऽनेकधा विप्रवदन्ते तद्यथा–[1]केचिन्नारीश्वरजं जगन्निगदन्ति। परे सोमाग्निसंभवम्। वैशेषिका द्रव्यगुणादिषड्विकल्पम्। [2]केचित्काश्यपकृतम्। परे दक्षप्रजापतीयम्। केचिद्[3] ब्रह्मादित्रयैकमूर्तिसृष्टम्। वैष्णवा [4]विष्णुमयम्। [5]पौराणिका विष्णुनाभिपद्मजब्रह्मजनितमातृजम्। [6]ते एव केचिदवर्णं ब्रह्मणा वर्णादिभिः सृष्टम्। केचित्कालकृतम्। [7]परे क्षित्याद्यष्टमूर्तीश्वरकृतम्। [8]अन्ये

§ ३६. अथवा, लोकके स्वरूपमें ही अनेकों वादी अनेक प्रकारकी कल्पनाएँ करते हैं। कोई इस जगत्की उत्पत्ति नारीश्वर अर्थात् महेश्वरसे मानते हैं। कोई सोमाग्नि—सोम और अग्निसे संसारकी सृष्टि कहते हैं। वैशेषिक द्रव्य, गुण, कर्म, सामान्य, विशेष और समवाय इस षट्पदार्थीरूप ही जगत् मानते हैं। कोई जगत्की उत्पत्ति काश्यप—ब्रह्मासे मानते हैं। कोई जगत्को दक्षप्रजापति-कृत कहते हैं। कोई ब्रह्मादि त्रिमूर्तिसे सृष्टिकी उत्पत्ति बताते हैं। वैष्णव विष्णुकृत कहते हैं। पौराणिक कहते हैं कि—विष्णुकी नाभिके कमलसे ब्रह्मा उत्पन्न होते हैं, ब्रह्माजी अदिति आदि जगन्माताओंकी सृष्टि करते हैं, इन जगन्माताओंसे इस जगत्की सृष्टि होती है। कोई 'वर्ण व्यवस्थासे रहित इस वर्णशून्य जगत्को ब्रह्माने चतुर्वर्णमय बनाया है' यह कहते हैं। कोई संसारको कालकृत

१. "नानी (री) श्वरजं केचित् केचित् सोमाग्निसंभवं लोकम्। द्रव्यादिषड्विकल्पं जगदेतत् केचिदिच्छन्ति।"—लोकत. १।४१। २. "इच्छन्ति काश्यपीयं केचित्सर्वं जगन्मनुष्याद्यम्। दक्षप्रजापतीयं त्रैलोक्यं केचिदिच्छन्ति॥"—लोकत. १।४५। ३. "केचित्प्राहुर्मूर्तिस्त्रिधा गतैका हरिः शिवो ब्रह्मा। शंभुर्बीजं जगतः कर्ता विष्णुः क्रिया ब्रह्मा॥ वैष्णवं केचिदिच्छन्ति केचित्कालकृतं जगत्। ईश्वरप्रेरितं केचित् केचिद् ब्रह्मविनिर्मितम्॥ अव्यक्तप्रभवं सर्वं विश्वमिच्छन्ति कापिलाः। विज्ञप्तिमात्रं शून्यं च इति शाक्यस्य निश्चयः॥ पुरुषप्रभवं केचित् दैवात् केचित् प्रभावतः। अक्षरात् क्षरितं केचित् केचिदण्डोद्भवं जगत्॥ यादृच्छिकमिदं सर्वं केचिद् भूतविकारजम्। केचिच्चानेकरूपं तु बहुधा संप्रधाविताः॥" लोकत. १।४६-५०। ४. "जले विष्णुः स्थले विष्णुराकाशे विष्णुमालिनि। विष्णुमालाकुले लोके नास्ति किंचिदवैष्णवम्॥ सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमाँल्लोके सर्वमाश्रित्य तिष्ठति॥"—लोकत. १।५१-५२। ५. "तस्मिन्नेकार्णवीभूते नष्टस्थावर-जङ्गमे। नष्टामरनरे चैव प्रनष्टोरगराक्षसे॥ केवलं गह्वरीभूते महाभूतविवर्जिते। अचिन्त्यात्मा विभुस्तत्र शयानस्तप्यते तपः॥ तत्र तस्य शयानस्य नाभौ पद्मं विनिर्गतम्। तरुणार्कमण्डलनिभं हृद्यं काञ्चन-कर्णिकम्॥ तस्मिंश्च पद्मे भगवान् दण्डकमण्डलुयज्ञोपवीतमृगचर्मवस्त्रसंयुक्तः। ब्रह्मा तत्रोत्पन्नः तेन जगन्मातरः सृष्टाः॥ अदितिः सुरसंघानां दितिरसुराणां मनुर्मनुष्याणाम्। विनता विहंगमानां माता विश्वप्रकाराणाम्॥ कद्रूः सरीसृपाणां सुलसा माता तु नागजातीनाम्। सुरभिश्चतुष्पदानाम् इला पुनः सर्वबीजानाम्॥ प्रभवस्तासां विस्तरमुपागतः केचिदेवमिच्छन्ति।" लोकत. १।५४-६०। ६. पद्मजब्रह्मजनित (मातृज) म् आ.। –पद्मजं, त एव ब्रह्मज भ. २। ७. "केचिद्वदन्त्यवर्णं सृष्टं वर्णादिभिस्तेन। कालः सृजति भूतानि कालः संहरते प्रजाः। कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः॥" —लोकत. १।६०-६१। ८. "प्रकृतीनां यथा राजा रक्षार्थमिह चोद्यतः। तथा विश्वस्य विश्वात्मा स जागर्ति महेश्वरः॥ अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वर-प्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव च॥ सूक्ष्मोऽचिन्त्यो विकरणगणः सर्ववित् सर्वकर्ता, योगाभ्यासादमलिनधिया योगिना ध्यानगम्यः। चन्द्रार्काग्निक्षितिजलमरुद्दीक्षिताकाशमूर्तिः। ध्येयो नित्यं शमसुखरतैरीश्वरः सिद्धिकामैः॥" —लोकत. १।६२-६४। ९. "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥१२॥ अस्य प्रजापतेर्ब्रह्मणो ब्राह्मणत्वजाति-विशिष्टः पुरुषो मुखमासीत् मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिविशिष्टः स बाहूकृतो

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ब्रह्मणो[1] मुखादिभ्यो ब्राह्मणादिजन्मकम्। सांख्याः[2] प्रकृतिप्रभवम्। शाक्या[3] विज्ञप्तिमात्रम्। अन्य एकजीवात्मकम्। केचिदनेकजीवात्मकम्। परे पुरातनकर्मकृतम्। अन्ये स्वभावजम्। केचि-[4]दक्षरजातभूतोद्भूतम्। केचिदण्डप्रभवम्। आश्रमी [5]स्वहेतुकम्। पूरणो[6] नियतिजनितम्। पराशरः [7]परिणामप्रभवम्। केचिद्यादृच्छिकम्। नैकवादिनोऽ[8]नेकस्वरूपम्। तुरुष्का गोस्वामि-

कहते हैं तो कोई उसे पृथिवी आदि अष्टमूर्तिवाले ईश्वरके द्वारा रचा हुआ कहते हैं। कोई ब्रह्माके मुख आदिसे ब्राह्मण-क्षत्रियादिकी उत्पत्ति बताते हैं। सांख्य इस सृष्टिको प्रकृतिकृत मानते हैं। बौद्ध इस जगत्को क्षणिक विज्ञानरूप कहते हैं। ब्रह्माद्वैतवादी जगत्को एक जीवरूप कहते हैं तो कोई वादी इसे अनेक जीवरूप भी कहते हैं। कोई इसे पूर्वकर्मोंसे निष्पन्न कहते हैं तो कोई स्वभावसे उत्पन्न बताते हैं। कोई अक्षरसे समुत्पन्न भूतों-द्वारा इस जगत्की उत्पत्ति बताते हैं। कोई इसे अण्डसे उत्पन्न हुआ बताते हैं। आश्रमी इसे अहेतुक कहते हैं। पूरण जगत्को नियतिजन्य मानते हैं। पराशर इसे परिणामजन्य कहते हैं। कोई इसे यादृच्छिक—अनियतहेतुज मानते हैं। इस तरह अनेकों वादी इसे अनेक स्वरूप बताते हैं। तुरुष्क गोस्वामी नामके दिव्य पुरुषसे जगत्की सृष्टि

---

बाहुत्वेन निष्पादितो बाहुभ्यामुत्पादित इत्यर्थः। तत्तदानीमस्य प्रजापतेर्यद्यावूरू तद्रूपो वैश्यः संपन्नः ऊरुभ्यामुत्पादित इत्यर्थः। तथाऽस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषोऽजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' इत्यादौ विस्पष्टमाम्नाता।" —ऋक्. पुरुषसू.। "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥ लोकानां स च वृद्धयर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च विन्यवर्तयत्॥"—लोकत. १।६५-६७। "एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते। तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्माऽतिशयज्ञानवैराग्यैश्वर्यसंपन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णान् अन्यानि चोच्चावचानि सृष्ट्वा...." —प्रश. भा. पृ. २२।
१. ब्रह्मादिभ्यो म. २। २. "इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः। प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः॥" सांख्यका. ५६। ३. "विज्ञप्तिमात्रमेवेदमसदर्थावभासनात्। यथा तैमिरिकस्यासत्केशपाशादिदर्शनम्॥"—विज्ञप्ति. श्लो. १। ४. अक्षरात् क्षरितः कालस्तस्माद् व्यापक इष्यते। व्यापकादिप्रकृत्यन्तां तां हि सृष्टिं प्रचक्षते॥ अक्षरांशस्ततो वायुस्तस्मात्तेजस्ततो जलम्। जलात् प्रसूता पृथ्वी भूतानामेष संभवः॥"—लोकत. २।२३-२४। ५. "नारायणपराव्यक्तादण्डमव्यक्तसंभवम्। अण्डस्यान्तस्त्वमी भेदाः सप्त द्वीपा च मेदिनी॥ गर्भोदकं समुद्राश्च जरायुश्चापि पर्वताः। तस्मिन्नण्डे त्वमी लोकाः सप्त सप्त प्रतिष्ठिताः॥ तत्रेहाद्यः स भगवानुषित्वा परिवत्सरम्। स्वयमेवात्मना ध्यात्वा तदण्डमकरोद् द्विधा॥ ताभ्यां स शकलाभ्यां तु दिवं भूमिं च निर्ममे॥" —लोकत. २।२५-२७। ६. "हेतुरहिता भवन्ति हि भावाः प्रतिसमयभाविनश्चित्राः। भावादृते न भाव्यं संभवरहितं खपुष्पमिव॥—लोकत. २।२८। ७. प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः सोऽवश्यं भवति नृणां शुभोऽशुभो वा। भूतानां महति कृतेऽपि हि प्रयत्ने नाऽभाव्यं भवति न भाविनोऽस्ति नाशः॥"—लोकत. २।२९। ८. "प्रतिसमयं परिणामः प्रत्यात्मगतश्च सर्वभावानाम्। संभवति नेच्छयापि स्वेच्छा क्रमवर्तिनो यस्मात्॥"—लोकत. २।३०। ९. "कारणानि विभिन्नानि कार्याणि च यतः पृथक्। तस्मात्त्रिष्वपि कालेषु नैव कर्मास्ति निश्चयः॥"—लोकत. २।३५।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नामकेदिव्यपुरुषप्रभवम्। इत्यादयोऽनेके[2] वादिनो विद्यन्ते। एषां स्वरूपं लोकतत्त्वनिर्णयात् हारिभद्रादवसातव्यम्।

§ ३७. एवं सर्वगतादिजीवस्वरूपे ज्योतिश्चक्रविचारस्वरूपे[3] च नैके विप्रतिपद्यन्ते। तथा बौद्धा-[4]

---

मानते हैं। इत्यादि अनेकों वादी इस संसारके विषयमें अपने मतका अनेक तरहसे निरूपण करते हैं। इनका विशेष स्वरूप हरिभद्रसूरिकृत लोकतत्त्वनिर्णय ग्रन्थमें देखना चाहिए।

§ ३७. इसी प्रकार जीवके सर्वगतत्व आदि स्वरूपके विषयमें तथा ज्योतिश्चक्रके गमनादिक-

---

१. –नामैकदि क.। २. –नेकवादि– क., प. १, २, म. १, २। ३. –दिचर– आ.। –दिवार– प. १, २, म. १। ४. एतेषां निकायानां वर्णनं विनयपिटकभूमिकायामित्थम्—"चुल्लवग्गके सत्तशतिकास्कन्धक ( पृ. ५४९ ) से मालूम है कि—बुद्धनिर्वाणके १०० वर्ष बाद बौद्धभिक्षु दो निकायों ( सम्प्रदायों ) में विभक्त हो गये। प्राचीन बातोंके दृढ़ पक्षपाती स्थविर कहलाते थे और विनयविरुद्ध कुछ नयी बातोंके प्रचार करनेवाले महासांघिक। पालीकी कथावत्थुअट्ठकथा, दीपवंस, महावंस तथा कुछ और ग्रन्थोंके अनुसार बुद्धनिर्वाणके २२० वर्षों बाद सम्राट् अशोकके समय महासांघिकों और स्थविरोंमें फिर कितने ही छोटे-मोटे मतभेद होकर १८ निकाय हो गये। कथावत्थु-अट्ठकथाके अनुसार यह शाखाभेद इस प्रकार है—




Jain Education International For Private & Personal Use Only www.jainelibrary.org

नामष्टादशनिकायभेदाः,[1] वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकादिभेदा वा वर्तन्ते। जैमिनेश्च शिष्यकृता बहवो भेदाः।

"ओंबेकः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः।
वामनस्तूभयं वेत्ति न किंचिदपि रेवणः[2] ॥१॥"

§ ३८. अपरेऽपि बहूदककुटीचरहंसपरमहंसभाट्टप्रभाकरादयोऽनेकेऽन्तर्भेदाः। सांख्यानां चरकादयो भेदाः। अन्येषामपि सर्वदर्शनानां देवतत्त्वप्रमाणमुक्तिप्रभृतिस्वरूपविषये तत्तदनेकशिष्यसंतानकृताः, तत्तद्ग्रन्थकारकृता वा मतभेदा बहवो विद्यन्ते।

---

में अनेकों विवाद हैं। एक बौद्धदर्शनमें ही १८ प्रकारके निकाय तथा वैभाषिक सौत्रान्तिक योगाचार और माध्यमिक आदि भेद मौजूद हैं। जैमिनि दर्शनमें शिष्योंके व्याख्या भेदसे ही अनेकों भेद हो गये हैं। "उम्बेक कारिकाके अर्थको जानता है, प्रभाकर तन्त्र—सिद्धान्तके स्वरूपको समझता है, वामनको कारिका तथा तन्त्र दोनोंका ज्ञान है, पर रेवण एकको भी नहीं जानता।" इत्यादि प्रवाद प्रसिद्ध ही है।

§ ३८. इसी तरह और भी बहूदक, कुटीचर, हंस, परमहंस, भाट्ट, प्रभाकर आदि अनेकों अवान्तर भेद हैं। सांख्यदर्शनमें भी चरक आदि आचार्योंके अपने-अपने पृथक् सिद्धान्त हैं। प्रायः अन्य सभी दर्शनोंमें देव, तत्त्व, प्रमाण तथा मुक्ति आदिके स्वरूपमें अनेक शिष्योंके मतोंकी तथा विभिन्न ग्रन्थकारोंकी अनेक मत-परम्पराएँ विद्यमान हैं।

---

चीनी भाषामें अनुवादित भदन्त वसुमित्र प्रणीत अष्टादशनिकाय ग्रन्थके अनुसार यह अठारह शाखा-भेद इस प्रकार है—




१. "ते च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्वबाह्यार्थशून्यत्व-बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते।" सर्वद. बौद्ध.। "चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः॥ अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते। सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः॥ आकारसहिता बुद्धिर्योगाचारस्य सम्मता। केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः॥" विवेकवि. ८।२७१-७३। २. रेणवः म. २।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३९. तदेवमनेकानि दर्शनानि लोकेऽभिधीयन्ते । तानि च सर्वाणि देवतातत्त्वप्रमाणादिभेदेनात्राल्पीयसा प्रस्तुतग्रन्थेनाभिधातुमशक्यानि[1], तत्कथमत्राचार्येण 'सर्वदर्शनवाच्योऽर्थो निगद्यते' इत्येवं गदितुमशक्योऽर्थो वक्तुं प्रत्यज्ञायि । गगनाङ्गुलप्रमितिरिव पारावारोभयतटसिकताकणगणनमिवात्यन्तं दुःशक्योऽयमर्थः प्रारब्ध इति चेत्; सत्यमेतत्; यद्यवान्तरतद्भेदापेक्षया वक्तुमेषोऽर्थः प्रक्रान्तः स्यात् । यावता तु मूलभेदापेक्षयैव यानि सर्वाणि दर्शनानि तेषामेव वाच्योऽत्र वक्तव्यतया प्रतिज्ञातोऽस्ति नोत्तरभेदापेक्षया, ततो न कश्चन दोषः । सर्वशब्दं च व्याचक्षाणैरस्माभिः पुराप्ययमर्थो दर्शित एव, परं विस्मरणशीलेन भवता विस्मारित इति ॥१॥ एनमेवार्थं ग्रन्थकारोऽपि साक्षादाह—

दर्शनानि षडेवात्र मूलभेदव्यपेक्षया ।
देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥२॥

§ ४०. अत्र प्रस्तुतेऽस्मिन्ग्रन्थे दर्शनानि षडेव, मूलभेदव्यपेक्षया मूलभेदापेक्षया मनीषिभिर्मेधाविभिर्ज्ञातव्यानि, न पुनरवान्तरतद्भेदापेक्षयाधिकानि, परमार्थतस्तेषामेष्वेवान्तर्भावात् । षडेवेति सावधारणं पदम् । केन हेतुना मूलभेदानां षोढात्वमित्याशङ्क्याह–देवतातत्त्वभेदेन इति । देवा एव देवताः, स्वार्थेऽत्र तल्प्रत्ययः, तत्त्वानि प्रमाणैरुपपन्नाः परमार्थसन्तोऽर्थाः, द्वन्द्वे देवतातत्त्वानि, तेषां भेदेन पार्थक्येन । ततोऽयमत्रार्थः–देवतातत्त्वभेदेन यतो दर्शनानां षडेव मूलभेदा भवेयुस्ततः षडेवात्र दर्शनानि वक्ष्यन्ते, न पुनरुत्तरभेदापेक्षयाधिकानीति । एतेन प्राक्तनश्लोके सर्वशब्दग्रहणेऽपि षडेवात्र दर्शनानि वक्तुं प्रतिज्ञातानि सन्तीति ज्ञापितं द्रष्टव्यम् ॥२॥

---

§ ३९. शंका—इस तरह जब अनेकों दर्शन अपने भेद-प्रभेदोंके परिवारके साथ संसारमें प्रसिद्ध हैं। और उन सब अगणित दर्शनोंके देवता, तत्त्व तथा प्रमाणादिका वर्णन करना इस छोटे-से ग्रन्थमें कथमपि सम्भव नहीं है तब आचार्यने 'सर्वदर्शनोंका वाच्य अर्थ मेरे-द्वारा कहा जाता है' यह असम्भव प्रतिज्ञा क्यों की ? इस प्रतिज्ञाका पूर्ण करना तो अंगुलोंसे आकाशको नापने तथा समुद्रके दोनों तटोंके रेतके कणोंको गिनती करनेके समान अत्यन्त कठिन ही नहीं, असम्भव ही है।

समाधान—आपकी शंका तो तब ठीक होती जब ग्रन्थकारने सब दर्शनोंके अवान्तर भेद-प्रभेदोंके कथन करनेकी प्रतिज्ञा की होती। पर ग्रन्थकारने स्वयं ही मूलभेदोंकी अपेक्षासे ही सर्वदर्शनोंके कहनेकी प्रतिज्ञा की है, उत्तर भेद-प्रभेदोंकी अपेक्षासे नहीं। इसलिए कोई दोष या अनुपपत्ति नहीं है। मूल दर्शनोंका वर्णन वे अपनी प्रतिज्ञानुसार करेंगे ही। हमने स्वयं ही सर्व शब्दका व्याख्यान करते समय यह बात अत्यन्त स्पष्ट कर ही दी थी। यह तो आपकी स्मरण-शक्तिका दोष है जो उसे भुला दिया ॥१॥ ग्रन्थकार स्वयं भी इसी बातको कहते हैं—

चूंकि देवता और तत्त्वोंके भेदकी अपेक्षा मूलदर्शन छह ही हैं। अतः यही छह मूलदर्शन इस ग्रन्थमें विद्वज्जनों-द्वारा ज्ञातव्य हैं ॥२॥

§ ४०. प्रस्तुत ग्रन्थमें मूलभेदोंकी दृष्टिसे छह ही दर्शन विवक्षित हैं। यद्यपि अवान्तर भेदोंकी अपेक्षा दर्शनोंके अधिक भेद भी हो सकते हैं परन्तु परमार्थतः उनका इन्हीं छहों दर्शनोंमें अन्तर्भाव हो जाता है। देवता तथा तत्त्वोंके वर्गीकरणकी अपेक्षासे मूलदर्शनोंकी संख्या छह ही है न तो पाँच और न सात ही। अतः विद्वज्जनोंको इस ग्रन्थमें छह ही मूलदर्शनोंका वर्णन मिलेगा, दर्शनोंके उत्तरोत्तर भेद-प्रभेदोंका नहीं। प्रथम श्लोकमें जो समस्त दर्शनोंके कहनेकी प्रतिज्ञा की गयी है उसका अभिप्राय भी छह मूल दर्शनोंके कथनका ही है। यह बात इस विवरणसे सूचित हो जाती है ॥२॥

---

१. –धातुं शक्या म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ४१. अथ षण्णां दर्शनानां नामान्याह—

बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।
जैमिनीयं च नामानि दर्शनानाममून्यहो ॥३॥

§ ४२. बुद्धाः सुगतास्ते च सप्त[1] भवन्ति—१ विपश्यी, २ शिखी, ३ विश्वभूः, ४ क्रकुच्छन्दः, ५ काञ्चनः, ६ काश्यपः, ७ शाक्यसिंहश्चेति । तेषामिदं दर्शनं बौद्धम् । [2]न्यायं न्यायतर्कमक्षपादर्षिप्रणीतं ग्रन्थं विदन्त्यधीयते वेति नैयायिकास्तेषामिदं दर्शनं नैयायिकम् । [3]संख्यां प्रकृतिप्रभृतितत्त्वपञ्चविंशतिरूपां विदन्त्यधीयते वा सांख्याः । यद्वा तालव्यादिरपि शाङ्ख्यध्वनिरस्तीति वृद्धाम्नायः । तत्र[4] शङ्खनामा कश्चिदाद्यः पुरुषविशेषस्तस्यापत्यं पौत्रादिरिति गर्गादित्वात् यञ्प्रत्यये[5] शांख्यास्तेषामिदं दर्शनं सांख्यं शांख्यं वा । जिना ऋषभादयश्चतुर्विंशतिरर्हन्तस्तेषामिदं दर्शनं जैनम् । एतेन चतुर्विंशतेरपि जिनानामेकमेव दर्शनमजनिष्ट, न पुनस्तेषां मिथो मतभेदः कोऽप्यासीदित्या-

---

§ ४१. अब उन छह मूल दर्शनोंके नाम कहते हैं—

अये शिष्यो, बौद्ध, नैयायिक, सांख्य, जैन, वैशेषिक और जैमिनीय ये छह मूल दर्शनोंके नाम हैं ॥३॥

§ ४२. बुद्ध—सुगत सात होते हैं—१ विपश्यी, २ शिखी, ३ विश्वभू, ४ क्रकुच्छन्द, ५ काञ्चन (कोणागमन), ६ काश्यप, ७ शाक्यसिंह । बुद्धोंके दर्शनको बौद्धदर्शन कहते हैं । जो न्याय—न्यायतर्क अर्थात् अक्षपाद ऋषिके द्वारा प्रणीत ग्रन्थको जानते अथवा अध्ययन करते हैं वे नैयायिक हैं । नैयायिकोंके दर्शनको नैयायिक ही कहते हैं । जो संख्या—प्रकृति आदि तत्त्वोंकी पचीस संख्याको जानते अथवा अध्ययन करते हैं वे सांख्य हैं । कहीं 'शांख्य' ऐसा तालव्य-शकारवाला पाठ भी वृद्धपरम्परासे सुना जाता है । शांख्य–शंखनामके आदि पुरुषकी सन्तान-दर-सन्तान–पुत्रपौत्रादि (गर्गादित्वात् यञ् प्रत्यय करनेपर) सांख्य कही जाती है । इनके दर्शनको शांख्य या सांख्य कहते हैं । ऋषभ आदि महावीर पर्यन्त चौबीस अरहन्त—तीर्थंकरोंको जिन कहते हैं । 'जिन'के दर्शनको 'जैन' कहते हैं । इससे यह सूचित होता है कि—चौबीसों ही जिनोंका एक ही

---

१. दीघनिकायादिषु सप्त एव तथागताः स्मृताः । तथाहि—"सप्त तथागताः । तद्यथा—विपश्यी, शिखी, विश्वभूः, क्रकुच्छन्दः, कनकमुनिः, काश्यपः, शाक्यमुनिश्चेति ।"—धर्मसं. पृ. २ । दीघ. महापदानसुत्त, आटानाटियसुत्त । "बुद्धाः स्युः सप्त ते त्वमी ॥ विपश्यी शिखी विश्वभूः क्रकुच्छन्दश्च काञ्चनः । काश्यपश्च सप्तमस्तु शाक्यसिंहोऽर्कबान्धवः ॥" अभिधान. २।१४९-५० । जातकादिषु अष्टाविंशतिर्बुद्धाः संसूचिताः, तथाहि—तण्हंकरो मेधंकरो अथोऽपि सरणंकरो । दीपंकरो च संबुद्धो कोण्डञ्ञो दिपदुत्तमो ॥ मंगलो च सुमनो च रेवतो सोभितो मुनी । अनोमदस्सी पदुमो नारदो पदुमुत्तरो ॥ सुमेधो च सुजातो च पियदस्सी महायसो । अत्थदस्सी धम्मदस्सी सिद्धत्थो लोकनायको ॥ तिस्सो फुस्सो च संबुद्धो विपस्सी सिखी विस्सभू । ककुसंधो कोणागमणो कस्सपो चापि नायको ॥ ऐते अहेसुं संबुद्धा वीतरागा समाहिता । सतरंसीव उप्पन्ना महातमविनोदना ॥ जलित्वा अग्गिखन्दाभ विब्बुता ते ससावका" जातक, निदानकथा, बुद्धवंसो पि. २७ । २. "न्यायः पञ्चावयववाक्यादिः तं वेत्त्यधीते वा नैयायिकः ।" —अभिधान. ३।५२६ । ३. "पञ्चविंशतेस्तत्त्वानां संख्यानं संख्या, तदधिकृत्य कृतं शास्त्रं सांख्यं तद्वेत्ति अधीते वा सांख्यः ।" अभिधान. ३।५२६ । "सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते ।" मात्स्यपु. अ. ३ । "अस्य च सांख्यसंज्ञा सान्वया—संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्तिताः ॥ इत्यादिभ्यः भारतादिवाक्येभ्यः । संख्या सम्यग्विवेकेन आत्मकथनमित्यर्थः ।"—सांख्यप्र. पृ. ५ । ४. संख-म. २ । ५. "गर्गादेर्यञ्"—हैम. ६।१।४२ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

वेदितं भवति। [1]नित्यद्रव्यवृत्तयोऽन्त्या विशेषा एव वैशेषिकं, विनयादिभ्य इति स्वार्थे इकण्। तद्वैशेषिकं विदन्त्यधीयते वा, "तद्वेत्त्यधीते" [ हैम० ६।२ ] इत्यणि वैशेषिकास्तेषामिदं वैशेषिकम्। जैमिनिराद्यः पुरुषविशेषस्तस्येदं मतं जैमिनीयं मीमांसकापरनामकम्। तथाशब्दश्चकारश्चात्र समुच्चयार्थौ। एवमन्यत्राप्यवसेयम्। अमूनि षडपि दर्शनानां नामानि। अहो इति शिष्यामन्त्रणे। आमन्त्रणं च शिष्याणां चित्तव्यासङ्गत्याजनेन शास्त्रश्रवणायाभिमुखीकरणार्थमत्रोपन्यस्तम् ॥३॥

§ ४३. अथ यथोद्देशस्तथा निर्देश इति न्यायादादौ बौद्धमतमाचष्टे—

तत्र बौद्धमते तावद्देवता सुगतः किल।
चतुर्णामार्यसत्यानां[2] दुःखादीनां प्ररूपकः ॥४॥

§ ४४. तत्रशब्दो निर्धारणार्थः, तावच्छब्दोऽवधारणे। तेषु दर्शनेष्वपराणि दर्शनानि तावत्तिष्ठन्तु, बौद्धमतमेव प्रथमं निर्धार्योच्यत इत्यर्थः। अत्र चादौ बौद्धदर्शनोपलक्षणार्थं मुग्धशिष्यानु-

दर्शन था और वह था जैनदर्शन। इनमें परस्पर कुछ भी मतभेद नहीं था। विशेष नित्यद्रव्यमें रहते हैं, तथा अन्त्य हैं। अन्त्य–जगत्के विनाश तथा प्रारम्भकालमें रहनेवाले परमाणु, मुक्त आत्मा तथा मुक्त आत्माओंके पण्ड मन 'अन्त्य' कहे जाते हैं। इनमें रहनेके कारण विशेषोंको अन्त्य कहते हैं। विशेषको ही (विनयादिभ्यः स्वार्थमें इकण् प्रत्यय करनेपर) वैशेषिक कहते हैं। इस वैशेषिक अर्थात् विशेष पदार्थको जो जानें अथवा अध्ययन करें (तद्वेत्त्यधीते : इस सूत्रसे अण् प्रत्यय करनेपर) उन्हें वैशेषिक कहते हैं। वैशेषिकोंके दर्शनको वैशेषिक कहते हैं। जैमिनि नामके आद्य आचार्य हुए हैं, उनके मतको जैमिनीय मत कहते हैं। इसे मीमांसक भी कहते हैं। श्लोकमें 'तथा' शब्द और 'च' शब्द समुच्चयार्थक हैं। 'अहो' शब्दका प्रयोग शिष्यके आमन्त्रणके लिए किया गया है। शिष्योंके चित्तको दूसरे विषयोंसे हटाकर शास्त्र सुननेकी ओर उपयुक्त करनेको आमन्त्रण किया गया है ॥३॥

§ ४३. 'जिस क्रमसे नाम निर्देश किया गया हो उसी क्रमसे उनका लक्षण और विवेचन करना चाहिए' इस नियमके अनुसार आदिमें निर्दिष्ट बौद्धमतका वर्णन करते हैं—

**बौद्धमतमें दुःख, समुदय, निरोध और मार्ग इन चार आर्यसत्योंके उपदेश देनेवाले सुगत-देवता हैं ॥४॥**

§ ४४. श्लोकमें निर्धारण अर्थमें 'तत्र' शब्दका और अवधारण अर्थमें 'तावत्' शब्दका प्रयोग किया है। अतः छहों दर्शनोंमें-से अन्य दर्शनोंकी विवक्षा नहीं करके केवल बौद्धदर्शन ही

१. "नित्यद्रव्यवृत्तयोऽन्त्र विशेषाः ते प्रयोजनमस्य वैशेषिकं शास्त्रं तद् वेत्ति अधीते वा वैशेषिकः।" —अभिधान. ३।५२६। "द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे। यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥"—सर्वद. औ. पृ. २२०। २. "....यदिदं चतुन्नं अरियसच्चानं आचिक्खना देसना पञ्ञपना पट्ठपना विवरणा विभजना उत्तानिकम्मं। कतमेसं चतुन्नं? दुक्खस्स अरियसच्चस्स, दुक्खसमुदयस्स अरियसच्चस्स, दुक्खनिरोधस्स अरियसच्चस्स, दुक्खनिरोधगामिनिया पटिपदाय अरियसच्चस्स।"—मज्झिम. सच्चविभंग.। संयु. ५।४२५-२६। विनय. महावग्ग। विसुद्धि. १६।१३। "चत्वार्यार्यसत्यानि। तद्यथा—दुःखं समुदयो निरोधो मार्गश्चेति।"—धर्मसं. पृ. ५। "सत्यान्युक्तानि चत्वारि दुःखं समुदयस्तथा। निरोधो मार्ग एतेषां यथाभिसमयं क्रमः ॥"—अभिध. ६।२। "बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयम्। दुःखक्षयो निःसरणात्मकोऽयं त्राणात्मकोऽयं प्रशमाय मार्गः ॥ इत्यार्यसत्यानि..."—सौन्दर. १६।४। प्रमाणवा. १।१४८।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ग्रहाय बौद्धानां लिङ्गवेषाचारादिस्वरूपं प्रदर्श्यते। चमरी मौण्ड्यं कृत्तिः कमण्डलुश्च लिङ्गम्।[1] धातुरक्तमागुल्फं परिधानं वेषः[2]। शौचक्रिया बह्वी।

"[3]मृद्वी शय्या प्रातरुत्थाय पेया भक्तं मध्ये पानकं चापराह्णे।
द्राक्षाखण्डं शर्करा चार्धरात्रे मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥१॥
[4]मणुन्नं भोयणं भुच्चा मणुन्नं सयणासणं।
मणुन्नम्मि अगारम्मि मणुन्नं झायए मुणी ॥२॥"

§ ४५. भिक्षायां पात्रे पतितं सर्वं शुद्धमिति मन्वाना [5]मांसमपि भुञ्जते। मार्गे च जीवदयार्थं [6]प्रमृजन्तो व्रजन्ति। ब्रह्मचर्यादि [7]स्वकीयक्रियायां च भृशं दृढतमा भवन्ति। इत्यादिराचारः। धर्मबुद्धसङ्घरूपं [8]रत्नत्रयम्। [9]तारादेवी शासने विघ्ननाशिनी विपश्यादयः सप्त बुद्धाः कण्ठे रेखात्रयाङ्किताः सर्वज्ञा देवाः। "बुद्धस्तु सुगतो धर्मधातु" [अभिधान. २।१४६] इत्यादीनि [10]तन्ना-

---

प्रथम विवक्षित है। मुग्ध शिष्योंको इस बौद्धदर्शनका स्थूल परिचय करानेके लिए सबसे पहले बौद्धोंके लिंग—वेष और आचार आदिका स्वरूप बताया जाता है। चमर धारण करना, मुण्डन करना, चर्मका आसन और कमण्डलु ये बौद्धोंके लिंग हैं। धातुसे रंगा हुआ घुटने तकका वस्त्र इनका वेष है। शौच क्रिया तो अनेक प्रकारसे की जाती है।

"कोमल शय्या, प्रातः बिस्तरसे उठते ही दुग्ध आदिका पान, मध्याह्नमें भोजन, सायंकाल फिर शरबत, आधी रात्रिके समय दाखें और मिश्री, इस समस्त सुखोपभोगके बाद भी अन्तमें मोक्षकी प्राप्ति। ये सब बातें शाक्यपुत्र बुद्धके ही अनुभवकी ॥१॥

"मनोज्ञ स्वादु भोजन करके मनोज्ञ—सुन्दर मकानमें मनोज्ञ—कोमल शय्या और मनोज्ञ आसनपर सोने और बैठनेसे मुनि मनोज्ञका ही ध्यान करेगा ॥२॥

§ ४५. बौद्ध भिक्षु 'भिक्षाके समय पात्रमें जो भी आ जाये वह सब शुद्ध है' ऐसा मानकर पात्रमें आये हुए मांसको भी खा लेते हैं। मार्गमें चलते समय जीवोंकी दयाके लिए देख-भालकर मार्जन करके गमन करते हैं। अपने ब्रह्मचर्य आदि व्रतोंकी रक्षा तथा उनके पालनमें अत्यन्त दृढ़ होते हैं। इत्यादि इनका आचार है। धर्म, बुद्ध और संघ ये तीन रत्नत्रय हैं। तारादेवी इनकी

---

१. "केसमस्सुं ओहारित्वा"—विनय. महावग्ग। २. बौद्धमते काषायवस्त्रपरिधानं विहितम्, "कासायानि परिधापित्वा…"—विनय. महावग्ग। "काषायवासाः स बभौ…"—बुद्धच. १०।१५। "अनुजानामि भिक्खवे छ रजनानि—मूलरजनं खन्धरजनं तचरजनं पत्तरजनं पुप्फरजनं फलरजनं" विनय महावग्ग ८।१।१२०। ३. उद्धृतोऽयम् —सूत्र. शी. ३।४। ४. उद्धृतेयम् सूत्र. शी. ।।४। छाया—मनोज्ञं भोजनं भुक्त्वा मनोज्ञे शयनासने। मनोज्ञे अगारे मनोज्ञं ध्यायेन्मुनिः॥" ५. "अनुजानामि भिक्खवे, तिकोटिपरिसुद्धं मंसं अदिट्ठं असुतं अपरिसंकितं च।" —विनय. महावग्ग ६।१९।१५। मज्झिम. जीवकसु. २।१।५। ६. "भिक्खु अन्तरघरं पविट्ठो वीथिं पटिपन्नो ओक्खित्तचक्खु युगमत्तदस्सावी संवुतो गच्छति, न हत्थिं ओलोकेन्तो, न अस्सं, न रथं, न पत्तिं, न इत्थिं, न पुरिसं ओलोकेन्तो, न उद्धं उल्लोकेन्तो, न अधो ओलोकेन्तो, न दिसाविदिसं पेक्खमानो गच्छति [ महानिद्देस ४७४ ]" विसुद्धि. पृ. १३। "अलोलचक्षुर्युगमात्रदर्शी निवृत्तवाग्यन्त्रितमन्दगामी। चचार भिक्षां स तु भिक्षुवर्यो निधाय गात्राणि चलं च चेतः॥" बुद्धच. १०।१३। ७.—दिषु क्रियायां च—भ. २। ८. "तत्र प्रथमं तावत् त्रीणि रत्नानि। तद्यथा बुद्धो धर्मः संघश्चेति।"—धर्म सं. पृ. १। ९. "…तारिप्पापच्छरण्ये…" इत्यादि तारास्तवनं स्रग्धरास्तोत्रे द्रष्टव्यम्। १०. महाव्युत्पत्तौ तथागतस्य बुद्ध-भगवान्-तथागत-अर्हन्-सम्यक्संबुद्ध-विद्याचरणसम्पन्नादीनि एकाशीति नामानि लिखितानि विद्यन्ते। "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः…" —अमर. १।१३। "बुद्धस्तु सुगतो धर्मधातुस्त्रिकालविज्जिनः। बोधिसत्त्वो महाबोधिरार्यः शास्ता तथागतः॥ अभिधान. २।१४६।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

मानि। तेषां प्रासादा वर्तुला बुद्धाण्डकसंज्ञाः। भिक्षुसौगतशाक्यशौद्धोदनि[1]सुगततथागतशून्यवादिनामानो बौद्धाः तेषां शौद्धोदनिधर्मोत्तरार्चटधर्मकीर्तिप्रज्ञाकरदिग्नागप्रमुखा ग्रन्थकारा गुरवः।

§ ४६. अथ प्रस्तुतश्लोकोऽग्रतो व्याख्यायते बौद्धमते बौद्धदर्शने सुगतो बुद्धो देवता देवः। किलेत्याप्तप्रवादे। कीदृशः सः। चतुर्णामित्यादि। आराद् दूराद्याताः सर्वहेयधर्मेभ्य इत्यार्याः, पृषोदरादित्वाद्रूपनिष्पत्तिः। सतां साधूनां पदार्थानां वा यथासंभवं मुक्तिप्रापकत्वेन यथावस्थितवस्तु[2]स्वरूपचिन्तनेन च हितानि सत्यानि। अथवा सद्भ्यो हितानि सत्यानि। आर्याणां सत्यानि[3] आर्यसत्यानि तेषामार्यसत्यानामित्यर्थः। चतुर्णां दुःखादीनां दुःखसमुदयमार्गनिरोधलक्षणानां तत्त्वानां[4] प्ररूपको देशकः। तत्र दुः[5]खं फलभूताः पञ्चोपादानस्कन्धा विज्ञानादयो वक्ष्यमाणाः। त एव

---

शासनदेवता है, यह समस्त विघ्नोंका नाश करनेवाली है। विपश्यी आदि सात बुद्धदेव हैं जो सर्वज्ञ हैं और उनके कण्ठमें तीन रेखाएँ होती हैं। सुगतको बुद्ध कहते हैं। धर्मधातु आदि बुद्धके ही पर्यायवाचक नाम हैं। इनके प्रासाद-स्तूप गोल होते हैं और उन्हें 'बुद्धाण्डक' कहते हैं। बौद्धोंको भिक्षु, सौगत, शाक्य, शौद्धोदनि, सुगत, तथागत तथा शून्यवादी आदि भी कहते हैं। इनके शौद्धोदनि धर्मोत्तर, अर्चट, धर्मकीर्ति, प्रज्ञाकर, दिग्नाग आदि प्रमुख ग्रन्थकार गुरु हुए हैं।

§ ४६. श्लोकार्थ—बौद्धमतमें बुद्ध ही देव हैं। 'किल' शब्दसे आप्त प्रवादकी सूचना है। ये दुःखादि चार आर्यसत्योंका उपदेश देते हैं। आर्य शब्द पृषोदरादिगणमें पठित होनेसे सिद्ध है। जो सभी हेयधर्मोंसे किनाराकशी कर गये हैं अर्थात् दूर हो गये हैं उन्हें आर्य कहते हैं। जिसके द्वारा साधुओंको मुक्तिकी प्राप्ति होती है अथवा जिसके द्वारा समस्त पदार्थोंके स्वरूपका यथार्थ चिन्तन होता है, या जो सत्पुरुषोंको हितकारक है वह सत्य है। आर्योंके चार सत्य होते हैं—दुःख, समुदय, निरोध और मार्ग। बुद्ध इन्हीं चार आर्यसत्योंके आद्य उपदेष्टा हैं। रूप, वेदना, संज्ञा, संस्कार और विज्ञान इन पांच विपाकरूप उपादान स्कन्ध ही दुःख हैं। जिससे पंचस्कन्ध-

---

१. दनिसुततथा–प. १, २, भ. १, २, क.। २. वस्तुरूप–आ., क.। ३. यस्मा पनेतानि बुद्धादयो अरिया पटिविज्झन्ति तस्मा अरियसच्चानी ति वुच्चन्ति। यथाह—"चत्तारिमानि, भिक्खवे अरियसच्चानि। कतमानि···पे···इमानि खो, भिक्खवे चत्तारि अरियसच्चानि" [ सं. ५।४२५-२६ ] अरिया इमानि पटिविज्झन्ति तस्मा अरियसच्चानी ति वुच्चन्ति। अपि च, अरियस्स सच्चानी ति पि अरियसच्चानि। यथाह—"सदेवके भिक्खवे, लोके····पे····मनुस्सा तथागतो अरियो, तस्मा अरियसच्चानीति वुच्चन्ती ति" [ सं. ५।४३५ ] अथवा एतेसं अभिसम्बुद्धता अरियभावसिद्धितोऽपि अरियसच्चानि। यथाह—"इमेसं खो, भिक्खवे, चतुन्नं अरियसच्चानं यथाभूतं अभिसम्बुद्धत्ता तथागतो अरहं सम्मासम्बुद्धो ति वुच्चती" ति [सं. ५।४३३ ] अपि च खो पन, अरियानि सच्चानीति पि अरियसच्चानि। अरियानी ति अवितथानि। अविसंवादकानीति अत्थो। यथाह—"इमानि खो भिक्खवे, चत्तारि अरियसच्चानि तथानि अवितथानि अनञ्ञथानि तस्मा अरियसच्चानी ति वुच्चन्ती" ति [ सं. ५।४३५ ] —विसुद्धि. १६।२०-२२। "बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयम्। दुःखक्षयो निःसरणात्मकोऽयं त्राणात्मकोऽयं प्रशमाय मार्गः॥" सौन्दर. १६।४। ३. "आर्याणामेव तत्सत्यमिति कृत्वा आर्यसत्यमिति व्यवस्थाप्यते।" माध्यमिक वृ. पृ. ४७९। ४. निरूपकः—म. २। ५. "इह हि पूर्वहेतुजनिता प्रतीत्यसमुत्पन्नाः पञ्चोपादानस्कन्धाः दुःखदुःखतया विपरिणामदुःखतया संस्कारदुःखतया च प्रतिकूलवर्तित्वाच्च पीडात्मकत्वेन दुःखमित्युच्यते।" —माध्यमिक वृ. पृ. ४७५। "दु इति अयं सद्दो कुच्छिते दिस्सति। कुच्छितं हि पुत्तं दुपुत्तो ति वदन्ति। खं-सद्दो पन तुच्छे। तुच्छं हि आकासं खं ति वुच्चति। इदं च पठमं सच्चं कुच्छितं अनेकउपद्दवाधिट्ठानतो तुच्छं बालजनपरिकप्पित-धुवसुभसुखत्तभावविरहिततो, तस्मा कुच्छितत्ता तुच्छता च दुक्खं ति वुच्चति।" विसुद्धि. १६।१६।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तृष्णासहाया हेतुभूताः समुदयः[1] समुदेति स्कन्धपञ्चकलक्षणं दुःखमस्मादिति व्युत्पत्तितः। निरोधहेतुर्नैरात्म्याद्याकारश्चित्तविशेषो मार्गः[2]। मार्गण् अन्वेषणे, मार्ग्यतेऽन्विष्यते[3] याच्यते निरोधार्थिभिरिति चुरादिणिजन्तत्वेनाल्प्रत्ययः। निःक्लेशावस्था चित्तस्य निरोधः[4]। निरुध्यते रागद्वेषोपहतचित्तलक्षणः संसारोऽनेनेति करणे घञि, मुक्तिरित्यर्थः।

§ ४७. दुःखादीनामित्यत्रादिशब्दोऽनेकार्थोऽपि व्यवस्थार्थो मन्तव्यः। यदुक्तम्—

"सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा।
चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत्[5] ॥१॥"

तत्रादिशब्दः सामीप्ये यथा ग्रामादौ घोष इति, व्यवस्थायां यथा ब्राह्मणादयो वर्णा इति, प्रकारे यथा आढ्या[6] देवदत्तादय इति देवदत्तसदृशा आढ्या[7] इत्यर्थः, अवयवे यथा स्तम्भादयो गृहा

---

रूप दुःख उत्पन्न होता है उसे समुदय कहते हैं। अतएव ये ही पाँच स्कन्ध तृष्णाके सहकारसे जब नवीन स्कन्धोंकी उत्पत्तिमें हेतु होते हैं तब समुदय कहलाते हैं। निरोध निर्वाणके इच्छुक मुमुक्षु जिसे ढूँढ़ते हैं, जिसकी याचना करते हैं वह मार्ग है। ( अन्वेषणार्थक मार्गण धातुसे चुरादिगणीय णिच् प्रत्ययके बाद अल् प्रत्यय करनेपर मार्ग शब्द सिद्ध होता है ) निरोधमें हेतुभूत नैरात्म्यादि भावना रूपसे परिणत चित्तविशेष ही मार्ग कहलता है। ये नैरात्म्यादि भावनाएँ ही निर्वाणमें कारण होनेसे मार्ग कही जाती हैं। चित्तकी क्लेशरहित अवस्थाको निरोध—निर्वाण कहते हैं। राग, द्वेष आदिसे विकृत चित्तरूपी संसार जिससे नष्ट किया जाता है वह निरोध अर्थात् मुक्ति है। ( करणार्थक घञ् प्रत्यय करनेपर निरोध शब्द सिद्ध होता है )।

§ ४७. यद्यपि 'आदि' शब्दके अनेक अर्थ होते हैं फिर भी 'दुःखादीनाम्' यहाँ 'आदि' शब्दका व्यवस्थारूप अर्थ विवक्षित है। कहा भी है—

"विद्वज्जन समीपता, व्यवस्था, प्रकार और अवयव इन चार अर्थोंमें 'आदि' शब्दका प्रयोग मानते हैं ॥१॥" यथा, 'ग्रामादौ घोषः—गाँवके पास झोंपड़ा है' इस वाक्यमें आदि शब्द समीपार्थक है। 'ब्राह्मणादयो वर्णाः—वर्णोंमें ब्राह्मण आदि अर्थात् प्रथम है' यहाँ आदि शब्दका व्यवस्था अर्थात् प्रथम अर्थ होता है। 'आढ्या देवदत्तादयः—देवदत्त जैसे धनवान् हैं' यहाँ आदि शब्द प्रकारवाची है। 'स्तम्भादयो गृहाः—खम्भे आदि अवयव ही घर हैं' यहाँ आदि शब्द अवयव

---

१. "सं इति च अयं सद्दो, समागमो समेतंति आदिसु संयोगं दीपेति। उ इति अयं उप्पन्नं उदितं ति आदिसु उप्पत्तिं। अयसद्दो कारणं दीपेति। इदञ्चापि दुतियसच्चं अवसेसपच्चयसमायोगे सति दुक्खस्सुप्पत्तिकारणं। इति दुक्खस्स संयोगे उप्पत्तिकारणत्ता दुक्खसमुदयं ति वुच्चति।"—विसुद्धि १६।१७। "यतो हि हेतोर्दुःखं समुदेति समुत्पद्यते स हेतुः तृष्णाकर्मक्लेशलक्षणः समुदय इत्युच्यते॥" माध्यमिकवृ. पृ. ४७६। २. "चतुत्थसच्चं पन, यस्मा एतं दुक्खनिरोधं गच्छति आरम्मणवसेन तदभिमुखभूतत्ता पटिपदा च होति दुक्खनिरोधप्पत्तिया, तस्मा दुक्खनिरोधगामिनिपटिपदा ति वुच्चति।" विसुद्धि. १६।१९। "दुःखनिरोधगामिनी आर्याष्टाङ्गमार्गानुगमा प्रतिपत्—" माध्यमिकवृ. पृ. ४७७। ३. वाच्यते भ. २। ४. "ततियसच्चं पन, यस्मा नि-सद्दो अभावं, रोध-सद्दो च चारकं दीपेति, तस्मा अभावो एत्थ संसारचारकसङ्खातस्स दुक्खरोधस्स सब्बगतिसुञ्ञता, समधिगते वा तस्मिं संसारचारकसङ्खातस्स दुक्खरोधस्स अभावो होति तप्पटिपक्खत्ता ति पि दुक्खनिरोधं ति वुच्चति। दुक्खस्स वा अनुप्पादनिरोधपच्चयता दुक्खनिरोधं ति।"—विसुद्धि. १६।१८। "दुःखस्य च विगमोऽनुत्पादो निरोध इत्युच्यते।" —माध्यमिकवृ. पृ. ४७७। ५. श्लोकोऽयं शब्दकल्पद्रुमकोशे आदिशब्दनिरूपणावसरे समुद्धृतः। ६. आढ्या इति देवदत्ता— आ.। ७. आढ्यादय इत्यर्थः भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति। अत्र तु व्यवस्थार्थः संगच्छते। दुःखमादि प्रथमं येषां तानि तथा तेषामिति बहुव्रीहिः ॥४॥

§ ४८. अथ दुःखतत्त्वं व्याचिख्यासुराह—

**[2]दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः।**
**[3]विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥५॥**

§ ४९. दुःखं दुःखतत्त्वं किमित्याह। संसरन्ति स्थानात्स्थानान्तरं[4] भवाद् भवान्तरं वा गच्छन्तीत्येवंशीलाः संसारिणः स्कन्धाः सचेतना अचेतना[5] वा परमाणुप्रचयविशेषाः। ते च स्कन्धाः वाक्यस्य सावधारणत्वात्पञ्चैवाख्याताः, न त्वपरः कश्चिदात्माख्यः स्कन्धोऽस्तीति। के ते स्कन्धाः। पञ्च प्रकीर्तिताः। इत्याह–विज्ञानम् इत्यादि। विज्ञानस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, रूपस्कन्धश्च। एवशब्दः पूरणार्थे, च शब्दः समुच्चये। तत्र रूपविज्ञानं रसविज्ञानमित्यादि निर्विकल्पकं विज्ञानं विशिष्टज्ञानं[6] विज्ञानस्कन्धः। निर्विकल्पकं च ज्ञानमेवंरूपमवसेयम्—

"अस्ति [7]ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥१॥" [मी. श्लो. प्रत्य. ११२] इति ॥

---

अर्थमें प्रयुक्त हुआ है। 'दुःखादीनाम्' यहाँ आदि शब्द व्यवस्थावाची है। अर्थात् चार आर्यसत्योंमें दुःख नामका आर्यसत्य प्रथम है ॥४॥

§ ४८. अब दुःखतत्त्वका स्वरूप कहते हैं—

**संसारी स्कन्ध ही दुःख हैं। और विज्ञान, वेदना, संज्ञा, संस्कार और रूप ये पाँच स्कन्ध कहे गये हैं ॥५॥**

§ ४९. सचेतन और अचेतन परमाणुओंके प्रचयको स्कन्ध कहते हैं। स्कन्ध पाँच ही होते हैं। इन पाँच स्कन्धोंसे भिन्न कोई आत्मा नामका छठवाँ स्कन्ध नहीं है। अर्थात् नाम-रूपात्मक इन्हीं पाँच स्कन्धोंमें आत्माका व्यवहार होता है। यही पाँच स्कन्ध एक स्थानसे दूसरे स्थानको तथा एक भवसे भवान्तरको जाते हैं अतः संसरणधर्मा होनेसे संसारी हैं। इन्हीं संसारी पाँच-स्कन्धोंको दुःखसत्य कहते हैं। वे स्कन्ध पाँच हैं—विज्ञानस्कन्ध, वेदनास्कन्ध, संज्ञास्कन्ध, संस्कारस्कन्ध और रूपस्कन्ध। श्लोकमें एव शब्द पादपूर्तिके लिए और च शब्द समुच्चयार्थक है।

रूप रसादि विषयक निर्विकल्पक ज्ञानोंको विज्ञानस्कन्ध कहते हैं। वि अर्थात् विशिष्ट ज्ञान विज्ञानस्कन्ध है। निर्विकल्पक ज्ञानका स्वरूप इस प्रकार बताया है—

"सबसे पहले निर्विकल्पक आलोचनाज्ञान होता है। यह मूक बच्चों आदिके विज्ञानकी तरह शुद्ध वस्तुसे उत्पन्न होता है ॥१॥"

---

१. प्रधानं भ. २। २. "कतमञ्च भिक्खवे दुक्खं अरियसच्चं। जाति पि दुक्खा, जरापि दुक्खा, मरणम्पि दुक्खं, सोक-परिदेवदुक्खदोमनस्सुपायासापि दुक्खा, अप्पियेहि सम्पयोगो दुक्खो, पियेहि विप्पयोगो दुक्खो, यम्पिच्छं न लभति तम्पि दुक्खं, सङ्खित्तेन पञ्चूपादानक्खन्धापि दुक्खा।" —दीघ. महासतिपट्ठान.। [विभंग. ९९] विसुद्धि. १६।३१। "एत्थ हि बाधनलक्खणं दुक्खसच्चं, सन्तापनरसं, पवत्तिपच्चुप्पट्ठानं।"—विसुद्धि. १६।२३। "सङ्खित्तेन पञ्चुपादानक्खंधा दुक्खानि। —विसुद्धि. १६।५७। "दुःखं संसारिणः स्कन्धाः" —प्रमाणवा. ११४२। ३. इतः प्रभृति अष्टमश्लोकान्तं यावत् सार्धं श्लोकत्रयं आदिपुराणे (५।४२-४५) विवेकविलासे (८।२६८-७०) च वर्तते। द्रष्टव्यम्—सर्वद. सं. पृ. ४६। ४. न्तरंग–म. २। ५. – नाश्च पर–म. २। ६. "विज्ञानं प्रतिविज्ञप्तिः।" —अभिध. १।१६। "किञ्चि विजाननलक्खणं सब्बं तं एकतो कत्वा विञ्ञाणक्खंधो वेदितब्बो ति हि वुत्तं—"विजानाति विजानाती खो आवुसो तस्मा विञ्ञाणं ति वुच्चती" ति [म. १।२९२]"—विसुद्धि. १४।८२। ७. ह्यालोचनं (न) ज्ञानं आ.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ५०. सुखा दुःखा अदुःखसुखा[1] चेति वेदना [2]वेदनास्कन्धः । वेदना हि पूर्वकृतकर्मविपाकतो जायते । तथा च सुगतः कदाचिद्भिक्षामटाट्यमानः कण्टकेन चरणे विद्धः प्राह—

"इत एकनवते कल्पे शक्त्या मे पुरुषो हतः ।
तत्कर्मणो विपाकेन पादे विद्धोऽस्मि भिक्षवः ॥" इति ॥

§ ५१. संज्ञानिमित्तोद्ग्रहणात्मकः प्रत्ययः संज्ञास्कन्धः[3] । तत्र 'संज्ञा गौरि'त्यादिका गोत्वादिकं च तत्प्रवृत्तिनिमित्तम्[4], तयोरुद्ग्रहणा योजना, तदात्मकः प्रत्ययो नामजात्यादियोजनात्मकं सविकल्पकं ज्ञानं[5] संज्ञास्कन्ध इत्यर्थः ।

§ ५२. पुण्यापुण्यादिधर्मसमुदायः [6]संस्कारस्कन्धः, यस्य संस्कारस्य प्रबोधात्पूर्वानुभूते विषये स्मरणादि समुत्पद्यते ।

§ ५३. पृथिवीधात्वादयो रूपादयश्च रूपस्कन्धः[7] ।

---

§ ५०. सुखरूप, दुःखरूप और असुखदुःखरूप—जिसे न सुखरूप ही कह सकते हैं और न दुःखरूप ही—वेदना—अनुभवको वेदनास्कन्ध कहते हैं। पूर्वकृत कर्मके परिपाकसे कर्मके फलकी सुखादिरूपसे वेदना होती है। एक बार जब स्वयं सुगत भिक्षाके लिए जा रहे थे तब उनके पैरमें एक कांटा गड़ गया। उस समय उन्होंने कहा था कि—

"हे भिक्षुओ, आजसे एकानबेवें कल्पमें मैंने शक्ति—छुरीसे एक पुरुषका वध किया था। उसी कर्मके विपाकसे आज मेरे पैरमें कांटा लगा है।" इति।

§ ५१. जिन प्रत्ययोंमें शब्दोंके प्रवृत्तिनिमित्तोंकी उद्ग्रहणा अर्थात् योजना हो जाती है उन सविकल्पक प्रत्ययोंको संज्ञास्कन्ध कहते हैं। गो, अश्व इत्यादि संज्ञाएँ हैं। ये संज्ञाएँ वस्तुके सामान्यधर्मको निमित्त बनाकर व्यवहारमें आती हैं, जैसे गो संज्ञा गोत्वरूपसामान्यधर्म जहाँ-जहाँ होगा वहाँ-वहाँ प्रवृत्त होगी। इसीलिए गोत्व आदि सामान्य गो आदि संज्ञाओंके प्रवृत्तिनिमित्त कहे जाते हैं। गो आदि संज्ञाओंका अपने प्रवृत्तिनिमित्तोंके साथ उद्ग्रहणा—योजना करनेवाला सविकल्पक प्रत्यय संज्ञास्कन्ध है। अर्थात् नाम जाति आदिकी योजना करके 'यह गौ है, यह अश्व है' इत्यादि व्यवहारका प्रयोजक सविकल्पकज्ञान संज्ञास्कन्ध कहलाता है।

§ ५२. पुण्य पाप आदि धर्मोंके समुदायको संस्कारस्कन्ध कहते हैं। इसी संस्कारके प्रबोधसे पहले जाने गये पदार्थका स्मरण, प्रत्यभिज्ञान आदि होते हैं।

§ ५३. पृथिवी आदि धातुएँ तथा रूपादि विषय रूपस्कन्ध कहलाते हैं।

---

१. वेति प. १, २, भ. २। २. "वेदनाऽनुभवः" —अभिध. १।१४। "यं किंचि वेदयितलक्खणं सव्वं तं एकतो कत्वा वेदनाक्खंधो वेदितब्बो ति।"—विसुद्धि. १४।१२५। ३. "संज्ञा निमित्तोद्ग्रहणात्मिका। निमित्तं नीलपीतदीर्घह्रस्वपुरुषस्त्रीशत्रुमित्रशाताशातस्वभावाः, तेषाम् उद्ग्रहणं मनसि धारणमेव स्वरूपं संज्ञास्कन्धस्य। —अभिध. टी. १।१४। "यं किंचि संजाननलक्खणं सव्वं तं एकतो कत्वा सञ्ञाक्खंधो वेदितब्बो ति। एत्थापि संजाननलक्खणं नाम सञ्ञा व। यथाह—"संजानाति संजानातीति खो आवुसो तस्मा सञ्ञा ति वुच्चती" ति [म. १।२९३] —विसुद्धि. १४।१२९। ४. तत्प्रतिपत्तिनि–क., आ., प. १, २, भ. १। ५. –कल्पज्ञानं प. १, २, भ. १, २। ६. "चतुर्भ्योऽन्ये संस्काराः संस्कारस्कन्धः" —अभिध. १।१५। विसुद्धि. १४।१३१। ७. "रूपं पञ्चेन्द्रियाण्यर्थाः पञ्चाऽविज्ञप्तिरेव च।" अभिध. १।९। "तत्थ यं किंचि सीतादीहि रुप्पनलक्खणं धम्मजातं सव्वं तं एकतो कत्वा रूपक्खंधो ति वेदितव्वं। तदेतं रुप्पनलक्खणेन एकविधं पि भूतोपादायभेदतो दुविधं। तत्थ भूतरूपं चतुब्बिधं—पथवीधातु आपोधातु तेजोधातु वायोधातू ति। उपादायरूपं चतुवीसविधं—" विसुद्धि. १४।१४-३६।



Jain Education International    For Private & Personal Use Only    www.jainelibrary.org

§ ५४. न चैतेभ्यो विज्ञानादिभ्यो व्यतिरिक्तः कश्चनात्माख्यः पदार्थः सुखदुःखेच्छाद्वेषज्ञानाधारभूतोऽध्यक्षेणावसीयते। नाप्यनुमानेन; तदव्यभिचारिलिङ्गग्रहणाभावात्। न च प्रत्यक्षानुमानव्यतिरिक्तमर्थाविसंवादि प्रमाणान्तरमस्तीति। ते च पञ्च स्कन्धाः क्षणमात्रावस्थायिन एव[1] वेदितव्याः, न पुनर्नित्याः, कियत्कालावस्थायिनो वा। एतच्च "क्षणिकाः सर्वसंस्काराः" [ का० ७] इत्यत्र दर्शयिष्यते ॥५॥

§ ५५. दुःखतत्त्वं पञ्चभेदतयाभिधायाथ दुःखतत्त्वस्य कारणभूतं समुदयतत्त्वं व्याख्याति—

समुदेति यतो लोके रागादीनां गणोऽखिलः।[2]
आत्मात्मीयभावाख्यः [3]समुदयः स उदाहृतः ॥६॥

§ ५६. यतो यस्मात्समुदयाल्लोके लोकमध्ये रागादीनां रागद्वेषादिदोषाणां गणः समवायः अखिलः समस्तः समुदेति [4]समुद्भवति। कीदृशो गण इत्याह—आत्मात्मीयभावाख्यः। आत्मा स्वम् आत्मीयः स्वकीयः तयोर्भावस्तत्त्वम्। आत्मात्मीयभावः 'अयमात्मा अयं चात्मीयः' इत्येवं संबन्धं

§ ५४. इन विज्ञान आदि स्कन्धोंसे भिन्न, सुख दुःख इच्छा द्वेष ज्ञानादिका आधारभूत आत्मा नामका कोई स्वतन्त्र पदार्थ नहीं है। और न स्कन्धोंसे भिन्न आत्माका प्रत्यक्षसे ही अनुभव होता है। ऐसे आत्माके साथ अविनाभाव रखनेवाला कोई निर्दोष लिंग भी नहीं है जिससे अनुमानके द्वारा आत्माकी सिद्धि की जाये। प्रत्यक्ष और अनुमान ये दो ही अविसंवादी प्रमाण हैं। इनसे भिन्न कोई तीसरा प्रमाण नहीं है। ये पाँचों स्कन्ध क्षणिक हैं, एक क्षण तक ही ठहरते हैं और दूसरे क्षणमें विनष्ट हो जाते हैं। ये स्कन्ध न तो कूटस्थनित्य–सदा-एकरूपसे रहनेवाले ही हैं और न कालान्तर-स्थायी—दो चार क्षण तक ठहरनेवाले—ही हैं। ये तो एक ही क्षण तक ठहरते हैं और दूसरे क्षणमें समूल नष्ट हो जाते हैं। स्कन्धोंकी क्षणिकताका समर्थन 'क्षणिकाः सर्वे संस्काराः" [ का० ७ ] इसमें किया जायेगा ॥५॥

§ ५५. इस प्रकार पंचस्कन्धरूप दुःखतत्त्वका वर्णन करके अब दुःखतत्त्वके कारणभूत समुदयतत्त्वका व्याख्यान करते हैं—

**जिससे लोकमें 'मैं हूँ, यह मेरा है' इत्यादि अहंकार ममकाररूप समस्त रागादिभावोंका समूह उत्पन्न होता है उसे समुदय कहते हैं ॥६॥**

§ ५६. जिससे लोकमें 'मैं हूँ, यह मेरा है, यह पर है, यह पराया है' इत्यादि रूपसे अपना जाल फैलानेवाले राग-द्वेषादि दोषसमूह उत्पन्न होते हैं वह समुदय है। अहंकार और ममकाररूपसे होनेवाला आत्मभाव और आत्मीयभाव ही समुदय तत्त्व है। एक जगह अहंकार और

१. "यथा हि अंगसंभारा होति सद्दो रथो इति। एवं खंधेसु सत्तेसु होति सत्तोति सम्मुति ॥" मिलिन्द.। "नन्वनित्येषु भावेषु कल्पना नाम जायते—यथोपवर्णितेन न्यायेन स्वरूपसिद्धस्य स्कन्धव्यतिरिक्तस्यात्मनः सर्वथाऽभावात्। नन्वनित्येषु रूपवेदनासंज्ञासंस्कारविज्ञानाख्येषु भावेषु आत्मेति कल्पना अभूतार्थारोपणं क्रियते आत्मा सत्त्वो जीवो जन्तुरिति। यथाहि इन्धनमुपादायाग्निः एवं स्कन्धानुपादाय आत्मा प्रज्ञप्यते।" —चतुःश. वृ. १०।३। "नात्मास्ति स्कन्धमात्रं तु क्लेशकर्माभिसंस्कृतम्। अन्तराभवसंतत्या कुक्षिमेति प्रदीपवत् ॥" —अभिध. ३।१८। बोधि. पं. पृ. ४७४। "स एवं स्कन्धसमुदायलक्षणः प्रज्ञप्तिसन्…" —तत्त्वसं. पं. पृ. १३१। २. एवावेदित भ. २। एवावेत प. १, २, भ. १। ३. "कतमं च भिक्खवे दुक्खसमुदयं अरियसच्चं? यायं तण्हा पोनोभविका नन्दिरागसहगता तत्र तत्राभिनन्दिनी सेय्यथीदं कामतण्हा भवतण्हा विभवतण्हा।"—म. नि. महाहत्थि.। विसुद्धि. १६।६१। ४. उद्भवति प. १, २, भ. १२।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इत्यर्थः । उपलक्षणत्वात् 'अयं परोऽयं च परकीयः' इत्यादि संबन्धो द्रष्टव्यः । स एवाख्या नाम यस्य स आत्मात्मीयभावाख्यः । अयं भावः—आत्मात्मीयसंबन्धेन परपरकीयादिसंबन्धेन वा यतो रागद्वेषादयः समुद्भवन्ति सः समुदयो नाम तत्त्वं बौद्धमत उदाहृतः कथितः । अत्रोत्तरार्धे सप्तनवाक्षरपादद्वये छन्दोऽन्तरसद्भावाच्छन्दोभङ्गदोषो[1] न चिन्त्यः, आर्षत्वात्प्रस्तुतशास्त्रस्य[2] ॥६॥

§ ५७. अथ दुःखसमुदयतत्त्वयोः संसारप्रवृत्तिनिमित्तयोर्विपक्षभूते मार्गनिरोधतत्त्वे प्रपञ्चयन्नाह—

क्षणिकाः सर्वसंस्कारा इत्येवं वासना यका[3] ।
स मार्ग इह विज्ञेयो[4] निरोधो मोक्ष उच्यते ॥७॥

§ ४८. परमनिकृष्टः कालः क्षणः, तत्र भवाः क्षणिकाः[5] क्षणमात्रावस्थितय[6] इत्यर्थः । सर्वे च ते संस्काराश्च पदार्थाः सर्वसंस्काराः क्षणविनश्वराः सर्वे पदार्था इत्यर्थः । तथा च बौद्धा अभिदधति—[7] स्वकारणेभ्यः पदार्थं उत्पद्यमानः किं विनश्वरस्वभाव उत्पद्यते, अविनश्वरस्वभावो वा । यद्यविनश्वरस्वभावः, तदा तद्व्यापिकायाः क्रमयौगपद्याभ्यामर्थक्रियाया अभावात्पदार्थस्यापि व्याप्य-

---

ममकार होनेसे अन्यत्र पर और परकीय बुद्धि अर्थात् ही उत्पन्न हो जाती है । तात्पर्य यह है कि 'मैं मेरा पर और पराया' इन रूपोंमें प्रकट होनेवाले आत्मभाव, आत्मीयभाव, परभाव और परकीयभावोंसे ही राग-द्वेष आदि दोष उत्पन्न होते हैं । यही भाव बौद्धमतमें समुदय तत्त्व कहे जाते हैं ।

यद्यपि इस श्लोकके उत्तरार्धके एक पादमें सात तथा दूसरे पादमें नव अक्षर हैं फिर भी छन्दभंग नहीं है । क्योंकि यह शास्त्र ऋषिप्रणीत होनेसे आर्ष है । अतः इसके अनुसार सात और नव अक्षरवाले अन्य आर्षछन्दकी प्राचीन परम्परा थी यही मान लेना चाहिए ॥६॥

§ ५७. अब संसारकी प्रवृत्तिमें निमित्तभूत दुःख और समुदयतत्त्वके विपक्षी जो मार्ग और निरोधतत्त्व हैं, उनका व्याख्यान करते हैं—

**संसारके सभी संस्कार क्षणिक हैं इस क्षणिक भावनाको मार्गतत्त्व और रागादि वासनाओंके नाशको निरोध अर्थात् मोक्ष कहते हैं ॥७॥**

§ ५८. परमनिकृष्ट अर्थात् सबसे सूक्ष्म कालको क्षण कहते हैं । संसारके सभी संस्कार या पदार्थ एक क्षण तक ही रहते हैं और द्वितीय समयमें वे स्वतः नष्ट हो जाते हैं अतएव क्षणिक हैं । पदार्थोंको क्षणिक माननेके विषयमें बौद्धोंकी विचार सरणी इस प्रकार है—

**बौद्ध**—जगत्के सभी पदार्थ अपने-अपने कारणोंसे उत्पन्न होते हैं । यह एक निर्विवाद वस्तु है । तो अब बताइए कि वे पदार्थ अपने कारणोंसे विनश्वर स्वभाव लेकर उत्पन्न होते हैं या

---

१. –दोषा न चिन्त्याः भ. २ । २. त्वं शास्त्रस्य भ. २ । ३. "अयमेव अरियो अट्ठंगिको मग्गो दुक्खनिरोधगामिनी पटिपदा…।" .—सं. नि. । विसुद्धि. १६।७५ । ४. "कतमं च भिक्खवे दुक्खनिरोधं अरियसच्चं ? यो तस्सायेव तण्हाय असेसविरागनिरोधो चागो पटिनिस्सग्गो मुत्ति अनालयो ।" दीघ. महासति.—विसुद्धि. १६।६२ । ५. तत्रेदमुक्तं भगवता—"क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया । भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥" —तत्त्वसं. पं. पृ. ११ । बोधिच. प. पृ. ३७६ । तन्त्रवा. पृ. १२० । "उक्तं च–क्षणिकाः सर्वसंस्काराः विज्ञानमात्रमेवेदं भो जिनपुत्राः यदिदं त्रैधातुकम्"—सन्मति. टी. पृ. ७३१ । ६. "उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः । तदुच्यते क्षणः सोऽस्ति यस्य तत्क्षणिकं मतम् ॥ तत्त्वसं. श्लो. ३८८ । ७. "तथाहि—भावः स्वहेतोरुत्पद्यमानः कदाचित्प्रकृत्या स्वयं नश्वरात्मैवोत्पद्यते, अनश्वरात्मा वा…अथ अनश्वरात्मेति पक्षस्तदापि नाशहेतुरकिंचित्कर एव । तस्य केनचित्स्वभावान्यथाभावस्य कर्तुमशक्यत्वात् ।"—तत्त्वसं. पृ. १४० ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्याभावः प्रसजति[1]। तथाहि—"यदेवार्थक्रियाकारि तदेव परमार्थसत्"[2] इति। स च नित्योऽर्थोऽर्थक्रियायां प्रवर्तमानः क्रमेण वा[3] प्रवर्तेत, यौगपद्येन वा। न तावत्क्रमेण; यतो ह्येकस्या[4] अर्थक्रियायाः[5] करणकाले तस्यापरार्थक्रियायाः[6] करणस्वभावो विद्यते न वा। यदि विद्यते; कुतः क्रमेण करोति। अथ सहकार्यपेक्षया इति चेत्; तेन सहकारिणा तस्य नित्यस्य कश्चिदतिशयः क्रियते न वा।

---

अविनश्वर स्वभाव लेकर ? यदि पदार्थ अविनश्वर अर्थात् सदास्थायी नित्य स्वभाववाले हैं; तो नित्यपदार्थ क्रम तथा युगपत् दोनों ही प्रकारसे अर्थक्रिया करनेमें असमर्थ होनेके कारण असत् ही सिद्ध होता है। क्योंकि जो अर्थक्रिया करता है वही परमार्थ रूपसे सत् है। अर्थक्रिया और पदार्थकी सत्तामें व्याप्यव्यापकभाव है। अर्थक्रिया व्यापक है और पदार्थकी सत्ता व्याप्य है। अर्थक्रिया क्रमसे होती है या युगपत्। जब नित्यपदार्थमें क्रम और युगपत् दोनों ही प्रकारसे अर्थक्रिया नहीं बनती अर्थात् सत्त्वकी व्यापक अर्थक्रियाका अभाव है तो व्याप्यभूत सत्ताका अभाव होनेसे अविनश्वर स्वभाववाली वस्तुका भी अभाव हो जाता है।

वह इस प्रकार—जब नित्य पदार्थ कोई अर्थक्रिया करनेकी तैयारी करता है तब वह उन अर्थक्रियाओंको क्रमसे करता है या सभीको एक साथ ही कर देता है ? नित्य पदार्थ समर्थ-स्वभाववाला तथा अपरिवर्तनशील होता है। उसमें न तो कोई नूतन अतिशय या स्वभाव उत्पन्न हो सकता है और न उसके किसी विद्यमान स्वभावका विनाश ही हो सकता है। ऐसी स्थितिमें यदि नित्य पदार्थ अपने द्वारा होनेवाले कार्योंको क्रमसे करता है तब, जिस समय वह एक कार्यको करता है उस समय उसमें दूसरे तीसरे आदि समयोंमें होनेवाली अर्थक्रियाओंके करनेका स्वभाव है या नहीं ? यदि एक अर्थक्रियाके कालमें अन्य अर्थक्रियाओंके करनेका स्वभाव भी उसमें है; तब विवक्षित अर्थक्रियाकी तरह अन्य अर्थक्रियाएँ भी उसी समय उत्पन्न हो जानी चाहिए। इस तरह सभी अर्थक्रियाओंकी युगपद् उत्पत्ति होनेपर नित्यमें 'क्रमसे' कार्य करना कहाँ सिद्ध हुआ ?

**नित्यवादी**—नित्यमें यद्यपि सभी अर्थक्रियाओंके करनेके स्वभाव सदा विद्यमान रहते हैं; पर जिन-जिन कार्योंके उत्पादक अन्य सहकारि कारण जब-जब मिल जाते हैं नित्य उन्हें तब-तब उत्पन्न कर देता है। इस तरह सहकारिकारणोंके क्रमसे, नित्य पदार्थ भी क्रमसे अर्थक्रिया करता है। सहकारी कारण तो अनित्य हैं। अतः उनका सन्निधान क्रमसे ही हुआ करता है।

---

१. "यथा यत् सत् तत् क्षणिकमेव, अक्षणिकत्वेऽर्थक्रियाविरोधात् तल्लक्षणवस्तुत्वं हीयते।" हेतुबि. पृ. ५४। "यदि न सर्वं सत् कृतकं वा प्रतिक्षणविनाशि—स्यादक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाऽयोगादर्थक्रियासामर्थ्यलक्षणमतो निवृत्तमित्यसदेव स्यात्। सर्वसामर्थ्योपाख्यं विरहलक्षणं हि निरुपाख्यमिति ॥"'''यत्र क्रमयौगपद्यायोगो न तस्य क्वचित्सामर्थ्यम्, अस्ति चाक्षणिके स इति प्रवर्त्तमानमसामर्थ्यमसल्लक्षणमाकर्षति। तेन य(त्स)त्कृतकं वा तदनित्यमेवेति सिध्यति। तावता साधनधर्ममात्रान्वयः साध्यधर्मस्य स्वभावहेतुलक्षणं सिद्धं भवति। —वादन्यायः पृ. ६–९। "क्रमेण युगपच्चापि यस्मादर्थक्रिया कृता। न भवन्ति स्थिरा भावा निःसत्त्वास्ते ततो मताः ॥ कार्याणि हि विलम्बन्ते कारणासन्निधानतः। समर्थहेतुसद्भावे क्षेपस्तेषां हि किंकृतः ॥ अथापि सन्ति नित्यस्य क्रमिणः सहकारिणः। यानपेक्ष्य करोत्येव कार्यग्रामं क्रमाश्रयम् ॥ साध्वेतत्किंतु ते तस्य भवन्ति सहकारिणः। किं योग्यरूपहेतुत्वादेकार्थकरणेन वा ॥ योग्यरूपस्य हेतुत्वे स भावस्तैः कृतो भवेत्। स चाशक्यक्रियो यस्मात्तत्स्वरूपं तदा स्थितम् ॥ कृतो वा तत्स्वरूपस्य नित्यतास्यावहीयते। विभिन्नोऽतिशयस्तस्माद्यसौ कारकः कथम् ॥" —तत्त्वसं. श्लो. ३९४–९९। २. "अर्थक्रियासमर्थं यत् तदत्र परमार्थसत्। अन्यत् संवृतिसत् प्रोक्तं; ते स्वसामान्यलक्षणे ॥" —प्र. वा. २।३। "अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः।" —न्यायबि. सू. १।१५। ३. क्रमेण प्रव–आ.। ४. –कस्य अर्थ–क.। ५. –याः काले प. १, २, म. १, २। ६. अस्या –म.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

यदि क्रियते; तदा किं पूर्वस्वभावपरित्यागेन[1] क्रियते, अपरित्यागेन वा। यदि परित्यागेन; ततोऽतादवस्थ्यापत्तेरनित्यत्वम्[2]। अथ पूर्वस्वभावापरित्यागेन; ततस्तस्य नित्यस्य तत्कृतोपकाराभावात्किं सहकार्यपेक्षया कर्तव्यम्। अथाकिंचित्करोऽपि सहकारी तेन विशिष्टकार्यार्थमपेक्ष्यते; तदयुक्तम्; यतः—

"[3]अपेक्ष्येत परः कश्चिद्यदि[4] कुर्वीत किंचन।
यदकिंचित्करं वस्तु किं केनचिदपेक्ष्यते ॥१॥" [प्र. वा. ३।२७९]

अथ तस्य प्रथमार्थक्रियाकरणकालेऽपरार्थक्रियाकरणस्वभावो न विद्यते; तथा च सति स्पष्टैव नित्यताहानिः। [5]अथासौ नित्योऽर्थो यौगपद्येनार्थक्रियां कुर्यात्; तथा सति प्रथमक्षण एवाशेषार्थ-

क्षणिकवादी—अच्छा, यह बताओ कि–जब सहकारिकारण नित्यकी सहायता करते हैं, तब वे नित्यपदार्थमें कुछ सामर्थ्य या अतिशय भी उत्पन्न करते हैं या नहीं ? यदि वे नित्यमें कोई नया अतिशय उत्पन्न करते हैं; तब उस समय नित्यके सदा-स्थायी पूर्वस्वभावमें कुछ परिवर्तन भी होता है कि नहीं ? तात्पर्य यह कि जिस समय सहकारिकारण किसी नये अतिशय या सामर्थ्यको लेकर नित्यके सामने उपस्थित होते हैं उस समय नित्य पदार्थ उस सामर्थ्यको ग्रहण करते समय जो कि उनमें पहले नहीं थी, अपने पूर्व-स्वभाव अर्थात् असमर्थ स्वभावको छोड़ते हैं या नहीं। यदि नित्यने सहकारियों-द्वारा लाये गये नये अतिशयको ग्रहण करते समय अपना पूर्व असमर्थ स्वभाव छोड़ दिया, जिसे छोड़े बिना नये स्वभावका ग्रहण करना सम्भव ही नहीं है; तब पूर्व स्वभावका परित्याग तथा नूतन स्वभावको ग्रहण करनेके कारण नित्यमें काफी परिवर्त्तन हो जायेगा और यह परिवर्तन नित्यको सदा स्थायी नित्यरूपमें नहीं रहने देगा, अर्थात् उसे अनित्य बना देगा। यदि नित्य अपने पूर्वकालीन असमर्थ स्वभावको नहीं छोड़ता है, तो इसका स्पष्ट अर्थ यह हुआ कि सहकारिकारणोंने नित्यका कुछ भी उपकार नहीं किया अर्थात् उसमें किसी भी नवीन अतिशयकी सृष्टि नहीं की। तब नित्यको ऐसे अकिंचित्कर अर्थात् कुछ भी उपकार नहीं करनेवाले–सहकारियोंकी अपेक्षा ही क्यों होगी ? जो थोड़ा-बहुत उपकार करता है, या जिससे किसी प्रयोजनकी सिद्धि होती है संसार उसीकी अपेक्षा करता है।

नित्यवादी—यद्यपि सहकारी कारण नित्य पदार्थमें कोई नवीन अतिशय उत्पन्न नहीं करते और न उसके किसी पूर्व स्वभावका विनाश ही करते हैं फिर भी नित्य पदार्थ विशिष्ट कार्यको उत्पत्तिके निमित्त उन अकिंचित्कर सहकारियोंकी भी अपेक्षा करता है। उन सहकारियोंके साथ मिलकर नित्य विशिष्ट कार्यको उत्पन्न करता है।

क्षणिकवादी—आपका तर्क असंगत है, क्योंकि "पर पदार्थ यदि कुछ कार्य करे या किसी प्रयोजनको साधे तभी उसकी अपेक्षा की जा सकती है। जो अकिंचित्कर है, किसी भी मतलबका नहीं है उस भारभूत पदार्थकी, भला कोई क्यों अपेक्षा करेगा ? उलटे ऐसे निकम्मे पदार्थसे तो लोग बचना ही चाहेंगे।"

यदि नित्यपदार्थमें प्रथम अर्थक्रिया करते समय द्वितीयादि समयोंमें होनेवाले कार्योंके उत्पादनकी सामर्थ्य नहीं है, और द्वितीयादि समयोंमें जब उन कार्योंको उत्पन्न होना है तब वह सामर्थ्य आ जाती है; तो बताइए उसमें नित्यता कहाँ रही ? क्योंकि नित्यमें जो सामर्थ्य प्रथम

१. भावस्य परि–आ.। २. ततोऽन्यदवस्थापत्ते–म. २। ३. "अपेक्षेत परः कार्यं यदि विद्येत किंचन। प्र. वा. ३।२७९। ४. कश्चित्कुर्वीत यदि किं–म. २। ५. "यौगपद्यं च नैवेष्टं तत्कार्याणां क्षयेक्षणात्। निःशेषाणि च कार्याणि सकृत्कृत्वा निवर्त्तते। सामर्थ्यात्मा स चेदार्थः सिद्धाऽस्य क्षणभङ्गिता॥"—तत्त्वसं. ४१३।१४।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

क्रियाणां करणाद् द्वितीयक्षणे तस्याकर्तृत्वं स्यात्। तथा च सैवानित्यतापत्तिः। अथ तस्य तत्स्वभावत्वात् ता एवार्थक्रिया भूयो भूयो द्वितीयादिक्षणेष्वपि कुर्यात्; तदसांप्रतम्; कृतस्य करणाभावादिति।

किं च, द्वितीयादिक्षणसाध्या अप्यर्थसार्थाः प्रथमक्षण एव प्राप्नुवन्ति तस्य तत्स्वभावत्वात्, अतत्स्वभावत्वे च तस्यानित्यत्वप्राप्तिरिति।[1] तदेवं नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरहान्न स्वकारणेभ्यो नित्यस्योत्पाद इति।[2]

§ ५९. अथ विनश्वरस्वभावः समुत्पद्यते; तथा च सति विघ्नाभावादायातमस्मदुक्तमशेषपदार्थजातस्य क्षणिकत्वम्। तथा चोक्तम्—

---

समयमें नहीं थी वही द्वितीय समयमें उत्पन्न हो गयी है। किसी भी अविद्यमान स्वभावका उत्पन्न होना ही अनित्यता है। यदि नित्यपदार्थ समस्त अर्थक्रियाओंको युगपत्–एक ही साथ एक ही क्षणमें उत्पन्न करता है, तो प्रथम क्षणमें ही द्वितीयादि अनन्त क्षणोंमें होनेवाले कार्यसमूह उत्पन्न हो जायेंगे। ऐसी दशामें फिर वह नित्य पदार्थ द्वितीय समयमें क्या कार्य करेगा? क्योंकि उसके द्वारा उत्पाद्य जितने कार्य थे वे तो पहले ही क्षणमें उत्पन्न हो चुके हैं। इस तरह जो नित्य प्रथम समयमें कर्ता था वही द्वितीयादि समयोंमें कर्तृत्वको छोड़कर अकर्ता बन जानेके कारण, अथवा जो प्रथम समयमें कर्ता होनेसे सत् था वही द्वितीयादि समयोंमें अर्थक्रिया न करनेके कारण असत् हो जानेसे नित्य नहीं रह सकता है। उसमें कर्तृत्व तथा अकर्तृत्व रूपसे परिवर्तन होनेके कारण अनित्यता ही प्राप्त होती है।

**नित्यवादी**—नित्यका अनेक कार्योंके उत्पन्न करनेका समर्थस्वभाव प्रतिक्षण जाग्रत् रहता है। अतः द्वितीयादि समयोंमें भी उसी स्वभावकी मौजूदगी होनेसे वह उन्हीं-उन्हीं कार्योंको करता रहता है, खाली नहीं बैठता।

**क्षणिकवादी**—आपका उक्त कथन तो बिलकुल अग्राह्य है, क्योंकि–जो कार्य प्रथम समयमें उत्पन्न हो ही चुके हैं, नित्य उनको द्वितीयादि समयोंमें दुबारा कैसे उत्पन्न करेगा? एक बार जो वस्तु उत्पन्न हो चुकी है, उसकी दुबारा उत्पत्ति कैसी? नित्य पदार्थमें जब समस्त कार्योंके उत्पन्न करनेमें कारणभूत समस्त स्वभाव एक ही साथ रहते हैं; तो द्वितीयादि क्षणोंमें होनेवाले सभी कार्य प्रथम ही क्षणमें उत्पन्न हो जाने चाहिए। यदि द्वितीयादि क्षणोंमें होनेवाले कार्योंको उत्पन्न करनेवाले स्वभाव प्रथम क्षणमें नहीं हैं और वे द्वितीयादि क्षणोंमें उत्पन्न होते हैं, तो अनित्यत्वका प्रसंग स्पष्ट ही है। इस प्रकार नित्य पदार्थ न तो क्रमसे ही अर्थक्रिया कर सकता है और न युगपत् ही। अतः 'स्वकारणोंसे पदार्थ अविनश्वर अर्थात् नित्य स्वभाववाला उत्पन्न होता है' यह पक्ष प्रमाणबाधित है।

§ ५९. यदि स्वकारणोंसे पदार्थ क्षणिक स्वभाववाला अर्थात् विनाशशील ही उत्पन्न होता है, इस पक्षमें हमारे द्वारा माने गये क्षणिक सिद्धान्तका ही समर्थन होता है। पदार्थ जब स्वभावसे ही विनाशशील है तब उसके क्षणिक होनेमें बाधा ही क्या हो सकती है। इस तरह हमारा क्षणिक सिद्धान्त निर्बाधरूपसे सिद्ध हो जाता है। कहा भी है—

---

१. अथ तत्स्व–म. २। २. "क्रमाक्रमाभावस्यार्थक्रियासामर्थ्याभावेन व्याप्तत्वात्। तथा हि न तावत् क्रमाक्रमाभ्यामन्यः प्रकारोऽस्ति, येनार्थक्रियासंभावनायां क्रमाक्रमाभ्यामर्थक्रियाव्याप्तिर्न स्यात्। तस्मादर्थक्रियामात्रानुबद्धतया तयोरन्यतरप्रकारस्य। उभयोरभावे चाभावादर्थक्रियामात्रस्येति ताभ्यां तस्य व्याप्तिसिद्धिः।"—क्षणभ. सि. पृ. ५५।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"जातिरेव हि भावानां विनाशे हेतुरिष्यते ।
यो जातश्च न च ध्वस्तो नश्येत्पश्चात्स केन च[1] ॥१॥"

**§ ६०. नन्वनित्यत्वे सत्यपि यस्य घटादिकस्य यदैव मुद्गरादिसामग्रीसाकल्यं[2] तदैव तद्विनश्वरमाकल्पते न पुनः प्रतिक्षणम् । ततो[3] विनाशकारणापेक्षाणामनित्यानामपि पदार्थानां न क्षणिकत्वमिति; तदेतदनुपासितगुरोर्वचः; यतो मुद्गरादिसंनिधाने सति योऽस्य घटादिकस्यान्त्यावस्थायां विनाशस्वभावः, स स्वभावस्तस्यैवोत्पत्तिसमये विद्यते, न वा । विद्यते[4] चेत् आपतितं तर्हि तदुत्पत्तिसमनन्तरमेव विनश्वरत्वम् । अथ न विद्यते स स्वभाव उत्पत्तिसमये; तर्हि कथं पश्चात्स भवेत् । अथेदृश एव तस्य स्वभावो यदुत कियन्तमपि कालं स्थित्वा तेन विनष्टव्यमिति चेत्; तर्हि मुद्गरादिसंनिधानेऽप्येष एव तस्य स्वभावः स्यात्, ततो भूयोऽपि तेन तावत्कालं स्थेयम्,**

"पदार्थोंके विनाशका कारण उनकी जाति अर्थात् उत्पत्ति या स्वभाव ही है । अर्थात् पदार्थ स्वभावसे ऐसे ही उत्पन्न होते हैं जिन्हें दूसरे क्षणमें नष्ट हो ही जाना चाहिए । जो पदार्थ उत्पन्न होकर भी अनन्तर ही नष्ट नहीं हुआ उसे पीछे कौन नष्ट कर सकेगा ? अर्थात् वह नित्य हो जायेगा, उसका कभी भी नाश नहीं हो सकेगा ।"

§ ६०. **शंका**—पदार्थ अनित्य हैं यह तो समझमें आ जाता है, किन्तु घट आदि पदार्थोंके नाशक हेतु मुद्गर आदि जब मिल जायें तभी उनका विनाश होता है, उन्हें प्रतिक्षण विनाशी मानना किसी भी तरह उचित नहीं मालूम होता । इसलिए विनाशक सामग्रीके मिलनेपर ही विनाशवाले अनित्य पदार्थोंकी तब तक तो स्थिति माननी ही चाहिए जब तक कि उनके विनाशक कारण नहीं जुट जाते । अतः पदार्थ कालान्तरस्थायी—अनित्य-अर्थात् कुछ काल तक ठहरकर नष्ट होनेवाले हैं, न कि प्रतिक्षण विनाशी ।

**समाधान**—यह शंका तो उस व्यक्तिकी मालूम होती है जिसने गुरुके पाससे ज्ञान प्राप्त नहीं किया । आप यह बताइए कि मुद्गर आदि विनाशक कारणोंके मिलनेपर घट आदिकी अन्तिम अवस्थामें जो विनश्वर स्वभाव प्रकट होता है वह स्वभाव उन घटादिकी उत्पत्तिके समय भी विद्यमान था या नहीं ? यदि था, तो उन घटादि पदार्थोंको अपने उस विनश्वर स्वभावके कारण—उत्पत्तिके बाद ही नष्ट हो जाना चाहिए । ऐसी अवस्थामें वे पदार्थ कालान्तरस्थायी न होकर क्षणिक ही सिद्ध होते हैं । यदि वह स्वभाव उत्पत्तिके समय नहीं था; तो पीछे वह कहांसे आयेगा ? क्योंकि स्वभाव तो वस्तुकी उत्पत्तिके समयसे ही होता है । यदि आप कहें कि 'उसका ऐसा ही एक विचित्र स्वभाव है जो उसे कुछ काल तक ठहर कर ही नष्ट होना चाहिए, उत्पत्तिके अनन्तर क्षणमें ही नहीं' सो भी ठीक नहीं है; क्योंकि यदि उसका कुछ काल तक ठहरकर नष्ट होनेका स्वभाव है और स्वभावका सदा बने रहनेका नियम है तो मुद्गर आदि विनाशक कारणोंके मिलनेपर भी उसका वह 'कुछ काल तक ठहरकर नष्ट होनेका स्वभाव' घटादिको और भी कुछ काल तक ठहरा देगा, तुरन्त नष्ट नहीं होने देगा । इस तरह जब भी मुद्गर आदि विनाशक कारण मिलेंगे तभी वह कुछ काल तक ठहर कर नष्ट होनेका स्वभाव बीचमें आकर पदार्थको और कुछ काल तक ठहरा देगा और इस तरह विनाशक हेतुओंका प्रहार बराबर निष्फल होता जायेगा । तब आप घड़ेपर एक बार तो क्या सौ बार भी मुद्गरसे प्रहार किये जाइए पर घड़ा हर बार अपने कुछ काल तक ठहरकर नष्ट होनेवाले स्वभावसे अपनी आत्मरक्षा करता जायेगा और इस तरह घड़ा

१. वा क., वः–प. १, २, भ. १, २ । उद्धृतोऽयम्—सिद्धिवि. टी. पृ. ३९० । २. तदैव विन–भ. २ । ३. विनाशकारणेऽपेक्षा–भ. २ । ४. चेत्तर्हि तदुत्पत्तिसमयानन्तरमेव विन–भ. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

एवं च मुद्गरादिघातशतपातेऽपि न विनाशो भवेत्, जातं कल्पान्तस्थायित्वं घटादेः, तथा च जगद्व्यवहारव्यवस्थाविलोपपातकपङ्किलता, इत्यभ्युपेयमनिच्छुनापि क्षणक्षयित्वं पदार्थानाम्। प्रयोगस्त्वेवम्--यद्विनश्वरस्वभावं तदुत्पत्तिसमयेऽपि तत्स्वरूपं यथा अन्त्यक्षणवर्तिघटस्य स्वरूपम्, विनश्वरस्वभावं च रूपरसादिकमुदयत आरभ्येति स्वभावहेतुः। तदेवं विनाशहेतोरकिंचित्करत्वात् स्वहेतुत एव पदार्थानामनित्यानामेवोत्पत्तेः क्षणिकत्वमवस्थितमिति[2]।

§ ६१. ननु[3] यदि क्षणक्षयिणो भावाः, कथं तर्हि 'स एवायम्' इति ज्ञानम्। उच्यते-निरन्तर-सदृशापरापरक्षणनिरीक्षणचैतन्योदयादविद्यानुबन्धाच्च पूर्वक्षणप्रलयकाल एव दीपकलिकायां दीप-कलिकान्तरमिव तत्सदृशमपरं क्षणान्तरमुदयते, तेन समानाकारज्ञानपरंपरापरिचयचिरतरपरि-

कल्पान्तकाल तक स्थिर हो जायेगा। इस प्रकार जब संसारका कोई भी पदार्थ नष्ट नहीं हो सकेगा तब संसारके समस्त हिंस्यहिंसक मृत्यु आदि व्यवहारोंकी व्यवस्थाका लोप हो जायेगा। और ऐसी कल्पना करनेवालेके माथेपर व्यवहारको व्यवस्थाके विलोपकी गहरी पाप कालिमा लगेगी। अतः जगत्के व्यवहारके अनुसार पदार्थोंको क्षणिक मानना ही पड़ेगा, आपका चित्त अपने पूर्वग्रहके कारण भले ही उसे न मानना चाहता हो पर पदार्थकी व्यवस्था तो लोक प्रतीतिसे होती है किसी-की इच्छा या अनिच्छासे नहीं। अतः जो अन्तमें विनश्वर स्वभाववाले हैं वे उत्पत्तिके समय भी विनश्वर स्वभाववाले ही रहते हैं जैसे कि अन्तमें नष्ट होनेवाले घड़ेका विनश्वर स्वरूप यदि अन्तमें रहता है तो उसे उत्पत्तिकालमें भी रहना चाहिए अन्यथा अन्तमें भी वह स्वभाव कहाँसे आयेगा? उसी तरह चूँकि जगत्के समस्त रूप, रस आदि भी अन्तमें विनश्वर हैं और इसीलिए वे उत्पत्तिके समयसे ही विनश्वर स्वभाववाले हैं। यह क्षणिकत्वको सिद्ध करनेवाले स्वभाव हेतुका प्रयोग है। इस तरह जब विनाशक कारण विनाशके प्रति अकिंचित्कर अर्थात् निकम्मे साबित हो जाते हैं तो यह निर्विवाद सिद्ध हो जाता है कि पदार्थ अपने कारणोंसे विनाशस्वभाव-वाले ही उत्पन्न होते हैं। इस तरह पदार्थ जब अपने कारणोंसे ही विनश्वर स्वभावको लेकर उत्पन्न हुए हैं तब उन्हें कौन स्थिर रख सकता है, वे तो अपने उस स्वभावके कारण दूसरे ही क्षणमें नियमसे नष्ट हो ही जायेंगे। यही पदार्थोंकी क्षणिकताका स्वभावमूलक विवेचन है।

§ ६१. शंका—यदि पदार्थ क्षणिक हैं अर्थात् प्रति समय नष्ट होकर नये-नये उत्पन्न होते हैं तो 'यह वही है' यह स्थिरतामूलक प्रत्यभिज्ञान कैसे होगा?

समाधान—'प्रत्यभिज्ञान होता है' यह तो ठीक है, पर जिस तरह सीपमें चाँदीका ज्ञान मिथ्या है, उसी तरह 'यह वही है' यह प्रत्यभिज्ञान भी सदृश क्षणोंमें एकत्वका मिथ्या भान करने-के कारण सत्य नहीं है। असल बात तो यह है कि—पदार्थ प्रतिक्षणमें विनष्ट हो रहे हैं और उनकी जगह नये-नये सदृश पदार्थ तुरन्त ही उत्पन्न हो रहे हैं। देखो दीपककी लौ प्रतिक्षण नष्ट होती है और द्वितीय क्षणमें उसकी जगह उस पूर्व दीपकलिकाके सदृश ही नूतन दीपकलिका

१. जगद्व्यवस्थालोपपातक-म. २। २. -ति यदि म. २। ३. "सदृशापरोत्पत्तिविप्रलब्धो वा, सदृशे हि तदेवेदमिति बुद्धिर्यमजे।....अत्रापि सदृशापरोत्पत्तिविप्रलब्धो लूनपुनर्जातकेशनखा-दिवत्...." —प्र. वार्तिकाल. २।१०९। "तस्मात् सदृशापरभावनिबन्धन एवायं केशकदली-स्तम्बादिष्विव आकारसाम्यतामात्रापहृदयानां भ्रान्त एव तत्त्राध्यवसायो मन्तव्यः........ (पृ. ८६) सदृशापरभावग्रहकृतश्च अर्वाग्दर्शनानामेकत्वविभ्रमो लूनपुनर्जातेष्विव नखकेशादिष्विति किन्नेष्यते (पृ. १२०)। सदृशापरभावनिबन्धनं चैकतया प्रत्यभिज्ञानं लूनपुनर्जातेष्विव केशन-खादिषु इत्यत्र विरोधाभावादिति।" (पृ. १३६)—हेतुबि., टी.। "तुल्येत्यादिना भदन्तशुभगुप्तस्य परिहारमाशङ्कते—तुल्यापरक्षणोत्पादाद्यथा नित्यत्वविभ्रमः। अविच्छिन्नसजातीयग्रहे चेत्स्थूलविभ्रमः।" —तत्त्वसं. का. १९७२।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

णामाम्निरन्तरोदयाच्च पूर्वक्षणानामत्यन्तोच्छेदेऽपि स एवायमित्यध्यवसायः प्रसभं प्रादुर्भवति। दृश्यते च[1] यथा लूनपुनरुत्पन्नेषु [2]नखकेशकलापादिषु 'स एवायम्' इति प्रतीतिः तथेहापि किं न संभाव्यते सुजनेन। तस्मात्सिद्धमिदं यत्सत्तत्क्षणिकमिति। अत एव युक्तियुक्तमुक्तमेतत् 'क्षणिकाः सर्वसंस्काराः' इति।

§ ६२. अथ प्रस्तुतं प्रस्तूयते—'क्षणिकाः सर्वसंस्काराः' इत्यत्र इतिशब्दात्प्रकारार्थात् नास्त्यात्मा कश्चन, किंतु ज्ञानक्षणसंताना एव सन्तीत्यादिकमप्यत्र गृह्यते। ततोऽयमर्थः—क्षणिकाः सर्वे पदार्थाः, नास्त्यात्मेत्याद्या[3]कारा, एवमीदृशी यका 'स्वार्थे कप्रत्यये, या वासना पूर्वज्ञानजनिता तदुत्तरज्ञाने शक्तिः क्षणपरम्पराप्राप्ता मानसी प्रतीतिरित्यर्थः, स मार्गो नामार्यसत्यम्, इह बौद्धमते विज्ञेयोऽवगन्तव्यः। सर्वपदार्थक्षणिकत्वनैरात्म्याद्याकारश्चित्तविशेषो मार्ग इत्यर्थः। स च [4]निरोधस्य कारणं द्रष्टव्यः।

निरन्तर उत्पन्न होती है यह बात बारीकीसे देखनेपर सहज ही अनुभवमें आ जाती है। पर साधारणतया लोग तो यही समझते हैं कि—'यह वही दीपक है।' ठीक इसी तरह पदार्थोंका अत्यन्त-विनाश होनेपर भी उनकी जगह दूसरे नये सदृश पदार्थ निरन्तर उत्पन्न होनेके कारण तथा अनादि कालीन 'यह वही है' ऐसी अविद्या वासनाके कारण हमें सदृश क्षणोंमें भी 'यह वही है' ऐसा एकत्व भान बलात् होता है। इसका कारण है हमारी स्थूल दृष्टि। हम समान आकारवाले पदार्थोंमें निरन्तर चिरकालीन परिचयके कारण तथा उनके प्रतिक्षण होनेवाले निरन्तर सदृश परिणमनसे भ्रममें पड़ जाते हैं और मान बैठते हैं कि 'यह वही पदार्थ है', जबकि वह पूर्वक्षणवर्ती पदार्थ समूल नष्ट हो चुका है और उसकी जगह ठीक वैसी ही शक्लवाला दूसरा नया ही प्रतिनिधि मौजूद है। दीपककी बात जाने दीजिए—बाल बनवाते समय हम बालोंको तथा नखोंको कटवाकर फेंक देते हैं, पर जब दूसरे वैसे ही बाल तथा नख उग आते हैं तब भी हमारी स्थूलबुद्धि 'ये वही बाल हैं, ये वही नख हैं' इस तरह पूर्व सदृश बालों और नखोंमें एकत्वका मिथ्या भान करने लगती है। इसलिए यह तो अनादिकालीन अविद्या तथा हमारी स्थूल दृष्टिका ही चमत्कार है जो हम सदृश पदार्थोंमें भी एकत्वका भान कर बैठते हैं। इसी तरह जगत्के सभी पदार्थ प्रतिक्षण नष्ट होकर अपने नये-नये सदृश रूपोंको धारण करते हैं परन्तु हम स्थूलबुद्धि अविद्या, वासना तथा पदार्थोंकी सदृश निरन्तर उत्पत्तिसे ठगे जाते हैं और उन्हें 'ये वही हैं' इस तरह एक मान लेते हैं। इस विवेचनसे यह सिद्ध हो जाता है कि जो भी संसारमें सत् है वह क्षणिक है। अतः 'सभी संस्कार क्षणिक हैं' यह युक्तियुक्त ही कहा गया है।

§ ६२. अब प्रस्तुत श्लोकका व्याख्यान करते हैं—'क्षणिकाः सर्वसंस्कारा इति' यहाँ इति शब्द प्रकारवाची है। अतः 'कोई आत्मा नामका स्वतन्त्र तत्त्व नहीं है किन्तु पूर्वापर ज्ञानप्रवाह रूप सन्तानें ही हैं' इत्यादि प्रकारोंका संग्रह हो जाता है। इसलिए यह फलितार्थ हुआ कि—'सभी पदार्थ क्षणिक हैं', 'आत्मा नहीं है' इत्यादि प्रकारकी जो वासना है, उसे बौद्धमतके अनुसार मार्ग नामका आर्यसत्य कहते हैं। पूर्वज्ञानसे उत्पन्न होनेवाले उत्तरज्ञानमें पूर्वज्ञानसे क्षण परम्परा-से जो शक्ति प्राप्त होती है उसे वासना या मानसी प्रतीति कहते हैं। तात्पर्य यह कि—सभी पदार्थ क्षणिक हैं तथा 'आत्मा नहीं है' इत्यादि क्षणिक, नैरात्म्यादि आकारवाला चित्त विशेष ही मार्ग है। यह मार्ग आर्यसत्य निरोधका कारण होता है।

१. च लून–म. २। २. नखकेशकपालादि–म. २। ३. –द्या एवमाकारा एव यका म. २। ४. विरोधस्य म. २।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ६३. अथ चतुर्थमार्यसत्यमाह–निरोधो निरोधनामकं तत्त्वं मोक्षोऽपवर्गं उच्यतेऽभिधीयते। चित्तस्य निःक्लेशावस्थारूपो निरोधो मुक्तिर्निगद्यत इत्यर्थः। एतानि दुःखादीन्यार्यसत्यानि चत्वारि यानि ग्रन्थकृतात्रानन्तरमेवोक्तानि तानि सौत्रान्तिकमतेनैवेति विज्ञेयम् ॥७॥

§ ६४. वैभाषिकादिभेदनिर्देशं विना सामान्यतो बौद्धमतेन तु द्वादशैव ये पदार्था भवन्ति तानपि संप्रति विवक्षुः श्लोकमेनमाह—

पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि[1] च ॥८॥

§ ६५. व्याख्या—पञ्चसंख्यानीन्द्रियाणि श्रोत्रचक्षुर्घ्राणरसनस्पर्शन[2]रूपाणि। शब्दाद्याः शब्दरूपरसगन्धस्पर्शाः पञ्च विषया इन्द्रियगोचराः। मानसं चित्तं यस्य शब्दायतनमिति नामान्तरम्। धर्माः सुखदुःखादयस्तेषामायतनं गृहं शरीरमित्यर्थः। एतान्यनन्तरोक्तानि द्वादशसंख्यान्यायतनान्यायतनसंज्ञानि तत्त्वानि, चः समुच्चये, न केवलं प्रागुक्तानि चत्वारि दुःखादीन्येव, किन्त्वेतानि द्वादशायतनानि च भवन्ति। एतानि चायतनानि क्षणिकानि ज्ञातव्यानि। यतो बौद्धा अत्रैवमभिदधते। अर्थक्रियालक्षणं सत्त्वं प्रागुक्तन्यायेनाक्षणिकान्निवर्तमानं क्षणिकेष्वेवावतिष्ठते। तथा च सति

---

§ ६३. अब चौथे आर्यसत्य निरोधका वर्णन करते हैं। मोक्ष या अपवर्ग–( जिसके बाद पवर्गका कोई भी अक्षर न हो अर्थात् जिसमें पवर्गके अन्तिम अक्षर 'म'का प्रयोग हो ऐसे मोक्ष ) को निरोधतत्त्व कहते हैं। अर्थात् अविद्यातृष्णा रूप क्लेशसे रहित चित्तकी निःक्लेश अवस्था निरोध—मुक्ति कही जाती है।

अभी जिन दुःखादि चार आर्यसत्योंका ग्रन्थकारने वर्णन किया है वह सौत्रान्तिकमतकी दृष्टिसे समझना चाहिए ॥७॥

§ ६४. वैभाषिक आदि भेदोंकी विवक्षा नहीं करके सामान्यसे बौद्धमतमें जो द्वादशायतन अर्थात् बारह पदार्थ प्रसिद्ध हैं उनके कहनेकी इच्छासे इस श्लोकको कहते हैं—

पाँच इन्द्रियाँ, शब्दादि पाँच विषय, चित्त और सुख-दुःखादि धर्मोंका आधार शरीर ये बारह आयतन हैं ॥८॥

§ ६५. श्रोत्र, चक्षु, घ्राण, जिह्वा तथा स्पर्शन ये पाँच इन्द्रियाँ, शब्द, रूप, रस, गन्ध एवं स्पर्श ये पाँच उन इन्द्रियोंके विषय, मानस—चित्त, अर्थात् शब्दायतन, सुख-दुःख आदि धर्मोंका आयतन–गृह अर्थात् आधारभूत शरीर—ये बारह आयतन हैं। श्लोकमें 'च' शब्द समुच्चयार्थक है। इससे यह मालूम होता है कि केवल पहले कहे गये चार आर्यसत्य ही नहीं हैं किन्तु ये बारह आयतन भी हैं। ये आयतन भी क्षणिक हैं। बौद्धोंका यह सिद्धान्त है कि—अर्थक्रिया रूप ही सत्त्व होता है, जो पदार्थ अर्थक्रिया करता है वही सत् कहा जाता है। पहले कही गयी युक्तियोंके अनुसार नित्यपदार्थ क्रम तथा युगपत् दोनों ही प्रकारसे अर्थक्रिया नहीं कर सकता अतः अर्थक्रिया लक्षण सत्त्व नित्यपदार्थको छोड़कर क्षणिक अर्थमें ही आकर रहता है। ऐसी अवस्थामें यह अनुमान

---

१. "आयतनानीति द्वादशायतनानि–चक्खायतनं, रूपायतनं, सोतायतनं, सद्दायतनं, घानायतनं, गन्धायतनं, रसायतनं, कायायतनं, फोट्ठब्बायतनं, मनायतनं, धम्मायतनं ति।" —वि. म. पृ. ३३४।
२. –स्पर्शनानि म. २।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

सुलभं क्षणिकत्वानुमानम्[1]—यत्सत्तत्क्षणिकं, यथा प्रदीपकलिकादि। सन्ति च द्वादशायतनानीति। अनेन चानुमानेन द्वादशायतनव्यतिरिक्तस्यापरस्यार्थस्याभावात्, द्वादशस्वायतनेष्वेव क्षणिकत्वं व्यवस्थितं भवतीति।

§ ६६. तदेवं सौत्रान्तिकमतेन चत्वारि दुःखादीनि तत्त्वानि, सामान्यतो बौद्धमतेन चायतनरूपाणि द्वादश तत्त्वानि प्रतिपाद्य, संप्रति प्रमाणस्य विशेषलक्षणमत्राभिधानीयम्, तच्च सामान्यलक्षणाविनाभावीति प्रथमं प्रमाणस्य सामान्यलक्षणमुच्यते—"प्रमाणमविसंवादि ज्ञानम्" [प्र० वा० १।३] इति। अविसंवादकं ज्ञानं प्रमाणम्। अविसंवादकत्वं[3] चार्थप्रापकत्वेन[4] व्याप्तम्, अर्थाप्रापकस्याविसंवादित्वाभावात् [5]केशोण्डुकज्ञानवत्। अर्थप्रापकत्वं च प्रवर्तकत्वेन व्यापि, अप्रवर्तकस्यार्थाप्राप-

करना बिलकुल सहज है कि–जो-जो सत् होते हैं वे सब क्षणिक हैं जैसे कि दीपककी लौ। द्वादशायतन भी सत् हैं। इस अनुमानसे यह भी सिद्ध होता है कि–बारह आयतनसे अतिरिक्त कोई पदार्थ नहीं है। अतः क्षणिकत्व बारह आयतनों में ही रहता है।

§ ६६. इस प्रकार सौत्रान्तिक मतके अनुसार चार आर्यसत्योंका तथा सामान्य बौद्धमतकी दृष्टिसे बारह आयतनोंके स्वरूपका निरूपण किया है। अब प्रमाणके प्रत्यक्ष और अनुमान इन दो भेदोंके लक्षण कहते हैं। प्रमाणके विशेषोंके लक्षण तो स्पष्ट रूपसे तभी कहे जा सकते हैं जब पहले प्रमाण कह दिया जाय। अतः पहले प्रमाण सामान्यका लक्षण कहते हैं—

"अविसंवादी ज्ञानको प्रमाण कहते हैं।" इससे अविसंवादक ज्ञान ही प्रमाणकी कोटिमें आता है। जो ज्ञान अर्थका प्रापक होता है वही ज्ञान अविसंवादी कहा जाता है। जिस ज्ञानके द्वारा अर्थकी प्राप्ति नहीं होती वह अविसंवादी नहीं हो सकता। जैसे केशोण्डुक ज्ञान। स्वच्छ आकाशमें धूपसे चल-फिरकर आनेके बाद बालों-जैसी या उण्डुक—मच्छरों-जैसी काली रेखाएँ तथा धब्बे मालूम होते हैं उन्हें केशोण्डुक ज्ञान कहते हैं। यह केशोण्डुक ज्ञान केश और उण्डुक—मच्छर का प्रतिभास कराके भी इनकी प्राप्ति नहीं कराता अतः प्रापक न होनेसे अविसंवादी भी नहीं है। इस तरह अविसंवादित्वका अर्थ प्रापकत्वके साथ व्याप्ति अर्थात् अविनाभाव है। अर्थप्रापकत्व प्रवर्तकत्वके साथ अविनाभाव रखता है; क्योंकि जो ज्ञान प्रवर्तक ही नहीं है वह अर्थकी प्राप्ति भी नहीं कराता। इसी तरह प्रवर्तकत्व विषयोपदर्शकत्वसे अपना अविनाभावी सम्बन्ध रखता है। जो

१. "न चैवाक्षणिकस्य क्वचित् कदाचित् शक्तिरस्ति, क्रमयौगपद्याभ्यां कार्यक्रियाशक्तिविरहात्। इत्थं च यत् सत् सत् क्षणिकमेवेति व्याप्तिसिद्धिः। नैव प्रत्यक्षतः कार्यविरहाद्वा सर्वशक्तिविरहोऽक्षणिकत्वे उच्यते, किंतु तद्व्यापकविरहात्। तथा हि—क्रमयौगपद्याभ्यां कार्यक्रिया व्याप्ता प्रकारान्तराभावात्। ततः कार्यक्रियाशक्तिव्यापकयोस्तयोरक्षणिकत्वे विरोधात् निवृत्तेस्तद्व्याप्तायाः कार्यक्रियाशक्तेरपि निवृत्तिरिति सर्वशक्तिविरहलक्षणमसत्त्वमक्षणिकत्वे व्यापकानुपलब्धिराकर्षति, विरुद्धयोरेकत्रायोगात्। ततो निवृत्तं सत्त्वं क्षणिकेष्वेवावतिष्ठमानं तदात्मतामनुभवतीति—'यत् सत् तत् क्षणिकमेव' इत्यन्वयव्यतिरेकरूपाया व्याप्तेः सिद्धिर्निश्चयो भवति।"—हेतुबि. पृ. १४४। २. "प्रमाणमविसंवादि ज्ञानं; अर्थक्रियास्थितिः। अविसंवादनं।"—प्र. वा. १।३। "अविसंवादकं ज्ञानं सम्यग्ज्ञानम्।"—न्यायबि. टी. पृ. १०। ३. "लोके च पूर्वमुपदर्शितमर्थं प्रापयन् संवादक उच्यते। तद्वज्ज्ञानमपि स्वयं प्रदर्शितमर्थं प्रापयत् संवादकमुच्यते। प्रदर्शिते चार्थे प्रवर्तकत्वमेव प्रापकत्वम्, नान्यत्। तथा हि—न जनयदर्थं प्रापयति, अपि त्वर्थे पुरुषं प्रवर्तयत् प्रापयत्यर्थम्। प्रवर्तकत्वमपि प्रवृत्तिविषयप्रदर्शकत्वमेव। न हि पुरुषं हठात् प्रवर्तयितुं शक्नोति विज्ञानम्।"—न्यायबि. टी. पृ. १७। ४. "प्राप्तुं शक्यमर्थमादर्शयत् प्रापकम्। प्रापकत्वाच्च प्रमाणम्॥"—न्यायबि. टी. पृ. २१। ५. "यथा चिरकालीनाध्ययनादिखिन्नस्य अस्थितस्य नीललोहितादिगुणविशिष्टः केशोण्डुकाख्यः कश्चिन्नयनाग्रे परिस्फुटति। अथवा करसंमृदितलोचनरश्मिषु येयं केशपिण्डावस्था स केशोण्डुकः।"—स्याद्वादी. युक्ति. पृ. ९९।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कत्वात् । तद्वदेव प्रवर्तकत्वमपि विषयोपदर्शकत्वेन व्यानशे । न हि ज्ञानं हस्ते गृहीत्वा पुरुषं प्रवर्तयति, स्वविषयं तूपदर्शयत्प्रवर्तकमुच्यते प्रापकं चेति । स्वविषयोपदर्शकत्वव्यतिरेकेण नान्यत्प्रापकत्वम् । तच्च शक्तिरूपम् । उक्तं च "प्रापणशक्तिः प्रामाण्यं तदेव च प्रापकत्वम्" [ ] इति । स्वविषयोपदर्शके च प्रत्यक्षानुमान एव, न ज्ञानान्तरम् । अतस्ते एव लक्षणार्हे, तयोश्च द्वयोरप्यविसंवादकत्वमस्ति लक्षणम् । प्रत्यक्षेण ह्यर्थक्रियासाधकं वस्तु दृष्टतयावगतं सत्प्रदर्शितं भवति, अनुमानेन तु दृष्टलिङ्गाव्यभिचारितयाध्यवसितं सत्प्रदर्शितं भवतीत्यनयोः स्वविषय[2]प्रदर्शकत्वमेव प्रापकत्वम् । यद्यपि च प्रत्यक्षस्य क्षणो ग्राह्यः, स च निवृत्तत्वान्न प्राप्यते, तथापि तत्संतानोऽध्यवसेयः प्रवृत्तौ प्राप्यत इति [3]संतानविषयं प्रदर्शितार्थप्रापकत्वमध्यक्षस्य प्रामाण्यम् । [4]अनु-

ज्ञान अपने विषयका यथार्थ उपदर्शन अर्थात् प्रतिभास या निश्चय कराता है वही प्रवृत्तिमें प्रयोजक होकर प्रवर्तक होता है और वही प्रापक भी कहा जाता है। ज्ञान ज्ञाताका हाथ पकड़कर तो उसे पदार्थ तक नहीं ले जा सकता। हां, वह तो इतना ही कर सकता है कि—प्रमाताको पदार्थका यथार्थ उपदर्शन करा दे। ज्ञानमें इसी विषयोपदर्शन रूप ही प्रवर्तकता तथा प्रापकता है। स्वविषयके उपदर्शनको छोड़कर दूसरी कोई भी प्रवर्तकता या प्रापकता ज्ञानमें नहीं बन सकती। यह प्रापकता शक्तिरूप है। कहा भी है—"प्रापण शक्तिको ही प्रामाण्य कहते हैं, और ज्ञानमें इस शक्तिका होना ही प्रापकत्व है।" प्रत्यक्ष और अनुमान ही अपने विषयके यथार्थ उपदर्शक होते हैं, अन्य ज्ञान नहीं। इसीलिए प्रत्यक्ष और अनुमानका ही लक्षण किया जाना चाहिए। इन दोनोंका सामान्य लक्षण अविसंवादकत्व है। प्रत्यक्ष तो अर्थक्रिया साधक स्वलक्षण रूप वस्तुको साक्षात् विषय करके उसका उपदर्शन कराता है। पर अनुमान लिंगदर्शनकी विषयभूत स्वलक्षण वस्तुके साथ अविनाभाव रखनेवाली साध्य वस्तुका अध्यवसाय कराकर प्रदर्शन कराता है, तब अविसंवादी होता है। इस तरह प्रत्यक्ष तथा अनुमान दोनोंमें स्वविषयोपदर्शनरूप प्रापकत्व है।

[ प्रश्न—जब पदार्थ प्रतिक्षण विनष्ट हो रहे हैं अतएव प्रत्यक्षका जो अर्थक्षण ग्राह्य-विषय था वह तो प्रवृत्तिकाल तक ठहरता ही नहीं है जिससे वह उसकी प्राप्ति कराके अविसंवादक बन सके। प्रत्यक्षमें प्रापकता और प्रापकतामूलक प्रमाणता कैसे सिद्ध हो सकती है? ]

उत्तर—यद्यपि निर्विकल्पक प्रत्यक्षका साक्षात्-ग्राह्य विषयभूत पदार्थ क्षणवर्ती स्वलक्षण ही है और वह द्वितीय क्षणमें नष्ट हो जाता है पर उस पदार्थका जो सन्तान है वह अध्यवसेय—निश्चय विषय बनता है अर्थात् प्रत्यक्षसे उत्पन्न होनेवाला विकल्प ज्ञान उस पदार्थके सन्तानका अध्यवसाय अर्थात् निश्चय कराता है और वही सन्तान प्रवृत्तिके बाद प्राप्त होता है। अतः सन्तानके विषयमें प्रदर्शित अर्थकी प्रापकतारूप प्रामाण्य प्रत्यक्षका है। अतः प्रत्यक्षमें तत्क्षणवर्ती स्वलक्षण पदार्थकी दृष्टिसे प्रापकता न भी बने पर सन्तानकी दृष्टिसे तो बन ही जाती है। क्योंकि ग्राह्य और अध्यवसेयका एकत्वाध्यवसाय है।

---

१. "तथा च प्रत्यक्षं प्रतिभासमानं नियतमर्थं दर्शयति । अनुमानं च लिङ्गसम्बद्धं नियतमर्थं दर्शयति । अत एते नियतस्यार्थस्य प्रदर्शके । तेन ते प्रमाणे । नान्यद्विज्ञानम् ।"—न्यायबि. टी. पृ. २१ । २. –षयदर्श–आ. । ३. "नोच्यते-यस्मिन्नेव काले परिच्छिद्यते तस्मिन्नेव काले प्रापयितव्यमिति । अन्यो हि दर्शनकालः, अन्यश्च प्राप्तिकालः । किन्तु यत्कालं परिच्छिन्नं तदेव तेन प्रापणीयम् । अभेदाध्यवसायाच्च संतानगतमेकत्वं द्रष्टव्यमिति ।"—न्यायबि. टी. पृ. २६ । ४. "द्विविधो हि विषयः प्रमाणस्य—ग्राह्यश्च यदाकारमुत्पद्यते, प्रापणीयश्च यमध्यवसति । अन्यो हि ग्राह्योऽन्यश्चाध्यवसेयः । प्रत्यक्षस्य हि क्षण एको ग्राह्यः । अध्यवसेयस्तु प्रत्यक्षबलोत्पन्नेन निश्चयेन संतान एव । संतान एव च प्रत्यक्षस्य प्रापणीयः । क्षणस्य प्रापयितुमशक्यत्वात् ।"—न्यायबि. टी. पृ. ७१ । "तथानुमानमपि स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेरनर्थग्राहि ।"—न्यायबि. टी. पृ. ७१ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

मानस्य तु लिङ्गदर्शनेन[1] विकल्प्यः स्वाकारो ग्राह्यो न बाह्योऽर्थः, प्राप्यस्तु बाह्यः स्वाकाराभेदेनाध्यवसित इति । तद्विषयमस्यापि प्रदर्शितार्थप्रापकत्वं प्रामाण्यम् । तदुक्तम्—"न ह्याभ्यामर्थं[2] परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां विसंवाद्यते" [ ] इति[3] ।

§ ६७. प्राप्यमाणं च वस्तु नियतदेशकालाकारं प्राप्यत इति तथाभूतवस्तुप्रदर्शकयोः प्रत्यक्षानुमानयोरेव प्रामाण्यं न ज्ञानान्तरस्य । तेन पीतशङ्खादिग्राहिज्ञानानामपि प्रापकत्वात्प्रामाण्यप्रसक्तिर्न भवति, तेषां प्रदर्शितार्थाप्रापकत्वात् । यद्देशकालाकारं हि वस्तु तैः प्रदर्शितं, न तैत्तथा[4] प्राप्यते, यच्च यथा प्राप्यते न तैस्तत्तथा[5] प्रदर्शितम्, देशादिभेदेन वस्तुभेदस्य निश्चितत्वादिति[6] न तेषां प्रदर्शितार्थप्रापकता, ततो न प्रामाण्यमपि । नापि प्रमाणद्वयव्यतिरिक्तं शब्दादिकं प्रदर्शितार्थ-

[ प्रश्न—अनुमानका विषय अग्नि सामान्य आदि हैं और सामान्य पदार्थ आपके मतसे अन्यापोहरूप है । अन्यापोहका तात्पर्य है विकल्प बुद्धिमें कल्पित या प्रतिबिम्बित अनुगत आकार । इस तरह अनुमानका विषय अन्ततः विकल्पबुद्धिमें प्रतिबिम्बित आकार ही होता है । अतः जब अनुमान बाह्य स्वलक्षणको विषय ही नहीं करता तब उसमें अर्थप्रापकत्वरूप अविसंवादित्व कैसे सिद्ध होता है ? ]

उत्तर—अनुमानात्मक विकल्प लिंगदर्शनसे उत्पन्न होता है । अतः उस अनुमान विकल्पका ग्राह्य विषय विकल्प्य स्वीकार होता है । बाह्यार्थ नहीं । तात्पर्य यह है कि अनुमानविकल्पका आलम्बनीय विषय तो सामान्य पदार्थ अर्थात् विकल्पबुद्धिमें प्रतिबिम्बित स्वाकार होता है । किन्तु प्राप्य विषय तो बाह्य स्वलक्षण ही होता है । इस प्राप्य बाह्यस्वलक्षणका आलम्बनीभूत स्वाकारके साथ जिसे "मैंने जिसका अनुमान किया था उसे ही प्राप्त कर रहा हूँ" ऐसा एकत्वाध्यवसाय करके प्रवृत्ति करनेपर अर्थप्रापकता सिद्ध हो जाती है । अतः अनुमानमें भी प्राप्य विषयकी अपेक्षा स्वविषयोपदर्शनरूप प्रापकता और तन्मूलक प्रामाण्यका निश्चय हो जाता है । इसलिए अनुमान भी अविसंवादी होनेसे प्रमाण है । कहा भी है—"इन प्रत्यक्ष और अनुमानसे अर्थको जानकर प्रवृत्ति करनेवाले पुरुषकी अर्थक्रियामें कोई भी विसंवाद नहीं देखा जाता ।"

§ ६७, प्राप्त होनेवाली वस्तु नियत देश, काल तथा आकारमें ही प्राप्त होनी चाहिए । अर्थात् जिस देशमें जिस समय तथा जिस आकारमें वस्तुका प्रतिभास हुआ हो वह जब उसी देश, उसी समय तथा उसी आकारमें उपलब्ध हो तभी सच्ची अर्थप्रापकता कही जा सकती है । इस तरह यथार्थवस्तुके प्रदर्शक प्रत्यक्ष और अनुमान ये दो ही ज्ञान प्रमाण हैं अन्य ज्ञान नहीं । शुक्ल शंखमें 'यह पीला शंख है' इस प्रकारका मिथ्याज्ञान प्रमाण नहीं है; क्योंकि यह जिस आकारमें वस्तुका प्रतिभास कराता है उस आकारमें वस्तुकी प्राप्ति नहीं होती । पीत शंखको ग्रहण करनेवाले ज्ञानने जिस देश, काल तथा आकारमें वस्तुका उपदर्शन कराया उस देश, काल तथा पीतादि आकारमें तो शंख मिला नहीं और जो शुक्ल शंख मिला उसका उस रूपमें प्रतिभास नहीं हुआ था । इस तरह देशादिभेदसे वस्तुभेद होनेके कारण उक्त पीतशंखज्ञानमें विसंवादकता ही है प्रामाण्य नहीं । इसी तरह इन प्रत्यक्ष और अनुमान दो प्रमाणोंसे भिन्न शब्दजन्य आगमादिज्ञान भी प्रदर्शित अर्थके प्रापकत्वरूप प्रामाण्यके अधिकारी नहीं हैं, क्योंकि शब्द अनियत देश, काल तथा आकारवाली वस्तुका प्रतिपादन करता है, जबकि वस्तु किसी न किसी देश, काल या आकार

१. -दर्शने विक-प. १, २, म. १, २, क. । २. -मर्थं परि-म. २ । ३. उद्धृतमिदम्—तत्त्वोप. पृ. २९ । सन्मति. टी. पृ. ४१८ । न्यायवि. वि. प. पृ. १५१, ५११ । सिद्धि वि. टी. पृ. ११ । अनेकान्तजय. प्र. पृ. ११५ । ४. नतु तथा म. २ । ५. तैस्तथा म. २ । ६. -तत्वान्न तेषां म. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**प्रापकत्वेन प्रमाणम्, तत्प्रदर्शितस्य देशाद्यनियतस्यार्थस्यासत्त्वेन प्राप्तुमशक्तेः। तत्प्रदर्शितार्थस्यानियतत्वं च साक्षात्पारंपर्येण वा प्रतिपाद्यादेरर्थस्यानुपपत्तेः। ततः स्थितं प्रदर्शितार्थप्रापणशक्तिस्वभावमविसंवादकत्वं प्रामाण्यं द्वयोरेव।**

**§ ६८. प्रापणशक्तिश्च प्रमाणस्यार्थाविनाभावनिमित्तं[1] दर्शनपृष्ठभाविना विकल्पेन[2] निश्चीयते। तथाहि—प्रत्यक्षं दर्शनापरनामकं यतोऽर्थादुत्पन्नं तद्दर्शकमात्मानं स्वानुरूपाध्यवसायोत्पादनान्निश्चिन्वदर्थाविनाभावित्वं प्रापणशक्तिनिमित्तं प्रामाण्यं स्वतो निश्चिनोतीत्युच्यते, न पुनर्ज्ञानान्तरं तन्निश्चायकमपेक्षतेऽर्थानुभूताविव। ततोऽविसंवादकत्वमेव प्रमाणलक्षणं युक्तम् ॥८॥**

**§ ६९. अथ प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं प्रमाणसंख्यां नियमयन्नाह—**

में रहती है। अतः जैसी अनियतदेशादिवाली वस्तुका शब्द प्रतिपादन करता है वैसी वस्तु प्राप्त नहीं होती क्योंकि वह है ही नहीं तथा जैसी नियतदेशादिवाली प्राप्त होती है वैसी वस्तुका कथन करना शब्दकी सामर्थ्यके परेकी बात है। शब्दके द्वारा प्रतिपाद्य वस्तु अनियतदेशादिमें न तो साक्षात् उपलब्ध होती है और न परम्परासे ही। तात्पर्य यह कि जब वस्तु अनियतदेशादिवाली है ही नहीं तब वैसी वस्तुका प्रतिपादक शब्द कैसे तो प्रापक होगा तथा किस प्रकार उसे प्रमाण कहेंगे ? अतः यह सिद्ध हुआ कि—प्रदर्शित अर्थके प्राप्त करनेकी शक्तिको अविसंवादकता कहते हैं और ऐसी अविसंवादकतारूप प्रमाणता प्रत्यक्ष और अनुमान इन दो ज्ञानोंमें ही है।

§ ६८. प्रमाणकी प्रापणशक्तिका अर्थसे अविनाभाव है। उसका निश्चय निर्विकल्पक दर्शनके बाद होनेवाले विकल्प ज्ञानके द्वारा होता है। वह इस प्रकार—दर्शन नामक प्रत्यक्ष प्रमाण स्वयं क्योंकि अर्थसे उत्पन्न हुआ है, अर्थका दर्शक बनता है—इस बातका अपनेमें निश्चय अपने अनुरूप विकल्पकी उत्पत्तिके द्वारा कर लेता है और यही उसके प्रामाण्यका स्वतः निश्चय है क्योंकि किसी ज्ञानमें प्रापण शक्ति ही प्रामाण्यका निमित्त है और वह प्रापण शक्ति तब ही होती है जब ज्ञानका अर्थके साथ अविनाभाव हो अर्थात् वह अर्थसे साक्षात् या परम्परासे उत्पन्न हुआ हो। सारांश यह है कि—निर्विकल्पकदर्शन प्रत्यक्ष कहा जाता है। यह निर्विकल्पक प्रत्यक्ष स्वलक्षणरूप परमार्थसत् अर्थसे उत्पन्न होता है। यह निर्विकल्प जिस अर्थसे उत्पन्न होता है, उत्तरकालमें उसीके अनुकूल विकल्पको भी पैदा करता है। नीलनिर्विकल्पकमें नील अर्थसे उत्पन्न होनेका नियम नीलनिर्विकल्पकसे उत्पन्न होनेवाले 'नीलमिदम्' इस अर्थानुसारी विकल्पके द्वारा किया जाता है। इस तरह निर्विकल्पक प्रत्यक्ष अपने अनन्तरभावी विकल्पके द्वारा अपनी अर्थाविनाभाविताका निश्चय करता है। यही अर्थाविनाभाविताका तथा तद्रूप प्रापणशक्तिका और तन्निमित्तक प्रमाणताका निश्चय कर लेता है। जिस तरह स्वलक्षणका अनुभव करनेके लिए निर्विकल्पकको अन्य ज्ञानकी आवश्यकता नहीं है उसी तरह उसे अपनी प्रमाणताके निश्चयके लिए भी अन्य ज्ञानकी अपेक्षा नहीं होती। इस तरह अविसंवादकत्व ही प्रमाणका निर्दोष लक्षण हो सकता है ॥८॥

§ ६९. अब प्रमाण विशेषके लक्षणोंका कथन करनेके पहले प्रमाणकी संख्याका नियमन करते हैं—

---

१. निमित्तदर्श—आ., क.। २. अविकल्पमपि ज्ञानं विकल्पोत्पत्तिशक्तिमत्। निःशेषव्यवहाराङ्गं तद्द्वारेण भवत्यतः॥" —तत्त्वसं. श्लो. १३०६।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने[1]।
प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा[2] यतः ॥९॥

§ ७०. व्याख्या—तथाशब्दः प्रागुक्ततत्त्वापेक्षया समुच्चये, चशब्दोऽवधारणे। ततोऽयमर्थः- सौगतदर्शने द्वे एव प्रमाणे विज्ञेये, न पुनरेकं त्रीणि चत्वारि पञ्च षड् वा प्रमाणानि। एतेन चार्वाक-सांख्यादिपरिकल्पितं प्रमाणसंख्यान्तरं बौद्धा न मन्यन्त इत्यावेदितं भवति। के ते द्वे प्रमाणे इत्याह 'प्रत्यक्षमनुमानं च'। कुतो द्वे एव प्रमाणे इत्याह—सम्यगविपरीतं विसंवादरहितमिति यावज्ज्ञानं यतो हेतोर्द्विधा। सर्वं वाक्यं सावधारणमिति न्यायाद् द्विधैव न त्वेकधा त्रिधा वेति।

§ ७१. अत्र केचिदाहुः—यथात्र द्विधेत्युक्ते हि द्विधैव न त्वेकधा त्रिधा वेत्येवमन्ययोग-व्यवच्छेदः, तथा चैत्रो धनुर्धर इत्यादिष्वपि चैत्रस्य धनुर्धरत्वमेव स्यान्न तु शौर्यौदार्यधैर्यादयः; [3]तदयुक्तम्; यतः सर्वं वाक्यं सावधारणमिति न्यायेऽप्याशङ्कितस्यैव व्यवच्छेदः। परार्थं हि वाक्य-मभिधीयते। यदेव च परेण व्यामोहादाशङ्कितं तस्यैव व्यवच्छेदः। चैत्रो धनुर्धर इत्यादौ च[4] चैत्रस्य धनुर्धरत्वायोग एव परैराशङ्कित इति तस्यैव व्यवच्छेदो नान्यधर्मस्य। इह चार्वाकसांख्यादय एक-

तथा बौद्धदर्शनमें दो प्रमाण होते हैं एक प्रत्यक्ष और दूसरा अनुमान। चूँकि सम्यग्ज्ञान दो ही प्रकारका है अतः प्रमाण भी दो ही हो सकते हैं अधिक नहीं ॥९॥

§ ७०. श्लोकमें 'तथा' शब्द पहले कहे गये तत्त्वोंके साथ समुच्चय करनेके लिए और 'च' शब्द अवधारणार्थक है। इससे यह अर्थ हुआ कि-सौगतदर्शनमें दो ही प्रमाण हैं, न तो एक और न तीन-चार-पाँच अथवा छह ही। इससे सूचित हुआ कि बौद्धोंको चार्वाकके द्वारा निर्धारित प्रमाणकी प्रत्यक्ष रूप एक संख्या तथा सांख्य नैयायिक आदिके द्वारा मानी गयी प्रमाणकी प्रत्यक्ष, अनुमान, आगम और उपमान रूपसे तीन-चार आदि संख्याएँ इष्ट नहीं हैं। वे दो प्रमाण प्रत्यक्ष और अनुमान रूपसे ही उन्हें स्वीकृत हैं। चूँकि सम्यक् अविपरीत अर्थात् विसंवादरहित सच्चा ज्ञान दो ही प्रकारका है, अतः प्रमाण भी दो ही प्रकारके हो सकते हैं। 'सभी वाक्य सावधारण अर्थात् निश्चयात्मक होते हैं' इस न्यायके अनुसार प्रमाण दो ही हैं, न तो एक और न तीन ही।

§ ७१. शंका—जिस प्रकार 'दो हैं' इसका अर्थ 'दो ही हैं किन्तु एक या तीन नहीं हैं' यह अन्ययोगव्यवच्छेदसे हुआ उसी प्रकार 'चैत्र धनुर्धर है' उसका भी अर्थ अन्ययोगव्यवच्छेदके कारण 'चैत्र धनुर्धर ही है उसमें शौर्य, औदार्य, धैर्यादि नहीं है' ऐसा ही होना चाहिए। अर्थात् संख्यावाचक दो विशेषणके साथ एवकार प्रयुक्त हुआ है। विशेषणके साथ प्रयुक्त होनेवाले एवकारका अयोगव्यवच्छेद अर्थ होता है। अयोग व्यवच्छेदका सीधा अर्थ है विवक्षित विशेषणके अयोग अर्थात् असम्बन्ध या अभावका व्यवच्छेद—निराकरण करना। इस तरह 'दो ही हैं' यह कहनेसे द्वित्वसंख्याके असम्बन्ध या अभावका निराकरण करके द्वित्वसंख्याके ही सद्भावका निश्चय करना उचित है परन्तु जिस प्रकार आप 'दो ही हैं' यहाँ अयोग व्यवच्छेद बोधक एवकारका अर्थ 'तीन या एक नहीं हैं' इस प्रकार अन्ययोगव्यवच्छेद ( अन्य-भिन्न विशेषणोंके योग-सम्बन्धका व्यवच्छेद–निराकरण ) मान लेते हैं उसी तरह 'चैत्र धनुर्धर ही है' इस अयोग-व्यवच्छेद बोधक एवकारका भी 'चैत्रमें धनुर्धरत्व ही है, अन्य शूरता औदार्य या धैर्य आदि गुण नहीं हैं' ऐसा अन्य गुणोंका निषेधरूप अर्थ प्राप्त होता है और इस तरह शूरता आदिका अभाव होनेपर तो धनुर्धरत्वका विधान भी निरर्थक ही हो जाता है।

१. "प्रत्यक्षमनुमानं च प्रमाणं हि द्विलक्षणम्। प्रमेयं तत्प्रयोगार्थं न प्रमाणान्तरं भवेत् ॥"—प्र. समु. १।२। "द्विविधं सम्यग्ज्ञानम्। प्रत्यक्षमनुमानं चेति ॥"—न्यायबि. १।२, ३। २. ते द्वे के प्र–आ., क.। ३. तदुक्तम् सर्वं–म. २। ४. –दौ चैत्र–म. २। –दौ वा चै–प. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ध्यमनेकधा च सम्यग्ज्ञानमाहुः, अतो नियतद्वैविध्यप्रदर्शनेनैकत्वबहुत्वे सम्यग्ज्ञानस्य प्रतिक्षिपति। एवं चायमेवकारो विशेषणेन विशेष्येण क्रियया च सह भाष्यमाणः क्रमेणायोगान्ययोगात्यन्तायोगव्यवच्छेदकारित्वात् त्रिधा भवति यद्विनिश्चयः—

"अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥१॥"

निपात एवकारः, व्यतिरेचको निवर्तकः—

"विशेषणविशेष्याभ्यां क्रियया यः सहोदितः।
विवक्षातोऽप्रयोगेऽपि तस्यार्थोऽयं प्रतीयते ॥२॥
व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं सरोजमिति वा यथा ॥३॥" [ प्र. वा. ४।१९०-९२ ]

§ ७२. सम्यग्ज्ञानस्य च द्वैविध्यं प्रत्यक्षपरोक्षविषयद्वैविध्यादवसेयम्। यतोऽत्र प्रत्यक्षविष-

---

समाधान—आपको शंका उचित नहीं है, क्योंकि–'सभी वाक्य सावधारण हैं' इससे जिनकी आशंका होती है उन्हींका व्यवच्छेद किया जाता है। वाक्यका प्रयोग दूसरेको समझानेके लिए किया जाता है, इसलिए दूसरा जिन भिन्न धर्मोंकी आशंका करता है उन्हींका व्यवच्छेद किया जाता है। 'चैत्रो धनुर्धरः' यहाँ चैत्रमें धनुर्धरत्वके अभावकी आशंका की गयी थी इसलिए धनुर्धरत्वके अभावका ही व्यवच्छेद किया जायेगा अन्य शौर्यादि धर्मोंका नहीं। 'दो ही हैं' यहाँ चार्वाक प्रमाणकी एक संख्या तथा सांख्यादि प्रमाणकी तीन आदि संख्याएँ मानते हैं, अतः नियत द्वित्वसंख्याके प्रदर्शनसे सम्यग्ज्ञानमें आशंकित एकत्व तथा त्रित्व आदि संख्याओंका व्यवच्छेद किया जाता है। इस तरह एवकार तीन प्रकारका होता है। जब यह विशेषणके साथ प्रयुक्त होता है तब अयोगव्यवच्छेदका बोध कराता है। ( अयोगव्यवच्छेद–विशेषणके अयोग—असम्बन्ध या अभावका व्यवच्छेद करनेवाला ) जब यह विशेष्यके साथ प्रयुक्त होता है तब अन्ययोगव्यवच्छेदका बोध कराता है। (अन्ययोगव्यवच्छेद—प्रकृत विशेष्यसे अन्य विशेष्यमें विशेषणोंके योग—सम्बन्धका निराकरण करनेवाला )। तथा जब यह एवकार क्रियाके साथ प्रयुक्त होता है तब अत्यन्तायोगव्यवच्छेदका बोधक होता है। अत्यन्तायोगव्यवच्छेद—अत्यन्त अयोग—असम्बन्धका व्यवच्छेद अर्थात् निराकरण करनेवाला। विनिश्चय ग्रन्थमें भी कहा है—

"व्यतिरेचक अर्थात् व्यावृत्ति करनेवाला एवकार निपात, विशेषणके साथ प्रयुक्त होकर अयोगका, विशेष्यके साथ कहा हुआ अपरसे योग-अर्थात् अन्ययोगका, तथा क्रियाके साथ प्रयुक्त होकर अत्यन्तायोगका व्यवच्छेद करता है ॥१॥"

"यद्यपि वाक्योंमें एवकारका प्रयोग न भी किया जाय तो भी उसका उक्त अर्थ विवक्षासे ही अपने आप प्रतीत हो जाता है, क्योंकि सभी वाक्य व्यवच्छेद करानेवाले होते हैं। अयोगव्यवच्छेद–जैसे 'चैत्र धनुर्धर ही है'। यहाँ चैत्रमें धनुर्धरत्वके अयोग—असम्बन्ध या अभावका व्यवच्छेद करके चैत्रमें धनुर्धरत्वके सद्भावका अवधारण किया गया है। अन्ययोगव्यवच्छेद–जैसे 'पार्थ ही धनुर्धर है' यहाँ पार्थ—अर्जुनसे अन्य व्यक्तिमें धनुर्धरत्वके योग—तादात्म्यादिसम्बन्धका व्यवच्छेद करके पार्थ ही में धनुर्धरत्वका तादात्म्य सम्बन्ध दिखाया गया है। अत्यन्तायोगव्यवच्छेद 'जैसे सरोज नील होता ही है' यहाँ सरोजमें नीलत्व धर्मके अत्यन्त अयोग अर्थात् असम्बन्धका व्यवच्छेद करके पूर्णरूपसे 'होता ही है' इस रूपसे होने रूप क्रियाका अवधारण किया गया है ॥२-३॥

§ ७२. यतः विषय प्रत्यक्ष और परोक्ष रूपसे दो ही प्रकारके हैं, इसलिए भी उन दो प्रकारके विषयोंको जाननेवाला सम्यग्ज्ञान दो ही प्रकारका हो सकता है। बौद्धके मतमें क्षणिक परमाणु-

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्यानुपपत्तितो नित्यात्सत्त्वस्य व्यावृत्तिरिति विपक्षासत्त्वम्, सच्च सर्वमित्युपनयः, सत्त्वात्सर्वं क्षणिकमिति निगमनम्। एवमन्यहेतुष्वपि ज्ञेयम्। यद्यपि व्याप्त्युपेतं पक्षधर्मतोपसंहाररूपं सौगतैरनुमानमाम्नायि, तथापि मन्दमतीन् व्युत्पादयितुं पञ्चावयवानुमानदर्शनमप्यदुष्टमिति। अयमत्र श्लोकद्वयस्य तात्पर्यार्थः पक्षधर्मान्वयव्यतिरेकलक्षणरूपत्रयोपलक्षितानि त्रीण्येव लिङ्गानि अनुपलब्धिः, स्वभावः, कार्यं चेति।

§ ९१. अत्रानुक्तोऽपि[1] विशेषः कश्चन लिख्यते। तत्र[2] प्रमाणादभिन्नमर्थाधिगम एव प्रमाणस्य फलम्। तर्कप्रत्यभिज्ञयोरप्रामाण्यम्। परस्परविनिर्लुठितक्षणक्षयिपरमाणुलक्षणानि स्वलक्षणानि[3] प्रमाणगोचरस्तात्त्विकः। [4]वासनारूपं[5] कर्म। सुखदुःखे धर्माधर्मात्मके। पर्याया एव सन्ति, न द्रव्यम्। वस्तुनि केवलं स्वसत्त्वमेव न पुनः परासत्त्वमिति सामान्येन बौद्धमतम्।

§ ९२. अथवा वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिक-भेदाच्चतुर्धा बौद्धा भवन्ति। तत्रार्यसमितीयापरनामकं[7]वैभाषिकमतमदः—चतुःक्षणिकं वस्तु। जातिर्जनयति। स्थितिः स्था-

वाले सत्त्व हेतुकी नित्य पदार्थसे व्यावृत्ति हो जाती है। यही इसके विपक्षासत्त्व रूपका विवेचन है। 'चूँकि सभी पदार्थ सत् हैं' यह उपनय वाक्य है। 'इसलिए सत् होनेसे सभी क्षणिक हैं' यह निगमन है। इसी तरह अन्य हेतुओंमें भी त्रिरूपता घटा लेनी चाहिए। बौद्ध यद्यपि व्याप्तिसे युक्त पक्षधर्मताका उपसंहार ( उपनय वाक्य रूप ) ही अनुमान मानते हैं फिर भी मन्दबुद्धियोंको समझानेके लिए यहाँ पाँच अवयववाले अनुमान वाक्यका प्रयोग किया है, अतः कोई दोष नहीं है। इस तरह उक्त दो श्लोकोंका यह तात्पर्य हुआ कि पक्षधर्म, अन्वय तथा व्यतिरेक रूप तीन लक्षणवाले हेतु अनुपलब्धि, स्वभाव तथा कार्यके भेदसे तीन प्रकारके हैं।

§ ९१. अब मूल ग्रन्थकारके द्वारा नहीं कही गयी कुछ विशेष बातोंका वर्णन करते हैं—अर्थाधिगम ही प्रमाणका फल है। यह प्रमाणसे सर्वथा अभिन्न है। तर्क और प्रत्यभिज्ञान प्रमाण नहीं हैं। स्वलक्षण परस्पर अत्यन्त भिन्न क्षणिक परमाणुरूप होते हैं। वे ही प्रमाणका तात्त्विक विषय हैं। कर्म वासना रूप है। सुख-दुःख धर्म और अधर्म रूप हैं। पर्याय ही तत्त्व है, द्रव्य नहीं। वस्तुमें केवल स्वरूपसत्त्व ही है परकी अपेक्षा नास्तित्व–परासत्त्व नहीं। यह सामान्यसे बौद्धमतका निरूपण है।

§ ९२. अथवा वैभाषिक, सौत्रान्तिक, योगाचार और माध्यमिक ये चार प्रकारके बौद्ध हैं। वैभाषिकोंको आर्यसमितीय भी कहते हैं। उनका मत इस प्रकार है—वस्तु चतुःक्षणिक–चार क्षण पर्यन्त है—जन्म उसे उत्पन्न करता है, स्थिति उसका स्थापन करती है, जरा उसे जीर्ण करती है तथा विनाश उसका नाश कर देता है। आत्मा भी इसी प्रकार चतुःक्षणिक है। आत्माका दूसरा

१. -पि कश्चन विशेषः लि–भ. २। २, तत्र द्वादशैव पदार्था आयतनसंज्ञयोच्यन्ते। तद्यथा पञ्चेन्द्रियाणि पञ्च शब्दादयो मनो धर्मायतनं च। धर्मास्तु सुखादयो विज्ञेयाः। अविसंवादिज्ञानं प्रमाणमिति प्रमाणस्य लक्षणं प्रत्यक्षानुमाने द्वे एव प्रमाणे प्रमाणाद–भ. २। ३. "तदेव च प्रत्यक्षं ज्ञानं प्रमाणफलम्। अर्थप्रतीतिरूपत्वात्।" —न्यायबि. १।१७, १८। "स्वसंवित्तिः फलञ्चास्य तद्रूपादर्थनिश्चयः। विषयाकार एवास्य प्रमाणं तेन मीयते॥" प्रमाणसमु. १।१०। "विषयाधिगतिश्चात्र प्रमाणफलमिष्यते। स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यतापि वा॥१३४३॥" तत्त्वसं.। ४. यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत् स्वलक्षणम्।" —न्यायबि. १।१३। ५. "वासनापूर्वविज्ञानकृतिका शक्तिरुच्यते।.........॥ वासनेति हि पूर्वविज्ञानजनितां शक्तिमामनन्ति वासनास्वरूपविदः।" प्र. वार्तिकाल. ३५६। ६. कर्म पर्याया क., प. १, २। कर्मसुखदुःखे धर्मात्मके पर्याया भ. २। ७. –नामवै–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

पयति । जरा जर्जरयति । विनाशो विनाशयति । तथात्मापि तथाविध एव, पुद्गलश्चासावभिधी-यते । [1]निराकारो बोधोऽर्थसहभाव्येकसामग्र्य[2]धीनस्तत्रार्थे प्रमाणमिति ।

§ ९३. सौत्रान्तिकमतं पुनरिदम्—रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामेते पञ्च स्कन्धा[3] विद्यन्ते, न पुनरात्मा । त एव हि परलोकगामिनः । तथा च तत्सिद्धान्तः[4]—पञ्चेमानि भिक्षवः [5]संज्ञामात्रं प्रतिज्ञामात्रं संवृतिमात्रं व्यवहारमात्रम् । कतमानि पञ्च । अतीतोऽध्वा, अना[6]गतोऽध्वा, सहेतुको विनाशः, आकाशम्, पुद्गल इति । अत्र पुद्गलशब्देन परपरिकल्पितो नित्यत्वव्यापकत्वादिधर्मक आत्मेति । बाह्योऽर्थो नित्यमप्रत्यक्ष एव, ज्ञानाकारान्यथानुपपत्त्या तु सन्नवगम्यते । साकारो बोधः प्रमाणम्[7] । तथा क्षणिकाः सर्वसंस्काराः । स्वलक्षणं परमार्थः[8] । यदाहुस्तद्वादिनः—"प्रतिक्षणं विशरारवो रूपरसगन्धस्पर्शपरमाणवो ज्ञानं चेत्येव तत्त्वम्" [ ] इति [9]अन्यापोहः शब्दार्थः । तदुत्पत्तितदाकारताभ्यामर्थपरिच्छेदः ।

नाम 'पुद्गल' है । अर्थके समानकालमें रहनेवाली एक सामग्रीसे ही उत्पन्न होनेवाला निराकार ज्ञान प्रमाण है । ( जिस प्रकार पूर्व-अर्थक्षणसे उत्तर-अर्थक्षण उत्पन्न होता है उसी तरह उससे ज्ञान भी उत्पन्न होता है । पूर्व-अर्थक्षण उत्तर-अर्थक्षणमें उपादान कारण होता है और ज्ञानमें निमित्त कारण । )

§ ९३. सौत्रान्तिकोंका सिद्धान्त है कि—सभी प्राणियोंके रूप, वेदना, विज्ञान, संज्ञा तथा संस्कार ये पाँच स्कन्ध होते हैं, किन्तु आत्मा नहीं । ये ही स्कन्ध परलोक जाते हैं । उनका यह स्पष्ट सिद्धान्त है कि—"हे भिक्षुओ, ये पाँच वस्तुएँ संज्ञामात्र हैं, प्रतिज्ञामात्र हैं, संवृति-कल्पना-मात्र हैं, व्यवहार मात्र हैं । कौन-सी पाँच वस्तुएँ ? अतीत अध्वा-काल, अनागत अध्वा, सहेतुक विनाश, आकाश तथा पुद्गल—आत्मा । यहाँ पुद्गल शब्द नैयायिक आदिके द्वारा माने गये नित्य-व्यापक आत्माके अर्थमें प्रयुक्त हुआ है । बाह्य अर्थ सदा अप्रत्यक्ष रहता है । उसकी सत्ताका ज्ञान तो ज्ञानमें प्रतिबिम्बित आकारसे ही किया जाता है । साकारज्ञान प्रमाण है । सभी संस्कार क्षणिक हैं—अत्यन्त विनश्वर हैं । स्वलक्षण ही वास्तविक अर्थ है । प्रतिक्षण विनष्ट होनेवाले

१. "निराकारो बोधोऽर्थसहभाव्येकसामग्र्यधीनः तत्रार्थे प्रमाणम् इति वैभाषिकोक्तम् ।"—सन्मति. टी. पृ. ४२९ । २. –सामग्र्यसूत्रार्थे म. २ । ३. "खन्धा ति पञ्च खन्धा–रूपक्खन्धो, वेदनाक्खन्धो, सञ्ञाक्खन्धो, सङ्खारक्खन्धो, विञ्ञाणक्खन्धो ति ।" वि. मग्ग. १४।३३ । ४. पञ्चेमानि भिक्षवः संज्ञामात्रं प्रतिज्ञामात्रं व्यवहारमात्रं संवृतिमात्रं यदुतातीतोऽध्वानागतोऽध्वाकाशं निर्वाणं पुद्गलश्चेति ।" —माध्य. वृ. पृ. ३८९ । ५. संज्ञामात्रं संवृ–भ. १, प. १ । ६. –त्यानुत्पन्नमवग–भ. २ । ७. "तस्मात् प्रमेयाधिगतेः साधनं मेयरूपता ।" प्र. वा. २।१०६ । "अर्थसारूप्यमस्य प्रमाणम् । २० । अर्थेन सह यत् सारूप्यं सादृश्यम् अस्य ज्ञानस्य तत् प्रमाणम् । इह यस्माद्विषयाद् विज्ञानमुदेति तद्विषयसदृशं तद् भवति । यथा नीलादुत्पद्यमानं नीलसदृशम् । तच्च सारूप्यं सादृश्यम् आकार इत्याभास इत्यपि व्यपदिश्यते ।" —न्यायबि., टी. पृ. ८१ । "प्रमाणं तु सारूप्यं योग्यतापि वा ।" —तत्त्व-सं. श्लो. १३४४ । ८. "तदेव परमार्थसत् । तदेव परमार्थसदिति । परमोऽर्थोऽकृत्रिममनारोपितं रूपम् । तेनास्तीति परमार्थसत् । य एवार्थः संनिधानासंनिधानाभ्यां स्फुटमस्फुटं च प्रतिभासं करोति परमार्थसत् स एव । स च प्रत्यक्षस्य विषयो यतः, तस्मात् तदेव स्वलक्षणम् ।" —न्यायबि., टी. पृ. ७५ । "अर्थक्रियासमर्थं यत् तदत्र परमार्थसत् । अन्यत् संवृतिसत् प्रोक्तं, ते स्वसामान्यलक्षणे ॥" —प्र. वा. २।३ । ९. "विकल्पप्रतिबिम्बेषु तन्निष्ठेषु निबध्यते । ततोऽन्यापोहनिष्ठत्वादुक्तान्यापोहकृच्छ्रुतिः ।" —प्र. वा. २।१६४ । "ननु कोऽयमपोहो नाम ? यथा व्यवसायं बाह्य एव घटादिरर्थोऽपोह इत्यभिधीयते अपोह्यतेऽस्मादन्यद्विजातीयमिति कृत्वा । यथा प्रतिभासं बुद्ध्याकारोऽपोहः अपोह्यते पृथक्क्रियतेऽस्मिन् बुद्ध्याकारे विजातीयमिति कृत्वा । यथातत्त्वं निवृत्तिमात्रं प्रसज्यरूपोऽपोह अपोहनमपोहः इति कृत्वा ।" —तर्कभा. मो. पृ. २६ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

[1]नैरात्म्यभावनातो ज्ञानसंतानोच्छेदो मोक्ष इति।

§ ९४. यौगाचारमतं त्विदम्[2]—[3]विज्ञानमात्रमिदं भुवनम्। नास्ति बाह्योऽर्थः। ज्ञानाद्वैतस्यैव तात्त्विकत्वात्। अनेके ज्ञानसंतानाः। साकारो बोधः प्रमाणम्। वासनापरिपाकतो नीलपीतादिप्रतिभासाः। [4]आलयविज्ञानं हि सर्ववासनाधारभूतम्। आलयविज्ञानविशुद्धिरेवापवर्ग इति।

§ ९५. माध्यमिकदर्शने तु—शून्यमिदम्[5]। [6]स्वप्नोपमः प्रमाणप्रमेययोः प्रविभागः। "मुक्तिस्तु शून्यतादृष्टेः तदर्थं शेषभावना" [ प्र. वा. १।२५६ ] इति। केचित्तु माध्यमिकाः

रूप, रस, गन्ध तथा स्पर्शके परमाणु एवं ज्ञान ये ही तत्त्व हैं। शब्दका वाच्य विधिरूप न होकर अन्यापोहात्मक है। ज्ञान पदार्थसे उत्पन्न होकर तथा पदार्थके आकारको धारण करके अर्थका परिच्छेद करता है। नैरात्म्य भावनासे ज्ञानकी सन्तानका सर्वथा उच्छेद होना मोक्ष है।

§ ९४. योगाचारका मत इस प्रकार है – यह संसार केवल विज्ञान रूप ही है। बाह्य अचेतन अर्थकी सत्ता नहीं है, क्योंकि ज्ञानाद्वैत ही एक मात्र सत् है, तात्त्विक है। ज्ञानसन्तान अनेक हैं। साकारज्ञान प्रमाण है। अनादिकालीन विचित्र वासनाओंके परिपाकसे ही ज्ञानमें नील-पीत आदि अनेक आकारोंका प्रतिभास होता है। आलयविज्ञान–अहंरूपसे भासमान ज्ञान ही सभी वासनाओंका आधार होता है। इस आलय विज्ञानकी विशुद्धिको ही मोक्ष कहते हैं।

§ ९५. माध्यमिकका मत इस प्रकार है—यह जगत् शून्य है, प्रमाण और प्रमेयका विभाग स्वप्नकी तरह ही है। "शून्यतादर्शनसे ही मुक्ति होती है, अन्य समस्त क्षणिकत्वादि भावनाएँ शून्यताके पोषणके लिए ही हैं। कुछ माध्यमिक ज्ञानको स्वाकार मानते हैं। कोई बाह्य पदार्थ

१. "मुक्तिस्तु शून्यतादृष्टेस्तदर्थाः शेषभावना।"—प्र. वा. १।२५५। "तत्रैव तद्विरुद्धार्थतत्त्वाकारानुरोधिनी। हन्ति सानुचरां तृष्णां सम्यग्दृष्टिः सुभाविता ॥१।२१३॥ तत्र सत्यचतुष्टय एव सम्यग्दृष्टिः नैरात्म्यदृष्टिः, तद्विरुद्धार्थतत्त्वाकारानुरोधिनी तेषां स्थिरसुखाद्याकाराणामविद्यारोपितानां विरुद्धोऽर्थस्तस्य तत्त्वानि भूता आकारा अनित्या सुखादयः षोडशाकारास्ताननुरोद्धुं शीलं यस्याः सा तथा सुभाविता। सादरनिरन्तरदीर्घकालाभ्यासप्राप्तवैशद्या हन्ति तृष्णां जन्महेतुं सानुचरां मात्सर्यादिपरिवारां।" —प्र. वा., मनो. १।२७३। २. –दं भुवनं विज्ञानमात्रं। नास्ति बा–भ. २। ३. "अनादिवासनासङ्गविधेयीकृतचेतसाम्। विविधः प्रतिभासोऽयमेकत्र स्वप्नदर्शिनाम्।" —प्र. वार्त्तिकालं. पृ. २९७। ४. "तरङ्गा ह्युदधेर्यद्वत् पवनप्रत्ययोदिताः। नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते ॥५६॥ आलयौघस्तथा नित्यं विषयपवनेरितः। चित्रैस्तरङ्गविज्ञानैः नृत्यमानः प्रवर्त्तते ॥५७॥" —लंकावतार पृ. २७१। "तत्रालयविज्ञानं नामाहमास्पदं विज्ञानम्। नीलाद्युल्लेखि च विज्ञानं प्रवृत्तिविज्ञानम्। यथोक्तम्—तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्। तत्स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्।" —सर्वद. सं. पृ. ३७। ५. "तथता भूतकोटिश्चनिमित्तः परमार्थिकः। धर्मधातुश्च पर्यायाः शून्यतायाः समासतः ॥"—मध्यान्तवि. सू. टी. पृ. ४१। ६. "यथा मायादयः स्वभावेन अनुत्पन्ना अविद्यमाना मायादिशब्दवाच्या मायादिविज्ञानगम्याश्च लोकस्य। एवमेतेऽपि लोकप्रसिद्धिमात्रेण उत्पादादयः स्वभावेन अविद्यमाना अपि भगवता तथाविधविनेयजनानुग्रहचिकीर्षुणा निर्दिष्टा इति। अत एवोक्तम् ( समाधिराजसूत्रे ) 'यथैव गन्धर्वपुरं मरीचिका यथैव माया सुपिनं यथैव।' स्वभावशून्या तु निमित्तभावना। तथोपमान् जानथ सर्वधर्मान्।" माध्यमिकवृ. संस्कृत. पृ. १७७। "यत्तूक्तं भगवता मायोपमा धर्मा यावत् निर्वाणोपमा इति।" महायानसूत्रालं. पृ. ६२। "एतदुक्तं भगवता—अनुत्पन्नाः सर्वभावा मायोपमाश्च इति।"—लंकावतार सू. द्वि. भा. पृ. १११। "यथा माया यथा स्वप्नो गन्धर्वनगरं यथा। तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतः॥" माध्यमिकवृ. संस्कृत. ३४।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

[1]स्वस्थं ज्ञानमाहुः । तदुक्तम्[2]—

"अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते,
प्रत्यक्षो नहि बाह्यवस्तुविसरः[3] सौत्रान्तिकैराश्रितः ।
योगाचारमतानुगैरभिमता साकारबुद्धिः परा,
मन्यन्ते बत मध्यमाः कृतधियः स्वस्थां परां संविदम् ॥१॥" [ ] इति ।

ज्ञानपारमितायां[4] दश ग्रन्थाः । तर्कभाषा हेतुबिन्दुस्तट्टीकार्चटतर्कनाम्नी प्रमाणवार्तिकं तत्त्वसंग्रहो न्यायबिन्दुः कमलशीलो न्यायप्रवेशकश्चेत्यादयस्तद्ग्रन्था इति ।

§ ९६. एवं बौद्धमतमभिधाय तदेव[5] संचिक्षिप्सुरुत्तरं चाभिसन्धित्सुराह—

**बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः ।**

§ ९७. बौद्धराद्धान्तस्य सौगतसिद्धान्तस्य यद्वाच्यं तस्य संक्षेपोऽयमनन्तरोदितो निवेदितोऽभिहितः ।

इति श्रीतपागणनभोऽङ्गणदिनमणिश्रीदेवसुन्दरसूरिक्रमकमलोपजीविशिष्यश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकाभिधानायां षड्दर्शनसमुच्चयटीकायां बौद्धमतप्रकटनो नाम प्रथमोऽधिकारः ।

आलम्बन नहीं होता वह निरालम्बन ही है। कहा भी है—"मतिमान् वैभाषिक ज्ञान और अर्थको स्वीकार करते हैं। सौत्रान्तिक बाह्यवस्तुके इस विस्तारको प्रत्यक्ष नहीं मानते। योगाचार साकार बुद्धिको ही परमतत्त्व स्वीकार करते हैं। परन्तु कृतार्थबुद्धि माध्यमिक स्वाकार ज्ञान—निरालम्बन ज्ञानको ही परमतत्त्व मानते हैं॥१॥" बौद्धोंके ज्ञान पारमिता आदि दश ग्रन्थ हैं। तर्कभाषा, हेतुबिन्दु, अर्चटकृत हेतुबिन्दुकी अर्चटतर्क नामकी टोका, प्रमाणवार्तिक, तत्त्वसंग्रह, न्यायबिन्दु, कमलशील—कमलशीलकृत तत्त्वसंग्रह पंजिका आदि, और न्यायप्रवेश इत्यादि भी बौद्धोंके प्रसिद्ध ग्रन्थ हैं।

§ ९६. इस तरह बौद्धमतका कथन करके उसका उपसंहार करनेके लिए तथा अग्रिम प्रकरणका प्रारम्भ करनेके लिए ग्रन्थकार कहते हैं कि—

**यह बौद्ध सिद्धान्तका संक्षिप्त वर्णन किया गया है।**

§ ९७. बौद्धराद्धान्त-सौगतोंके सिद्धान्तका जो वक्तव्य है उसे संक्षेपरूपसे इस प्रकरणमें उपस्थित किया है।

इति तपागच्छरूपी आकाशमें सूर्यकी तरह प्रतापी श्री देवसुन्दर सूरिके चरण कमलों के उपासक शिष्य श्री गुणरत्नसूरि द्वारा विरचित षड्दर्शनसमुच्चयकी तर्करहस्य दीपिका नामकी टीकामें बौद्धमतको प्रकट करनेवाला प्रथम अधिकार सम्पूर्ण हुआ।

---

१. स्वच्छं प. १, २, भ. १, २। २. "विवेकविलासे बौद्धमतमित्थमभ्यधायि—चतुष्प्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः। अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते। सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः॥ आकारसहिता बुद्धिर्योगाचारस्य सम्मता। केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः॥ रागादिज्ञानसंतानवासनोच्छेदसंभवा। चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता॥"—सर्वद. सं. पृ. ४६। ३. –विस्तरः क., आ.। ४. 'दश पारमिता' ग्रन्थरूपेण न सन्ति। तास्तु इत्थम्—दान-शील-नैष्कर्म्य-प्रज्ञा-वीर्य-क्षान्ति-सत्य-अधिष्ठान-मैत्रीउपेक्षाः। बुद्धवंस। अभिधर्मकोशे षट् पारमिताः। अभि. को. ४। ५. तर्कभाषा मोक्षाकरगुप्तकृता। हेतुबिन्दुः धर्मकीर्तिविरचितः। प्रमाणवार्तिकं धर्मकीर्तिकृतम्। तत्त्वसंग्रहः शान्तरक्षितविरचितः। कमलशीलकृता तत्त्वसंग्रहपञ्जिका। न्यायबिन्दुः धर्मकीर्तिकृतः। न्यायप्रवेशः दिङ्नागविरचितः। ६. –क्षिप्सुराह भ. २। ७. इति तर्करहस्यदीपिकायां गुणरत्नसूरिविरचितायां बौद्धमतस्वरूपप्रकटनो नाम प्रथमोऽधिकारः। ॐ नमः पार्श्वाय। निरेनसं चेतसि सत्यनीतये निरीतिशीलाचलसंस्थितं सदा। अनन्तकीर्त्याञ्चितरीतिराजितं नृनिर्जरेन्द्रालिहितं जिनं यजे। –भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अर्हम्

# अथ द्वितीयोऽधिकारः

## नैयायिकमतस्येतः कथ्यमानो निशम्यताम् ॥१२॥

§ १. नैयायिकमतस्य शैवशासनस्य संक्षेप इत ऊर्ध्वं कथ्यमानो निशम्यतां श्रूयताम् ॥

अथादौ[1] नैयायिकानां यौगापराभिधानानां लिङ्गादिव्यक्तिरुच्यते[2]। ते च दण्डधराः, प्रौढकौपीनपरिधानाः, कम्बलिकाप्रावृताः, जटाधारिणः, भस्मोद्धूलनपराः, यज्ञोपवीतिनः, जलाधारपात्रकराः, नीरसाहाराः प्रायो वनवासिनो दोर्मूले, तुम्बकं बिभ्राणाः, कन्दमूलफलाशिनः, आतिथ्यकर्मनिरताः सस्त्रीकाः; निस्त्रीकाश्च। निस्त्रीकास्तेषूत्तमाः। ते च पञ्चाग्निसाधनपराः, करे जटादौ च प्राणलिङ्गधराश्चापि भवन्ति। उत्तमां संयमावस्थां प्राप्तास्तु नग्ना भ्रमन्ति। [3]एते प्रातर्दन्तपादादिशौचं विधाय शिवं ध्यायन्तो भस्मनाङ्गं त्रिस्त्रिः स्पृशन्ति। यजमानो वन्दमानः कृताञ्जलिर्वक्ति 'ओं नमः शिवाय' इति। गुरुस्तथैव 'शिवाय नमः' इति प्रतिवक्ति। ते च संसद्येवं वदन्ति —

"शैवीं दीक्षां द्वादशाब्दीं सेवित्वा योऽपि मुञ्चति।
दासी दासोऽपि भवति सोऽपि निर्वाणमृच्छति ॥१॥"

§ २. तेषामीश्वरो देवः सर्वज्ञः सृष्टिसंहारादिकृत्। तस्य चाष्टादशावतारा अमी—नकुली

आगे नैयायिक-शैव मतका संक्षेपसे वर्णन करेंगे उसे सुनो।

§ १. नैयायिक-शैवमतका संक्षेपसे वर्णन आगे किया जायेगा उसे सुनिए। सर्वप्रथम नैयायिकोंके जिन्हें यौग भी कहते हैं, लिंग वेष आदि कहते हैं। ये हाथमें दण्डको धारण करते हैं, मोटा कोपीन-लंगोटी लगाते हैं, कम्बल ओढ़ते हैं, जटा रखते हैं, शरीरमें राख लपेटते हैं, यज्ञोपवीत–जनेऊ पहनते हैं, हाथमें कमण्डलु रखते हैं, नीरस भोजन करते हैं, प्रायः वनमें पेड़के नीचे निवास करते हैं, तुम्बक–तूमड़ी रखते हैं। कन्दमूल तथा फलोंका भक्षण करते हैं तथा अतिथि-सत्कारमें तत्पर रहते हैं। ये स्त्रीके साथ भी रहते हैं तथा स्त्रीके बिना भी रहते हैं। इनमें जो स्त्रीके बिना रहते हैं वे उत्तम समझे जाते हैं। ये पंचाग्नितप तपते हैं। हाथमें तथा जटा आदिमें प्राणलिंग धारण करते हैं। जब ये उत्तमसंयमको धारण करते हैं तब ये नग्न रहकर बिहार करते हैं। ये प्रातःकाल दन्तधावन तथा शौचादि क्रिया करके शिवका ध्यान करते हैं। तीन बार शरीरको भस्म लगाते हैं। इनके यजमान—भक्त हाथ जोड़कर इन्हें नमस्कार करते समय 'ॐ नमः शिवाय' कहते हैं। गुरु भी उत्तरमें 'शिवाय नमः' कहते हैं। वे अपनी सभामें इस प्रकार उपदेश देते हैं—

"शैव दीक्षाको बारह वर्ष तक धारण करके जो छोड़ भी देता है वह चाहे दासी हो या दास अवश्य ही निर्वाणको प्राप्त करता है ॥१॥"

§ २. ये ईश्वरको देव मानते हैं। वह सर्वज्ञ है तथा जगत्‌की सृष्टि तथा प्रलय करनेमें

---

१. अथादौ यौगापराभिधानानां नैयायिकानां लि–प. १, २, भ.। नैयायिकानां यौगा इति नामान्तरम्, आदौ तेषां लि– भ. २। २. –ते द– भ. २। ३. एते दन्तपा– भ. १, २। एते पा–प. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

१, शोष्यकौशिकः[1] २, गार्ग्यः ३, मैत्र्यः[2] ४, अकौरुषः[3] ५, ईशानः ६, पारगार्ग्यः ७, कपिलाण्ड ८, मनुष्यकः ९, कुशिकः १०, अत्रिः ११, पिङ्गलः १२, पुष्पकः १३, बृहदार्यः १४, अगस्तिः १५, संतानः १६, राशीकरः १७, विद्यागुरुश्च १८। एते तेषां तीर्थेशाः पूजनीयाः। एतेषां पूजाप्रणिधानविधिस्तु तदागमाद्वेदितव्यः[4]।

§ ३. तेषां सर्वतीर्थेषु भरटा एव पूजकाः। देवानां[5] नमस्कारो न सन्मुखैः कार्यः। तेषु ये निर्विकारास्ते स्वमीमांसागतमिदं पद्यं दर्शयन्ति—

"न स्वर्धुनी न फणिनो न कपालदाम, नेन्दोः कला न गिरिजा न जटा न भस्म।
यत्रान्यदेव च न किंचिदुपास्महे तद्रूपं पुराणमुनिशीलितमीश्वरस्य ॥ १ ॥
स एव योगिनां सेव्यो ह्यर्वाचीनस्तु भोगभाक्।
स ध्यायमानो राज्यादिसुखलुब्धैर्निषेव्यते ॥२॥"

उक्तं च तैः स्वयोगशास्त्रे—

"वीतरागं स्मरन् योगी वीतरागत्वमश्नुते।
सरागं ध्यायतस्तस्य सरागत्वं तु निश्चितम् ॥३॥
येन येन हि भावेन युज्यते [6]यन्त्रवाहकः।
तेन तन्मयतां याति विश्वरूपो मणिर्यथा ॥४॥" इति।

§ ४. एतत्सर्वं लिङ्गवेषदेवादिस्वरूपं वैशेषिकमतेऽप्यवसातव्यम्। यतो नैयायिकवैशेषिकाणां हि मिथः प्रमाणतत्त्वानां संख्याभेदे सत्यप्यन्योन्यं तत्त्वानामन्तर्भावनेऽल्पीयानेव भेदो

---

समर्थ है। ये ईश्वरके अठारह अवतार हैं—१ नकुली, २ शोष्यकौशिक, ३ गार्ग्य, ४ मैत्र्य, ५ अकौरुष, ६ ईशान, ७ परम गार्ग्य, ८ कपिलाण्ड, ९ मनुष्यक, १० कुशिक, ११ अत्रि, १२ पिङ्गल, १३ पुष्पक, १४ बृहदार्य, १५ अगस्ति, १६ सन्तान, १७ राशीकर तथा १८ विद्यागुरु। ये अठारह तीर्थेश पूजनीय हैं। इनके पूजा तथा ध्यान आदिकी विधि उन्हींके आगमोंसे समझ लेनी चाहिए।

§ ३. इनके सब तीर्थोंमें भरट पूजा करनेवाले होते हैं। ये देवोंको सामनेसे नमस्कार नहीं करते। इनमें जो निर्विकार हैं वे अपनी मीमांसाका यह पद्य प्रायः कहा करते हैं—"हम लोग तो प्राचीन मुनियोंके द्वारा ध्याये गये ईश्वरके उस निर्विकार स्वरूपकी उपासना करते हैं जिसमें न तो स्वर्गंगा है, न सर्प हैं, न मुण्डमाला है, न चन्द्रमाकी कला है, न आधे शरीरमें पार्वती ही हैं, न जटाएँ हैं, न भस्म ही लिपटी है तथा इसी प्रकारकी अन्य कोई भी उपाधियाँ नहीं हैं। ऐसा ही निरुपाधि निर्विकार ईश्वर हम लोगोंका उपास्य है ॥१॥ ईश्वरका निर्गुण निर्विकार रूप ही योगियोंके द्वारा सेव्य—ध्येय है। आजकल ईश्वरका जो रूप पूजा जाता है वह तो भोगीरूप है। और राज्य आदि ऐहिक सुखोंके लोलुपी ही ऐसे रूपकी उपासना करते हैं ॥२॥" उन्होंने अपने योगशास्त्र में भी कहा है—"वीतरागका स्मरण—ध्यान करनेवाला योगी वीतरागताको प्राप्त कर लेता है और सरागके ध्यान करनेवालेकी सरागता निश्चित है ॥१॥ तात्पर्य यह कि—मनरूप यन्त्रको चलानेवाला आत्मा जिस-जिस भावसे युक्त होकर जैसे ध्येयका ध्यान करता है वह स्वयं तन्मय हो जाता है। देखो, स्फटिक मणिको जिस-जिस प्रकारकी उपाधियाँ मिलती हैं उसका रंग उन्हींके अनुसार नानाप्रकारका हो जाता है ॥२॥"

§ ४. नैयायिकोंकी तरह वैशेषिक मतमें भी लिंग, वेष आदि प्रायः इसी प्रकारके हैं। यद्यपि नैयायिकों और वैशेषिकोंको प्रमाण या तत्त्वोंकी संख्यामें भेद है फिर भी जब एकके तत्त्वोंका

---

१. शोषिकौशि–भ. २। २. मैत्रो क.। मैत्रः प. १, २, भ. १, २। ३. अकौरुकः भ. २।
४. –मादवेतव्यः भ. २। ५. वानाञ्च नम– भ. २। ६. यन्त्रवा–भ. २।

**जायते, तेनैतेषां प्रायो मततुल्यता। उभयेऽप्येते तपस्विनोऽभिधीयन्ते। ते च शैवादिभेदेन चतुर्धा भवन्ति। तदुक्तम्—**

"आधारभस्मकौपीन-जटायज्ञोपवीतिनः[1]।
स्वस्वाचारादिभेदेन चतुर्धा स्युस्तपस्विनः॥ १॥
शैवाः पाशुपताश्चैव महाव्रतधरास्तथा।
तुर्याः कालमुखा मुख्या भेदा एते तपस्विनाम्॥ २॥"

**§ ५. तेषामन्तर्भेदा भरटभक्तैरलैङ्गिकतापसादयो[2] भवन्ति। भरटादीनां व्रतग्रहणे ब्राह्मणादिवर्णनियमो नास्ति। यस्य तु शिवे भक्तिः स व्रती भरटादिर्भवेत्। परं शास्त्रेषु नैयायिकाः सदा शिवभक्तत्वाच्छैवा इत्युच्यन्ते; वैशेषिकास्तु पाशुपता इति। तेन नैयायिकशासनं शैवमाख्यायते, वैशेषिकदर्शनं च पाशुपतमिति। इदं मया यथाश्रुतं यथादृष्टं चात्राभिदधे। तत्तद्विशेषस्तु तद्ग्रन्थेभ्यो[3] विज्ञेयः॥१२॥**

**§ ६. अथ पूर्वप्रतिज्ञातं नैयायिकमतसंक्षेपमेवाह—**

**अक्ष(आक्ष)पादमते देवः सृष्टिसंहारकृच्छिवः।**
**विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः[4] ॥१३॥**

**§ ७. व्याख्या—अक्षपादेनाद्येन गुरुणा यतः प्रणीतं नैयायिकमतस्य मूलसूत्रं तेन नैयायिका आक्षपादा अभिधीयन्ते, तन्मतं चाक्षपादमतमिति। तस्मिन्नाक्षपादमते शिवो महेश्वरः, सृष्टिश्चराचरस्य जगतो निर्माणम्, संहारस्तद्विनाशः द्वन्द्वे सृष्टिसंहारौ, [5]तावसावचिन्त्यशक्तिमाहात्म्येन**

---

दूसरेके तत्त्वोंमें अन्तर्भाव कर लिया जाता है तब उनमें प्रायः बहुत कम मतभेद रहता है। इसलिए प्रायः इनके मत तुल्य ही हैं। ये दोनों ही तपस्वी कहे जाते हैं। इनके शैव आदि चार भेद हैं। कहा भी है—"आधार रहनेके स्थान, आसन आदि, भस्म, कौपीन, जटा तथा यज्ञोपवीतको धारण करनेवाले वे तपस्वी अपने-अपने आचारके भेदसे चार प्रकारके हैं—१ शैव, २ पाशुपत, ३ महाव्रतधर तथा ४ कालमुख। तपस्वियोंके ये चार ही मुख्य भेद हैं।"

§ ५. इनके अवान्तर भेद तो भरट, भक्त, लैंगिक तथा तापस आदि अनेक हैं। इन भरट आदिके व्रत नियम धारण करनेके लिए ब्राह्मण आदि होनेकी आवश्यकता नहीं है। जिस किसी भी व्यक्तिको शिवमें भक्ति हो वह व्रत धारण करके भरट आदि हो सकता है। नैयायिक लोग सदा शिवकी भक्ति करते हैं अतः शास्त्रोंमें इन्हें शैव कहा जाता है, तथा वैशेषिकोंको पाशुपत कहते हैं। यही कारण है कि नैयायिकोंका दर्शन 'शैव' कहा जाता है तथा वैशेषिकोंका दर्शन पाशुपत। यह सब वर्णन मैंने जैसा कुछ देखा तथा परम्परासे सुना, उसीके आधारसे किया है। इनका विशेष वर्णन तो इनके ग्रन्थोंसे ही जानना चाहिए।

§ ६. अब जैसा कि पहले कहा था—नैयायिकके मतका संक्षेपसे वर्णन करते हैं—

**आक्षपाद—नैयायिक मतमें जगत्की सृष्टि तथा संहारको करनेवाला, व्यापक, नित्य, एक, सर्वज्ञ तथा नित्यज्ञानशाली शिव देवता हैं॥१३॥**

§ ७. अक्षपाद नामके आदि गुरुने नैयायिक मतके मूलसूत्र—न्यायसूत्रकी रचना की है इसलिए नैयायिक आक्षपाद कहलाते हैं, और नैयायिक मत भी आक्षपादमत कहा जाता है। इस आक्षपाद मतमें शिव—महेश्वर ही आराध्य देव हैं। महेश्वर सृष्टि—चर-अचररूप जगत्का निर्माण तथा उसका संहार अर्थात् विनाश करनेवाले हैं। महेश्वरकी शक्तिका माहात्म्य अचिन्त्य है। उससे वे जगत्की

---

१. कुपीनां जटा भ. २। २. भक्तरलै—प. १, २। ३. —भ्यो ज्ञेयः भ. २। ४. समाश्रितः भ. २। ५. तौ चाचिन्त्य—भ. २। तौ सौ वा चिन्त्य प. १, २, भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

करोतीति सृष्टिसंहारकृत्। केवलायाः सृष्टेः करणे [1]निरन्तरोत्पाद्यमानोऽसंख्यः प्राणिगणो भुवनत्रयेऽपि न मायादिति सृष्टिवत्संहारस्यापि करणम्। अत्र [2]प्रयोगमेवं शैवा व्याहरन्ते—भूभूधरसुधाकरदिनकरमकराकरादिकं बुद्धिमत्पूर्वकम्, कार्यत्वात्, यद्यत्कार्यं तत्तद् बुद्धिमत्पूर्वकं यथा घटः, कार्यं चेदम्, तस्माद् बुद्धिमत्पूर्वकम्। यश्चास्य बुद्धिमान्स्रष्टा स ईश्वर एवेत्यन्वयः। व्यतिरेके गगनम्। न चायमसिद्धो हेतुः, भूभूधरादीनां [3]स्वस्वकारणकलापजन्यत्वेनावयवितया[4] वा कार्यत्वस्य जगति सु[5]प्रसिद्धत्वात्,। नापि विरुद्धोऽनैकान्तिको वा; विपक्षादत्यन्तं व्यावृत्तत्वात्। नापि कालात्ययापदिष्टः, प्रत्यक्षागमाबाध्यमानसाध्यधर्मधर्मिविषये हेतोः प्रवर्तनात्। नापि प्रकरणसमः; तत्प्रतिपन्थिपदार्थस्वरूपसमर्थनप्रथितप्रत्यनुमानोदयाभावात्।

सृष्टि और संहार करते हैं। यदि केवल सृष्टि-ही-सृष्टि हो, तो निरन्तर उत्पन्न होते रहनेवाले असंख्य प्राणी तीनों लोकोंमें भी नहीं समायेंगे। इसलिए सृष्टिकी तरह संहार भी आवश्यक है अतः महेश्वर इस संहार-लीलाको भी करते हैं। शैव लोग जगत्को महेश्वरकर्तृक सिद्ध करनेके लिए अनुमानका प्रयोग इस प्रकार करते हैं—पृथिवी, पर्वत, चन्द्र, सूर्य तथा समुद्र आदि सभी बुद्धिमान्के द्वारा उत्पन्न किये गये हैं, क्योंकि ये कार्य हैं, जो-जो कार्य होते हैं वे किसी न किसी बुद्धिमान्के द्वारा ही किये जाते हैं जैसे कि घड़ा, चूँकि यह जगत् भी कार्य है, अतः इसे भी किसी बुद्धिमान्के द्वारा ही निर्मित होना चाहिए। जो इस जगत्का रचयिता बुद्धिमान् है वही तो ईश्वर है। जो बुद्धिमान्के द्वारा उत्पन्न नहीं किये गये वे कार्य भी नहीं हैं जैसे कि आकाश। यह व्यतिरेक दृष्टान्त है। यह कार्यत्व हेतु असिद्ध नहीं है, क्योंकि पृथिवी, पर्वत आदि सभी पदार्थ अपने-अपने कारणोंसे उत्पन्न होनेके कारण तथा अवयविरूप होनेके कारण कार्यरूप हैं। यह बात जगत्प्रसिद्ध है। यह कार्यत्व हेतु विरुद्ध या अनैकान्तिक भी नहीं है; क्योंकि जिन्हें बुद्धिमानोंने उत्पन्न नहीं किया ऐसे आकाश आदि विपक्षभूत पदार्थोंमें बिलकुल नहीं पाया जाता है। यह हेतु कालात्ययापदिष्ट—बाधित भी नहीं है; क्योंकि इस हेतुके विषय—साध्यमें प्रत्यक्ष तथा आगमसे कोई भी बाधा नहीं आती। यह हेतु प्रकरणसम भी नहीं है; क्योंकि जगत्को अबुद्धिमत्पूर्वक सिद्ध करनेवाला कोई भी प्रत्यनुमानविरोधी अनुमान नहीं है। जिस हेतुके साध्यसे विपरीत अर्थको सिद्ध करनेवाले प्रसिद्ध प्रत्यनुमानका सद्भाव होता है वह हेतु प्रकरणसम कहलाता है।

---

१. –न्तरोत्पद्यमान–प. १, २, भ. १, २। २. "सिद्धे च कार्यत्वे कर्तृपूर्वकत्वं साध्यते। तथा च विवादास्पदं बोधाधारकारणम् कार्यत्वाद्, यद् यद् कार्यं तत्तद् बोधाधारकारणम् यथा घटादि, तथा चेदं कार्यं तस्मात् बोधाधारकारणमिति।"—प्रश. व्यो. पृ. ३०२। "सामान्यतो दृष्टं तु लिङ्गमीश्वरसत्तायामिदं ब्रूमहे पृथिव्यादि कार्यं धर्मि तदुत्पत्तिप्रकारप्रयोजनाद्यभिज्ञकर्तृपूर्वकमिति साध्यो धर्मः कार्यत्वाद् घटादिवत्।" —न्यायम. प्रमा. पृ. १७८। "महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्यत्वात् ... सावयवत्वात्।" —प्रशस्त. कन्द. पृ. ५७। वैशे. उप. पृ. ६२। "कार्याऽऽयोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः।" —न्यायकुसु. ५।१। "तथाहि विवादाध्यासितमुपलब्धिमत्कारणपूर्वकं अभूत्वाभावित्वाद्वस्त्रादिवदिति सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात्तत्सामान्यसिद्धौ पारिशेष्यात्कार्यत्वाच्च कर्तृविशेषसिद्धिश्चित्रादिकार्यविशेषात्कर्तृविशेषसिद्धिवत्।" —न्यायसा. पृ. ३६। "तत्राविद्धकर्णोपन्यस्तम् ईश्वरसाधने प्रमाणद्वयमाह—यत्स्वारम्भकेत्यादि। यत्स्वारम्भकावयवसन्निवेशविशेषवत्। बुद्धिमद्धे तु गम्यं तत्तद्यथा कलशादिकम्।" —तत्त्वसं. श्लो. ४७। ३. स्वकारण–भ. २। ४. –या का–भ. २। ५. –ति प्रसि–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ८. अथ निर्वृतात्मवदशरीरत्वादेव न संभवति सृष्टिसंहारकर्तेश्वर इति प्रत्यनुमानोदयात्कथं न प्रकरणसम इति चेत्; उच्यते—अत्र त्वदीयानुमाने साध्यमान ईश्वरो धर्मी त्वया प्रतीतः, अप्रतीतो वाभिप्रेयते ? अप्रतीतश्चेत्; तदा त्वत्परिकल्पितहेतोराश्रयासिद्धिदोषः प्रसज्येत । प्रतीतश्चेत्; तर्हि येन प्रमाणेन प्रतीतस्तेनैव स्वयमुद्भावितनिजतनुरपि किमिति नाभ्युपेयत इति कथमशरीरत्वम् । ततो न प्रकरणसमदोषता हेतोः । अतः साधूक्तं 'सृष्टिसंहारकृच्छिवः' इति ।

§ ९. तथा विभुराकाशवत्सर्वजगद्व्यापकः । नियतैकस्थानवर्तित्वे ह्यनियतप्रदेशवर्तिनां पदार्थानां प्रतिनियतयथावन्निर्माणानुपपत्तेः । न ह्येकस्थानस्थितः कुम्भकारोऽपि दूरतरघटादिघटनायां व्याप्रियते, तस्माद्विभुः ।

§ १०. तथा नित्यैकसर्वज्ञः । नित्यश्चासावेकश्च नित्यैकः स चासौ सर्वज्ञश्चेति विशेषणत्रयसमासः । तत्र नित्योऽप्रच्युतानुत्पन्नस्थिरैकरूपः कूटस्थः । ईश्वरस्य ह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षया कृतकत्वप्राप्तिः । स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यते । कृतकश्चेत्

§ ८. शंका—'ईश्वर सृष्टि तथा संहारका कर्ता नहीं है क्योंकि वह अशरीरी है जैसे कि मुक्तजीव' यह प्रत्यनुमान मौजूद है अतः कार्यत्व हेतु प्रकरणसम क्यों नहीं होता है ?

समाधान—आपने इस प्रत्यनुमानमें ईश्वरको धर्मी बनाया है । इस धर्मीरूप ईश्वरको आप जानते हैं या नहीं ? यदि नहीं जानते; तब आश्रय—रक्षकी असिद्धि होनेसे हेतु आश्रयासिद्ध हो जायेगा । यदि जानते हैं; तब जिस प्रमाणसे आपने धर्मीरूप ईश्वरको जाना है उसी प्रमाणसे जिसने अपना शरीर स्वयं बनाया है ऐसे ईश्वरको क्यों नहीं मान लेते ? तब वह अशरीर कैसे सिद्ध होगा ? अतः कार्यत्व हेतुमें प्रकरणसम दोष नहीं है इसलिए ठीक ही कहा है कि शिव सृष्टि तथा संहारके विधाता हैं ।

§ ९. ईश्वर आकाशकी तरह समस्त जगत्में व्यापक है । यदि ईश्वरको किसी नियत स्थानमें रहनेवाला माना जाय; तब विभिन्न देशवर्ती पदार्थोंका अपने निश्चित स्वरूपमें यथावत् निर्माण नहीं हो सकेगा । देखो, एक स्थानमें रहनेवाला कुम्हार अति दूर देशमें घड़ेको उत्पन्न तो नहीं कर सकता । अतः समस्त जगत्में पदार्थोंकी प्रतिनियत रूपमें उत्पत्ति ही ईश्वरको व्यापक सिद्ध कर देती है; क्योंकि जहाँ ही ईश्वर न होगा वहीं कार्योंकी उत्पत्ति नहीं हो सकेगी ।

§ १०. ईश्वर नित्य है, एक है तथा सर्वज्ञ है । 'नित्यैकसर्वज्ञः' पदमें नित्य, एक और सर्वज्ञ इन तीन विशेषणोंका समास है । नित्य–ईश्वरके किसी पूर्व स्वभावका विनाश तथा नवीन स्वभावका उत्पाद नहीं होता । किन्तु वह सदा एक रूपमें स्थिर रहनेवाला है, अपरिवर्तनशील है । अतएव वह कूटस्थनित्य है, ईश्वरको अनित्य माना जाय; तो ईश्वर अपनी उत्पत्तिमें भी अन्य

१. "बोधाधारेऽधिष्ठातरि साध्ये न साध्यविकलत्वम् । नापि विरुद्धत्वम् । न च कार्यत्वं बुद्धिमन्तमधिष्ठातारं व्यभिचरतीत्यव्यभिचारोपलम्भसामर्थ्यादुपलभ्यमानं पक्षे क्षित्यादिसंपादनसमर्थमेवाधिष्ठातारं साधयतीति । न च क्षित्याद्युपादानोपकरणानभिज्ञः क्षित्यादिसंपादनसमर्थ इति परमाण्वादिविषयज्ञानं तत्कर्तुर्लभ्यते ।" —प्रश. व्यो. पृ. ३०२ । "तथाहि तनुभुवनाद्यभिज्ञः कर्ता नानित्यासर्वविषयबुद्धिमान् तत्कर्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात् । न ह्येवंविधस्तदुपादानाद्यभिज्ञो दृष्टः यथाऽस्मदादिः तदुपादानाद्यभिज्ञश्चायं तस्मात्तथेति ।" —न्यायवा. ता. पृ. ६०४ । "यत् तदीश्वरस्य ऐश्वर्यं किं तन्नित्यमनित्यमिति ?....नित्यम् इति ब्रूमः........अथास्य बुद्धिनित्यत्वे किं प्रमाणमिति ? नन्विदमेव बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्त्तन्त इति ।"—न्यायवा. पृ. ४६४ । "तस्य हि ज्ञानक्रियाशक्ती नित्ये इति ऐश्वर्यं नित्यम् ।" —न्यायवा. ता. टी. पृ. ५१७ । "न च बुद्धीच्छाप्रयत्नानां नित्यत्वे कश्चिद्विरोधः । दृष्टा हि रूपादीनां गुणानाम् आश्रयभेदेन द्वयी गतिः तथा बुद्ध्यादीनामपि भविष्यति ।" —प्रशस्त. कन्द. पृ. ५५ । व्यो. पृ. १०५ ।

Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

जगत्कर्ता स्यात्, तदा तस्याप्यपरेण कर्त्रा भाव्यम्, अनित्यत्वादेव । अपरस्यापि च कर्तुरन्येन कर्त्रा भवनीयमित्यनवस्थानदी दुस्तरा स्यात् । तस्मान्नित्य एवाभ्युपगमनीयः ।

§ ११. नित्योऽपि स एकोऽद्वितीयो मन्तव्यः । बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथगन्यान्यविसदृशमतिव्यापृतत्वेनैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति युक्तम् 'एकः' इति विशेषणम् ।

§ १२ एकोऽपि[1] स सर्वज्ञः सर्वपदार्थानां सामस्त्येन ज्ञाता । सर्वज्ञत्वाभावे हि विधित्सितपदार्थोपयोगिजगत्प्रसृमरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाक्षमतया याथातथ्येन पदार्थानां निर्माणं दुर्घटं भवेत् । सर्वज्ञत्वे पुनः सकलप्राणिनां[2] संमीलितसमुचितकारणकलापानु[3]रूप्येण कार्यं वस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन ( नुसारेण ) च स्वर्गनरकयोः सुखदुःखोपभोगं ददानः सर्वथौचित्यं नातिवर्तेत । तथा चोक्तं तद्भक्तैः—

"ज्ञा[4]नमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥१॥"

---

कारणोंकी अपेक्षा करेगा, इसलिए वह कृतक हो जायेगा। अपनी उत्पत्तिमें परके व्यापारकी अपेक्षा रखनेवाला पदार्थ कृतक माना जाता है। यदि ईश्वर स्वयं कृतक होकर भी जगत्कर्ता है तब ईश्वरको बनानेवाला भी अन्य कर्ता होना चाहिए। वह ईश्वरका कर्ता भी अनित्य होगा, अतः उसका भी अन्य कर्ता मानना होगा। इस तरह नये-नये कर्ताओंकी कल्पनारूपी अनवस्था नदीको पार करना कठिन हो जायेगा। अतः ईश्वरको नित्य मानना ही उचित है।

§ ११. नित्य मानकर भी उसे एक अद्वितीय मानना चाहिए। यदि अनेक ईश्वर माने जायें; तो अनेकों स्वतन्त्र विचारवाले ईश्वरोंमें एक ही पदार्थके अमुक स्वरूपमें उत्पन्न करनेके विषयमें मतभेद होनेपर पदार्थका उत्पन्न होना ही कठिन हो जायेगा और यदि उत्पन्न भी हुआ तो विसदृश आकारवाला उत्पन्न होगा। अर्थात् एक ईश्वर चाहेगा कि आदमीकी नाक आँखके नीचे बनायी जाय तो दूसरेकी इच्छा होगी कि नहीं, नाकको सिरके पीछे बनाना चाहिए, तो तीसरा क्यों चुप बैठेगा, वह भी अपनी इच्छानुसार नाकको गलेके नीचे बनाना चाहेगा। इसलिए इस बहुनायकत्वमें बड़ी अव्यवस्था होनेकी सम्भावना है अतः एक ही ईश्वर मानना उचित है।

§ १२. एक मानकर भी उसे सर्वज्ञ अवश्य ही मानना चाहिए। सभी पदार्थोंकी सभी दशाओंका साक्षात्कार करना ही ईश्वरकी सर्वज्ञता है। यदि ईश्वर सर्वज्ञ न हो; तब उसे उत्पन्न किये जानेवाले कार्योंकी रचनामें उपयोगी होनेवाले जगत्के कोने-कोनेमें फैले हुए विचित्र परमाणुकणोंका सम्यक् परिज्ञान न होनेसे उन्हें जोड़कर पदार्थोंका यथावत् निर्माण करना अत्यन्त कठिन हो जायेगा। सर्वज्ञ होनेपर तो वह सभी प्राणियोंके उपभोगके लायक कार्योंकी सामग्रीको बराबर जुटा लेगा और उनके पुण्य-पापके अनुसार साक्षात्कार करके सुख-दुःखरूप फल भोगनेके लिए उन्हें स्वर्ग और नरक आदिमें भी भेज सकेगा। इस तरह ईश्वर सर्वज्ञ होनेसे उचितका उल्लंघन नहीं करता। किन्हीं ईश्वर-भक्तोंने कहा भी है—

"उस जगत्पति ईश्वरके अव्याहत—सर्वव्यापी ज्ञान, वैराग्य, ऐश्वर्य तथा धर्म—ये ज्ञानादि चतुष्टय सह-सिद्ध अर्थात् एक साथ रहनेवाले या जबसे ईश्वर है तभीसे उसके साथ रहनेवाले

---

१. एकोऽपि सर्व–आ., क.। एकोऽपि स सर्वपदा–भ. २। २. पुनः संमी–भ. २। ३. –नुरूपेण भ. २। ४. तुलना—"इतिहासपुराणेषु ब्रह्मादिर्योऽपि सर्ववित्। ज्ञानमप्रतिघं यस्य वैराग्यं चेति कीर्तितम्।" —तत्त्वसं. श्लो. ३१९९। उद्धृतोऽयम्—शास्त्रवा. ९।२। प्र. मी. पृ. १२।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

"अज्ञो[1] जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥२॥" [ महाभा. वनप. ३०।२८ ]

§ १३. अथवा नित्यैकसर्वज्ञ इत्येकमेव विशेषणं व्याख्येयम् । नित्यः सदैकोऽद्वितीयः सर्वज्ञो नित्यैकसर्वज्ञः । एतेनानादिसर्वज्ञमीश्वरमेकं विहायान्यः कोऽपि सर्वज्ञः कदापि न भवति । यत ईश्वरादन्येषां योगिनां ज्ञानान्यपरं सर्वमतीन्द्रियमर्थं जानानान्यपि स्वात्मानं न जानते, ततस्ते कथं सर्वज्ञाः स्युरित्यावेदितं भवति ।

§ १४. तथा नित्यबुद्धिसमाश्रयो नित्याया बुद्धेर्ज्ञानस्य स्थानम्, क्षणिकबुद्धिमतो हि पराधीनकार्यपेक्षणेन मुख्यकर्तृत्वाभावादनीश्वरत्वप्रसक्तिरिति । ईदृशविशेषणविशिष्टो नैयायिकमते शिवो देवः ॥१३॥

अथ तन्मते तत्त्वानि विवरिषुः प्रथमं तेषां संख्यां नामानि च समाख्याति—

तत्त्वानि[2] षोडशामुत्र प्रमाणादीनि तद्यथा ।
प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥१४॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ।
वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥१५॥
जातयो निग्रहस्थानान्येषामेवं प्ररूपणा ।
अर्थोपलब्धिहेतुः[3] स्यात्प्रमाणं तच्चतुर्विधम् ॥१६॥ (त्रिभिर्विशेषकम्)

अनादि सिद्ध हैं, सहज हैं ॥१॥ यह बिचारा अज्ञ तथा अनीश्वर—असमर्थ संसारीजन्तु अपने सुख-दुःख भोगनेके लिए ईश्वरके द्वारा प्रेरित होकर स्वर्ग तथा नरक जाता है । ईश्वर कर्मके अनुसार संसारियोंको स्वर्ग तथा नरकमें भेजता है ॥२॥"

§ १३. अथवा 'नित्य, एक तथा सर्वज्ञ' इन तीनोंको पृथक् तीन विशेषण न मानकर 'नित्यैकसर्वज्ञ' ऐसा एक समूचा विशेषण मानना चाहिए । इसका अर्थ है कि ईश्वर सदैव एक अद्वितीय सर्वज्ञ रहा है, दूसरा कोई नित्य सर्वज्ञ नहीं है । इस अनादि सर्वज्ञ एक ईश्वरको छोड़कर कोई भी कभी भी सर्वज्ञ नहीं हुआ । ईश्वरके अतिरिक्त अन्य योगी यद्यपि संसारके समस्त अतीन्द्रिय पदार्थोंको जानते हैं पर वे अपने स्वरूपको नहीं जानते, उनका ज्ञान अस्वसंवेदी है, अतः ऐसे अनात्मज्ञ योगी सर्वज्ञ कैसे हो सकते हैं ?

§ १४. ईश्वरकी बुद्धि नित्य है, शाश्वत है । यदि ईश्वरकी बुद्धि क्षणिक हो; तो उस बुद्धिकी उत्पत्तिमें भी अन्य कारणोंकी आवश्यकता होगी, अतः क्षणिक बुद्धिवाला ईश्वर स्वयं पराधीन हो जायेगा और इस तरह वह मुख्यरूपसे कर्ता न बन सकनेके कारण अनीश्वर हो जायेगा । इस तरह नैयायिकोंके भगवान् शिव जगत्कर्तृत्वादि विशेषणोंसे युक्त हैं ॥१३॥

अब नैयायिकोंके तत्त्वोंके वर्णन करनेकी इच्छासे, सर्वप्रथम उनके नाम तथा उनकी संख्याका कथन करते हैं—

**नैयायिकोंके मतमें प्रमाण आदि सोलह तत्त्व हैं—१ प्रमाण, २ प्रमेय, ३ संशय, ४ प्रयोजन, ५ दृष्टान्त, ६ सिद्धान्त, ७ अवयव, ८ तर्क, ९ निर्णय, १० वाद, ११ जल्प, १२ वितण्डा, १३ हेत्वा-**

१. अन्यो जन्तु–प. १, २, भ. १, २ । २. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानाद् निःश्रेयसाधिगमः ।"—न्यायसू. १।१।१ । ३. "उपलब्धिहेतुश्च प्रमाणम् ।" —न्यायभा. २।१।११ । न्यायवा. पृ. ५ । "उपलब्धिसाधनानि प्रमाणानि ।" —न्यायभा. १।१।३ । "तदेव ज्ञानमज्ञानं वा उपलब्धिहेतुः प्रमाणम्…।" —न्यायवा. ता. टी. पृ. २२ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १४ व्याख्या—अमुत्रास्मिन्प्रक्रान्ते नैयायिकमते प्रमाणादीनि प्रमाणप्रमेयप्रभृतीनि षोडश तत्त्वानि भवन्ति। तद्यथेत्युपदर्शने। 'प्रमाणं च' इत्यादि। तत्र प्रमितिरुपलब्धिर्ज्ञानं येन जन्यते तज्ज्ञानस्य जनकं कारणं प्रमाणम्। प्रमीयते ज्ञानं जन्यतेऽनेनेति प्रमाणमिति व्युत्पत्तेः। ज्ञानस्य च जनकं द्विविधम्—अचेतनं ज्ञानं च। तत्राचेतनमिन्द्रियतदर्थसन्निकर्षप्रदीपलिङ्गशब्दादिकं ज्ञानस्य कारणत्वात्प्रमाणम्। ज्ञानं च ज्ञानान्तरजन्मनि यद्व्याप्रियते तदपि ज्ञानजनकत्वात्प्रमाणम्। ज्ञानस्याजनकं तु प्रमाणस्य फलं भवेन्न पुनः प्रमाणम् १। प्रमेयं[1] प्रमाणजन्यज्ञानेन ग्राह्यं वस्तु २। दोलायमाना प्रतीतिः संशयः[2]। चकारास्त्रयोऽपि प्रमाणदीनामन्योन्यापेक्षया समुच्चयार्थाः ३। प्रयोजनमभीष्टं[3] साधनीयं फलम् ४। दृष्टान्तो[4] वादिप्रतिवादिसम्मतं निदर्शनम् ५। अपिः समुच्चये। अथशब्द आनन्तर्ये। सिद्धान्तः[5] सर्वदर्शनसम्मतशास्त्रप्रभृतिः[6] ६। अवयवाः[7] पक्षादयोऽनुमानस्याङ्गानि ७। संदेहादूर्ध्वमन्वयधर्मचिन्तनं तर्कः[8], स्थाणुरत्राधुना संभवतीति ८।

---

भास, १४ छल, १५ जाति तथा १६ निग्रह स्थान। इनकी व्याख्या इस प्रकार है—पदार्थकी उपलब्धिमें जो साधकतम हेतु होता है उसे प्रमाण कहते हैं। वह चार प्रकारका है ॥१४, १५, १६॥ इन तीन श्लोकोंका एक साथ अन्वय होनेसे इन्हें विशेषक कहते हैं।

§ १४. इस प्रस्तुत नैयायिक दर्शनमें प्रमाण, प्रमेय आदि सोलह तत्त्व होते हैं। उनके नाम श्लोकमें बता दिये हैं। जिसके द्वारा प्रमिति—उपलब्धि या ज्ञान उत्पन्न किया जाता है उस ज्ञानके जनक कारणको प्रमाण कहते हैं। 'प्रमीयते—ज्ञान उत्पन्न किया जाता है येन-जिसके द्वारा उसे प्रमाण कहते हैं।' यह प्रमाण शब्दकी व्युत्पत्ति है। ज्ञानके उत्पादक कारण दो प्रकारके हैं—एक तो अचेतन पदार्थ, तथा दूसरा ज्ञान। इन्द्रियोंका पदार्थके साथ सन्निकर्ष-सम्बन्ध, दीपक, हेतु तथा शब्द आदि अचेतन पदार्थ ज्ञानकी उत्पत्तिमें कारण होनेसे प्रमाण हैं। जो ज्ञान किसी ज्ञानान्तरकी उत्पत्तिमें व्यापार करता है वह ज्ञानका उत्पादक होनेसे प्रमाण भी है। पर, जो ज्ञान किसी ज्ञानान्तरको उत्पन्न नहीं करता वह प्रमाण नहीं है केवल फलरूप ही है। २. प्रमेय—प्रमाणसे उत्पन्न होनेवाले ज्ञानका विषयभूत पदार्थ प्रमेय कहलाता है। ३. संशय—अनेक कोटियोंमें अर्थात् विषयोंमें दोलायमान—झूलनेवाली चलित प्रतीतिका नाम संशय है। श्लोकमें आये हुए तीन 'च' शब्द प्रमाण, प्रमेय और संशयका परस्पर समुच्चय दिखानेके लिए हैं। ४. प्रयोजन—जो हमारा साध्य है, जिसे हम सिद्ध करना चाहते हैं उस इष्ट फलको प्रयोजन कहते हैं। ५. दृष्टान्त—जिसे वादी और प्रतिवादी निर्विवाद रूपसे स्वीकार करते हों ऐसे निदर्शन—उदाहरणको दृष्टान्त कहते हैं। मूल श्लोकमें 'अपि' शब्द समुच्चयार्थक है। 'अथ' शब्द आनन्तर्य—इसके बाद अर्थमें प्रयुक्त हुआ है। ६. सिद्धान्त—सभी दर्शनवालोंको स्वीकृत अपने-अपने शास्त्र आदि सिद्धान्त कहे जाते हैं। ७. अवयव—अनुमानके अंगभूत पक्ष आदि अवयव हैं। ८. तर्क—सन्देहके बाद होनेवाले विधिरूप सम्भावनाप्रत्ययको तर्क कहते हैं। जैसे इस समय यहाँ स्थाणुकी ही सम्भावना है। तर्कमें

---

१. "प्रमाणविषयोऽर्थः प्रमेयम्।"—न्यायक. पृ. ४। २. "विशेषस्मृतिहेतोर्धर्मस्य ग्रहणाद् विशेषस्मृतेश्च जायमानः किं स्वित् इति विमर्शः संशयः।"—न्यायक. पृ. ८। ३. "यमर्थमधिकृत्य पुरुषः प्रवर्तते तत् प्रयोजनम्।" —न्यायक. पृ. ८। ४. "वादिप्रतिवादिनोः साध्यसाधनधर्मविकरणत्वेन तद्रहितत्वेन वा प्रसिद्धोऽर्थो दृष्टान्तः।" —न्यायक. पृ. ८। ५. "अयमेवमिति प्रमाणमूलाभ्युपगमः विषयीकृतः सामान्यविशेषवानर्थः सिद्धान्तः।" —न्यायक. पृ. ९। ६. –दर्शनशास्त्रसम्मतप्र–क. प. १, २ भ. १, २। ७. "साधनीयस्यार्थस्य यावता वाक्येन परस्मै प्रतिपादनं क्रियते तस्य पञ्च भागाः प्रतिज्ञादयोऽवयवाः।" —न्यायक. पृ. ९। ८. "अविज्ञाततत्त्वे धर्मिणि एकतरपक्षानुकूलार्थदर्शनेन, तस्मिन् संभावनाप्रत्ययरूप ऊहस्तर्क उच्यते।' —न्यायक. पृ. १३।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्थाणुरेवायमित्यवधारणं निर्णयः[1]। द्वन्द्वे तर्कनिर्णयौ ९। गुरुणा समं तत्त्वनिर्णयार्थं वदनं वादः[2] १०। परेण समं जिगीषया जल्पनं जल्पः[3] ११। अपरामृष्टवस्तुतत्त्वं मौखर्यमात्रं वितण्डा[4] १२। हेतुवदाभासमाना हेत्वाभासा[5] न सम्यग्घेतव इत्यर्थः १३। परवचनविघातार्थ-विकल्पोत्पादनानि छलानि[6] १४। जातयोऽसम्यग्दूषणानि[7] १५। यैरुक्तैर्वक्ता निगृह्यते तानि निग्रहस्थानानि[8] १६। इति। एषामनन्तरोक्तानां प्रमाणादीनामेवमित्थं प्ररूपणा स्वरूप-प्रदर्शना भवति।

§ १५. तत्रादौ प्रमाणस्य प्ररूपणां चिकीर्षुः प्रथमतस्तस्य सामान्यलक्षणं संख्यां च प्राह—'अर्थोपलब्धिहेतुः स्यात्प्रमाणम्'। अर्थस्य ग्राह्यस्य बाह्यस्य स्तम्भकुम्भाम्भोरुहादेः, आन्तरस्य च ज्ञानसुखादेरुपलब्धिर्ज्ञानमर्थोपलब्धिः। व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायादत्राव्यभिचारिण्य-व्यपदेश्या व्यवसायात्मिका चार्थोपलब्धिर्ग्राह्या, न तूपलब्धिमात्रम्। तस्या यो हेतुः कारणं स प्रमाणं स्याद्भवेत्। अर्थोपलब्धिस्तु प्रमाणस्य फलम्। अयमत्र भावः—अव्यभिचारादिविशेषणविशि-

---

पदार्थके पाये जानेवाले सद्भूतधर्म—अन्वयधर्मकी ओर ज्ञानका झुकाव होता है। ९. निर्णय—तर्कके द्वारा सम्भावित पदार्थके यथार्थ निश्चयको निर्णय कहते हैं। जैसे यह स्थाणु ही है। तर्क और निर्णय पूर्वोत्तरकाल भावी हैं अतः इनका द्वन्द्व समास किया है। १०. वाद—तत्त्वनिर्णके लिए गुरुके साथ चर्चा करनेको वाद कहते हैं। ११. जल्प—प्रतिवादीको पराजित करनेकी इच्छासे शास्त्रार्थ करनेको जल्प कहते हैं। १२. वितण्डा—अपने पक्षका स्थापन नहीं करके, वस्तुतत्त्वका स्पर्श किये बिना ही यद्वा-तद्वा बकवाद करनेको वितण्डा कहते हैं। १३. हेत्वाभास—हेतुके यथार्थ लक्षणसे शून्य पर हेतुकी तरह प्रतिभासित होनेवाले मिथ्याहेतु हेत्वाभास हैं। १४. छल—दूसरेके वचनका खण्डन करनेके लिए शब्दके अर्थमें अनेक विकल्प करना छल कहलाता है। १५. जाति—मिथ्या दूषणोंको जाति कहते हैं। १६. निग्रहस्थान—जिनके कहनेपर वक्ताका पराजय हो जाता है उन्हें निग्रहस्थान कहते हैं। इन प्रमाण आदि पदार्थोंकी विशेष प्ररूपणा—स्वरूप व्याख्या इस प्रकार है—

§ १५. सर्वप्रथम प्रमाणके स्वरूपके वर्णन करनेकी इच्छासे उसके सामान्य लक्षणको तथा उसकी संख्याको कहते हैं—ज्ञान—अर्थोपलब्धिका साधन प्रमाण है। बाह्य विषय स्तम्भ, घड़ा, कमल आदि तथा अन्तरङ्ग ज्ञान, सुख आदि अर्थोंकी उपलब्धि अर्थात् प्रतीति अर्थोपलब्धि है। 'व्याख्यानसे विशेषार्थकी प्रतिपत्ति होती है' इस न्यायके अनुसार यहाँ अव्यभिचारिणी—निर्दोष, अव्यपदेश्या-शब्दके द्वारा जिसका यह 'रूप है, यह रस है' ऐसा कथन न हो, तथा व्यवसायात्मिका—निश्चयात्मिका अर्थोपलब्धि ग्रहण करनी चाहिए, सामान्य उपलब्धि नहीं। ऐसी निर्दोष उपलब्धिका जो कारण होता है वही प्रमाण है। अर्थोपलब्धि तो प्रमाणका फल है। तात्पर्य यह कि

---

१. "पक्षप्रतिपक्षविषयसाधनोपालम्भपरीक्षया तदन्यतरपक्षावधारणं निर्णयः।" —न्यायक. पृ. १३। २. "वादो नाम वीतरागयोः पक्षप्रतिपक्षपरिग्रहपूर्वकः प्रमाणतर्कपूर्वकसाधनोपालम्भप्रयोगे क्रियमाणे एकपक्षनिर्णयावसानो वाक्यसमूहः।"—न्यायक. पृ. १३। ३. "स एव पक्षप्रतिपक्षपरिग्रहो विजिगीषया प्रयुक्तः छलजातिनिग्रहस्थानप्रयोगबहुलो जल्पः।" —न्यायक. पृ. १३। ४. "स्वपक्षसाधनोपन्यासहीनो जल्प एव वितण्डा भवति।" —न्यायक. पृ. १३। ५. "अहेतवो हेतुवदवभासमानाः हेत्वाभासाः।" न्यायक. पृ. १४। ६. तत्र परस्य वदतोऽर्थविकल्पोपपादनेन वचनविघातः छलम्।" —न्यायक. पृ. १६। ७. "सम्यग्हेतौ हेत्वाभासे वा प्रयुक्ते झटिति तद्दोषतत्त्वाप्रतिभासे तु प्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिरित्युच्यते।" —न्यायक. पृ. १७। ८. "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्।" न्यायक. पृ. २१।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ष्टार्थोपलब्धिजनिका सामग्री[1] तदेकदेशो वा चक्षुःप्रदीपज्ञानादिर्बोधरूपोऽबोधरूपो वा साधकतमत्वात्प्रमाणम् । तज्जनकत्वं च तस्य प्रामाण्यम् । [2]तज्जन्या त्वर्थोपलब्धिः फलमिति । इन्द्रियजत्वलिङ्गजत्वादिविशेषणविशेषिता सैवोपलब्धिर्यतः स्यात्, तदेव प्रत्यक्षादिप्रमाणस्य विशेषलक्षणं वक्ष्यते । केवलमत्राव्यपदेश्यमिति विशेषणं न शाब्दे सम्बन्धनीयं तस्य शब्दजन्यत्वेन व्यपदेश्यत्वात् । अथ प्रमाणस्य भेदानाह—'तच्चतुर्विधम्' तत्प्रमाणं चतुर्विधं चतुर्भेदम् ॥१४-१६॥

§ १६. अथ तच्चातुर्विध्यमेवाह—

[3]प्रत्यक्षमनुमानं चोपमानं शाब्दिकं तथा ।
तत्रेन्द्रियार्थसंपर्कोत्पन्नमव्यभिचारि च ॥१७॥
व्यवसायात्मकं ज्ञानं व्यपदेशविवर्जितम् ।
प्रत्यक्षमनुमानं तु [4]तत्पूर्वं त्रिविधं भवेत् ॥१८॥
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्तथा ।
तत्राद्यं[5] कारणात्कार्यानुमानमिह गीयते ॥१९॥

§ १७. व्याख्या—प्रत्यक्षमध्यक्षं, अनुमानं लैङ्गिकं, चकारः समुच्चयार्थः, उपमानमुपमितिः, तथाशब्दस्य समुच्चयार्थत्वाच्छाब्दिकं च शब्दे भवं शाब्दिकमागम इत्यर्थः । अथ प्रत्यक्षस्य

---

अव्यभिचार आदि विशेषणोंसे युक्त अर्थोपलब्धिको उत्पन्न करनेवाली पूर्ण सामग्री, अथवा सामग्रीके एक-एक भाग चक्षु, दीपक, ज्ञान आदि, चाहे ये ज्ञान रूप हों या अचेतन, यदि अर्थोपलब्धिमें साधकतम—कारण होते, हैं तो प्रमाण हैं । अर्थोपलब्धिको जनकता ही प्रमाणता है । उस सामग्रीसे उत्पन्न होनेवाली अर्थोपलब्धि फल है । यही अर्थोपलब्धि जब इन्द्रियों-द्वारा उत्पन्न होती है तब प्रत्यक्ष कहलाती है और जब लिंगसे उत्पन्न होती है तब अनुमान कही जाती है । इसी तरह विशेष प्रमाणोंके लक्षण आगे कहेंगे । केवल शाब्दप्रमाणका लक्षण करते समय 'अव्यपदेश्य' विशेषणका सम्बन्ध अर्थोपलब्धिमें नहीं करना चाहिए, क्योंकि शाब्द—आगमज्ञान तो शब्दजन्य होनेसे व्यपदेश्य ही है । वह प्रमाण चार प्रकारका है ॥१४–१६॥

§ १६. अब प्रमाणके चार प्रकारोंका वर्णन करते हैं—

**प्रत्यक्ष, अनुमान, उपमान तथा शाब्दिक—आगम ये चार प्रकारके प्रमाण हैं । इनमें इन्द्रिय और पदार्थके सन्निकर्षसे उत्पन्न होनेवाले, अव्यभिचारि—संशय-विपर्यय आदि दोषोंसे रहित, व्यवसायात्मक—निश्चयात्मक तथा व्यपदेश—'यह रूप है, यह रस है' इत्यादि शब्द-प्रयोगसे रहित ज्ञानको प्रत्यक्ष प्रमाण कहते हैं । प्रत्यक्षपूर्वक उत्पन्न होनेवाला अनुमान ज्ञान पूर्ववत्, शेषवत् तथा सामान्यतोदृष्टके भेदसे तीन प्रकारका है । इनमें कारणसे कार्यके अनुमानको पूर्ववत् कहते हैं ॥१७–१९॥**

§ १७, श्लोकमें 'च' और 'तथा' शब्द समुच्चयार्थक हैं । प्रत्यक्ष, अनुमान—लैङ्गिक उपमान—उपमिति तथा शब्दसे होनेवाला शाब्दिक—ये चार प्रमाण हैं । उन प्रमाणोंमें सर्वप्रथम

---

१. "अव्यभिचारिणीमसन्दिग्धामर्थोपलब्धिं विदधती बोधाबोधस्वभावा सामग्री प्रमाणम् । बोधाबोधस्वभावो हि तस्य स्वरूपम्, अव्यभिचारादिविशेषणार्थोपलब्धिसाधनत्वं लक्षणम् ।" न्यायमं. पृ. १२ । २. तज्जन्यार्थोप–आ., क. । तज्जन्यान्वयोप–भ. २ । ३. "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ।"—न्यायसू. १।१।३ । ४. "अथ तत्पूर्वकं त्रिविधमनुमानम्—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं च ।" न्यायसू. १।१।५ । ५. "पूर्ववदिति यत्र कारणेन कार्यमनुमीयते यथा मेघोन्नत्या भविष्यति वृष्टिरिति ।"—न्यायभा. १।१।५ ।

Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

लक्षणं लक्षयति । 'तत्रेन्द्रियार्थं' इत्यादि । तत्रेति तेषु प्रमाणेषु प्रथमं प्रत्यक्षमुच्यते । अत्रास्येव-मक्षपादप्रणीतं सूत्रम्—"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ।" इति [ न्यायसू. १।१।४ ] इन्द्रियं चक्षुरादिमनःपर्यन्तम्, तस्यार्थः परिच्छेद्य इन्द्रियार्थ इन्द्रियविषयभूतोऽर्थो रूपादिः, "रूपादयस्तदर्थाः" [ ] इति[1] वचनात् । तेन सन्निकर्षः प्रत्यासत्तिरिन्द्रियस्य प्राप्तिः संबन्ध इति यावत् । स च षोढा[2] इन्द्रियेण सार्धं द्रव्यस्य संयोग एव १ । रूपादिगुणानां संयुक्तसमवाय एव द्रव्ये समवेतत्वात् २ । रूपत्वादिषु गुणसमवेतेषु संयुक्तसमवेतसमवाय एव ३ । शब्दे समवाय एवाकाशस्य श्रोत्रत्वेन व्यवस्थितत्वात्, [3]शब्दस्य च तद्गुणत्वेन तत्र समवेतत्वात् ४ । शब्दत्वे समवेतसमवाय एव शब्दे समवेतत्वात् ५ । समवायाभावयोर्विशेषणविशेष्यभाव एव । उक्तरूपपञ्चविधसंबन्धसंबद्धेषु वस्तुषु समवायघटादि

---

प्रत्यक्षका लक्षण करते हैं । अक्षपादने स्वयं न्यायसूत्रमें कहा है कि "इन्द्रिय और पदार्थके सन्निकर्ष से उत्पन्न होनेवाला, अव्यपदेश्य, अव्यभिचारि तथा व्यवसायात्मक ज्ञान प्रत्यक्ष है ।" इन्द्रिय शब्दसे चक्षु, श्रोत्र आदि पाँच इन्द्रियोंका तथा मनका ग्रहण करना चाहिए । अर्थ–उन इन्द्रियोंका विषयभूत अर्थ रूपादि । "रूपादि इन्द्रियोंके विषय हैं" ऐसा शास्त्रका वचन है । अर्थके साथ इन्द्रियोंका सन्निकर्ष—प्राप्ति, समीपता, अर्थात् सम्बन्ध । यह सन्निकर्ष छह प्रकारका है— १. संयोग–चक्षुरादि इन्द्रियोंका द्रव्यके साथ संयोग सन्निकर्ष होता है, अर्थात् चक्षुरिन्द्रिय तेजो-द्रव्य रूप है, रसनेन्द्रिय जलद्रव्यरूप, घ्राणेन्द्रिय पार्थिव तथा स्पर्शनेन्द्रिय वायुद्रव्यरूप है । इन द्रव्यरूप इन्द्रियोंका द्रव्यके साथ संयोग सम्बन्ध होता है । २. संयुक्तसमवाय–द्रव्यमें रहनेवाले रूपादिगुणोंके साथ संयुक्तसमवाय सन्निकर्ष होता है । क्योंकि चक्षुसे संयुक्त द्रव्यमें रूपादिगुण सम-वेत हैं—समवाय सम्बन्धसे रहते हैं । ३. संयुक्तसमवेतसमवाय–रूपादिमें समवायसे रहनेवाले रूपत्वादि के साथ संयुक्तसमवेतसमवाय सन्निकर्ष है । अर्थात् चक्षुसंयुक्त द्रव्यमें रूपादि समवेत हैं तथा उनमें रूपत्वादिका समवाय पाया जाता है । ४. समवाय–श्रोत्रके द्वारा शब्दका साक्षात्कार करनेमें समवाय सन्निकर्ष होता है । कर्णशष्कुलीमें रहनेवाले आकाशद्रव्यको श्रोत्र कहते हैं । शब्द आकाशका गुण है । अतः श्रोत्र अर्थात् आकाशद्रव्यका शब्द नामक गुणसे समवाय सम्बन्ध होता है । ५. समवेतसमवाय–शब्दत्वके साथ श्रोत्रका समवेतसमवाय सन्निकर्ष होता है । आकाश-में समवाय सम्बन्धसे रहनेवाले शब्दमें शब्दत्वका समवाय होता है । ६. विशेषण-विशेष्यभाव— समवाय और अभावका प्रत्यक्ष करनेके लिए विशेषण-विशेष्यभाव सम्बन्ध होता है । ऊपर कहे गये पाँच प्रकारके सम्बन्ध जिन पदार्थोंमें पाये जाते हैं उनसे समवाय तथा घटादि दृश्य पदार्थोंके अभावका विवक्षानुसार विशेषणरूपसे या विशेष्यरूपसे सम्बन्ध रहता है । जैसे 'तन्तु पटसमवाय-

---

१. "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ।" —न्यायसू. १।१।१४ । २. "सन्निकर्षः पुनः षोढा भिद्यते । संयुक्तः, संयुक्तसमवाय, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायो, विशेषण-विशेष्यभावश्चेत्ति । तत्र चक्षुरिन्द्रियं, रूपवान् घटादिरर्थः । तेन सन्निकर्षः संयोगस्तयोर्द्रव्यस्वभावत्वात् । अद्रव्येण च तद्गतरूपादिना संयुक्तसमवायः । यस्माच्चक्षुषा संयुक्ते द्रव्ये रूपादि वर्तत इति । वृत्तिस्तु समवायः । रूपादिवृत्तिना सामान्येन संयुक्तसमवेतसमवायः सन्निकर्षः । एवं घ्राणादिषु गन्धवदा-दिद्रव्येण संयोगः । तत्समवेतेषु गन्धादिषु संयुक्तसमवायः तद्वृत्तिषु च सामान्यादिषु संयुक्तसमवेतसमवायः । शब्दे समवायः । तद्गतेषु च सामान्येषु समवेतसमवायात् । समवाये चाभावे च विशेषणविशेष्यभावा-दिति ।" —न्यायवा. पृ. ३१ । न्यायम. पृ. ६८ । प्रश. क. प्र. १९५ । न्यायमा. पृ. २, ३ ।
३. शब्दस्य गुण–प. १, २, भ. १ । शब्दस्य तद्गुण–आ., क. ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

दृश्याभावयोर्विशेषणत्वं विशेष्यत्वं वा[1] भवतीत्यर्थः। तद्यथा—तन्तवः पटसमवायवन्तः तन्तुषु पटसमवाय इति। घटशून्यं भूतलमिह भूतले घटो नास्तीति ६ षोढा सन्निकर्षः।

§ १८. अथ निकर्षग्रहणमेवास्तु सं-ग्रहणं व्यर्थम्, न; सं-शब्दग्रहणस्य सन्निकर्षषट्कप्रतिपादनार्थत्वात्। एतदेव सन्निकर्षषट्कं ज्ञानोत्पादे समर्थं कारणम्, न संयुक्तसंयोगादिकमिति 'सं'ग्रहणाल्लक्ष्यते।

§ १९. इन्द्रियार्थसंनिकर्षादुत्पन्नं जातम्। उत्पत्तिग्रहणं कारकत्वज्ञापकार्थम्। अत्रायं भावः—इन्द्रियं हि नैकट्यादर्थेन सह संबध्यते, इन्द्रियार्थसंबन्धाच्च ज्ञानमुत्पद्यते। यदुक्तम्—

"आत्मा[2] सहैति मनसा मन इन्द्रियेण, स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः।
योगोऽयमेव मनसः किमगम्यमस्ति, यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥१॥"

[　　　　]

§ २०. ज्ञानसंग्रहणं[3] सुखादिनिवृत्त्यर्थं सुखादीनामज्ञानरूपत्वात्। सुखादयो ह्याह्लादादिस्वभावा ग्राह्यतयानुभूयन्ते, ज्ञानं त्वर्थावगमस्वभावं ग्राहकतयानुभूयत इति ज्ञानसुखाद्योर्भेदोऽध्यक्षसिद्ध एव।

---

वाले हैं', यहाँ समवायकी विशेषण रूपसे तथा 'तन्तुमें पटका समवाय है' यहाँ समवायकी विशेष्यरूपसे प्रतीति होती है। इसी तरह 'भूतल घटसे रहित है' यहाँ अभाव विशेषणरूपसे तथा 'इस भूतलमें घट नहीं है' यहाँ अभाव विशेष्यरूपसे अनुभवमें आता है। इस प्रकार छह प्रकारका सन्निकर्ष है।

§ १८. शंका—'सन्निकर्ष' के स्थानमें निकर्ष ही कहना चाहिए 'सम्' उपसर्गका ग्रहण करना व्यर्थ है; क्योंकि निकर्ष ग्रहण करनेसे भी सम्बन्धका बोध तो हो ही जाता है?

**समाधान**—'सम्' शब्दका ग्रहण छह प्रकारके ही सन्निकर्षका प्रतिपादन करनेके लिए है। ये ही छह सन्निकर्ष ज्ञानकी उत्पत्तिमें समर्थ कारण हैं, संयुक्तसंयोग आदि नहीं। यही 'सम्' के ग्रहण करनेसे सूचित होता है।

§ १९. "इन्द्रिय और पदार्थके सन्निकर्षसे उत्पन्न होनेवाले" यहाँ उत्पत्तिका ग्रहण कारक पक्षकी सूचना देता है। तात्पर्य यह कि इन्द्रियाँ निकटताके कारण पदार्थके साथ सम्बद्ध होती हैं, फिर इन्द्रिय और अर्थका सम्बन्ध होनेपर ज्ञान उत्पन्न होता है। कहा भी है "आत्मा मनसे सम्बद्ध होता है, मन इन्द्रियोंसे तथा इन्द्रियाँ अपने विषयभूत पदार्थसे। यह सम्बन्ध परम्परा बहुत ही शीघ्र होती है, इसीका नाम सम्बन्ध या सन्निकर्ष है। मनके लिए कोई भी वस्तु अगम्य नहीं है। जहाँ मन जाता है वहीं आत्मा भी पहुँच जाता है॥१॥"

§ २०. ज्ञान शब्दका ग्रहण सुखादिमें प्रत्यक्षरूपताका निराकरण करनेके लिए किया गया है, क्योंकि सुखादिक अज्ञानस्वरूप हैं। ज्ञान तो पदार्थका अवगम अर्थात् बोध कराता है, वह अर्थका ग्राहक होता है, जबकि आह्लादरूप सुखादि ग्राह्य होते हैं। यह ज्ञान और सुखादिका भेद तो प्रत्यक्षसे ही अनुभव में आता है।

---

१. –ष्यत्वं भव–आ., क., प. २। 'आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति।" न्यायभा. १।१।४। २. तुलना—आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति।" —न्यायम. पृ. ७०। ३. "अथ ज्ञानग्रहणं किमर्थम्? सुखादिव्यवच्छेदार्थम्।" —न्यायवा. पृ. ३६। "अथ वा सुखादिव्यावृत्त्यर्थं ज्ञानपक्षोपादानम्।" —न्यायम. प्रमा. पृ. ७०।

Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

§ २१. अव्यपदेश्यं[1] नामकल्पनारहितं नामकल्पनायां हि शाब्दं स्यात्। अव्यपदेश्यपदग्रहणाभावे हि व्यपदेशः शब्दस्तेनेन्द्रियार्थसंनिकर्षेण चोभाभ्यां यदुत्पादितं ज्ञानं तदप्यध्यक्षफलं स्यात्तन्निवृत्त्यर्थमव्यपदेश्यपदोपादानम्। इदमत्र तत्त्वम्—चक्षुर्गोशब्दयोर्व्यापारे सति 'अयं गौः' इति विशिष्टकाले यज्ज्ञानमुपजायमानमुपलभ्यते, [2]तच्छब्देन्द्रियोभयजन्यत्वेऽपि प्रभूतविषयत्वेन [3]शब्दस्य प्राधान्याच्छाब्दमिष्यते, न पुनरध्यक्षमिति।

§ २२. इन्द्रियजन्यस्य[4] मरुमरीचिकासूदकज्ञानस्य, शुक्तिशकले कलधौतबोधादेश्च निवृत्त्यर्थमव्यभिचारिपदोपादानम्[5]। यदतस्मिंस्तदित्युत्पद्यते तद्व्यभिचारि ज्ञानम्, तद्व्यवच्छेदेन तस्मिंस्तदिति ज्ञानमव्यभिचारि।

§ २३. व्यवसीयतेऽनेनेति व्यवसायो विशेष उच्यते। विशेषजनितं व्यवसायात्मकम्। अथवा व्यवसायात्मकं निश्चयात्मकम्[6]। एतेन संशयज्ञानमनेकपदार्थालम्बनत्वादनिश्चयात्मक-

§ २१. अव्यपदेश्य—शब्दकी कल्पनासे रहित। 'यदि प्रत्यक्ष ज्ञानमें शब्दकल्पना हो जाये तब तो वह भी शाब्द ही हो जायेगा। यदि अव्यपदेश्य पद न हो तब व्यपदेश—शब्द तथा इन्द्रियार्थ सन्निकर्ष दोनोंसे जो ज्ञान उत्पन्न होता है वह प्रत्यक्षका फल है' यह अर्थ फलित होगा, इसकी निवृत्तिके लिए अव्यपदेश्य पदका ग्रहण किया है। तात्पर्य यह कि चक्षुरिन्द्रिय तथा गोशब्दका युगपत् व्यापार होनेपर 'यह गौ है' यह विशिष्ट ज्ञान उत्पन्न होता है। इस ज्ञानमें यद्यपि आँखका गौके साथ सन्निकर्ष होना तथा गौ शब्दका सुनना दोनों ही कारण हो रहे हैं फिर भी शब्दकी मुख्यता होनेके कारण अथवा शब्दके व्यापारका अधिक भाग होनेसे इस ज्ञानको शाब्द ही मानते हैं प्रत्यक्ष नहीं। शब्दकी प्रधानताका कारण है 'यह गौ है' इस ज्ञानकी उत्पत्तिमें अधिक हाथ बँटाना, इसमें मुख्यरूपसे भाग लेना तथा अधिक विषयका होना।

§ २२. मरुस्थलकी रेतमें जलका ज्ञान तथा सीपमें चाँदीका ज्ञान विपरीत है, व्यभिचारी है, अतः ऐसे ज्ञानोंकी निवृत्तिके लिए अव्यभिचारी पदका ग्रहण किया है। जो पदार्थ जिस रूप नहीं है उसमें उस रूपका ज्ञान होना विपर्यय है। इस विपर्ययका व्यवच्छेद करके जो पदार्थ जिस रूप है उसका उसी रूपमें ज्ञान करनेवाला अव्यभिचारी कहलाता है।

§ २३. वि—विशेष रूपसे अवसाय निश्चय किया जाये जिसके द्वारा, उसे व्यवसाय अर्थात् विशेष कहते हैं। विशेषजनित ज्ञान व्यवसायात्मक कहलाता है। अथवा व्यवसायात्मकका सीधा अर्थ है निश्चयात्मक। इस विशेषणसे अनेक पदार्थोंमें चलितरूपसे झूलनेवाले अनिश्चयात्मक

१. "तत्र वृद्धनैयायिकास्तावदाचक्षते, व्यपदिश्यते इति व्यपदेश्यं शब्दकर्मतामापन्नं ज्ञानमुच्यते यदिन्द्रियार्थसंनिकर्षादुत्पन्नं तद्विषयनामधेयेन व्यपदिश्यते रूपज्ञानं रसज्ञानमिति तद्व्यपदेश्यं ज्ञानं प्रत्यक्षफलं मा भूदित्यव्यपदेश्यग्रहणम्।"—न्यायम. प्रमा. पृ. ७३। "यावदर्थं वै नामधेयशब्दास्तैरर्थसंप्रत्ययोऽर्थसंप्रत्ययाच्च व्यवहारः तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं—रूपमिति जानीते रस इति जानीते नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते अत आह—अव्यपदेश्यमिति।"—न्यायभा. १।१।४। २. तच्छब्दोभयजन्यान्वयिप्रभूतविषय–भ. २। ३. शाब्दस्य भ. २। ४. –स्य मरीचिषूदक– प. १, २, भ. १, २। ५. "ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा संनिकृष्यन्ते तत्रेन्द्रियार्थसन्निकर्षात् उदकमिति ज्ञानमुत्पद्यते तच्च प्रत्यक्षं प्रसज्यते इत्यत आह—अव्यभिचारीति। यद् अतस्मिन् तदिति तद् व्यभिचारि। यत्तु तस्मिन् तदिति तद् अव्यभिचारि प्रत्यक्षमिति।" —न्यायभा. १।१।४। ६. "दूराच्चक्षुषा ह्ययं पश्यन् नावधारयति—धूम इति वा रेणुरिति वा तदेतद् इन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यते इत्यत आह—व्यवसायात्मकमिति।" —न्यायभा. १।१।४।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

त्वाच्च प्रत्यक्षफलं न भवतीति ज्ञापितम् ।

§ २४. नन्वेवमपि ज्ञानपदमनर्थकमन्यविशेषणाभ्यां ज्ञानस्य लब्धत्वात्, न; धर्मिप्रतिपादनार्थत्वादस्य, ज्ञानपदोपात्तो हि धर्मीन्द्रियार्थसन्निकर्षजत्वादिभिर्विशेष्यते । अन्यथा धर्म्यभावे क्वाव्यभिचारादीन् धर्मांस्तत्पदानि प्रतिपादयेयुः[1] ।

§ २५. केचित्पुनरेवं व्याचक्षते—अव्यपदेश्यं व्यवसायात्मकमिति पदद्वयेन [2]निर्विकल्पकसविकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यमाह, शेषाणि तु ज्ञानविशेषणानीति ।

§ २६. अत्र च सूत्रे फलस्वरूपसामग्रीविशेषणपक्षास्त्रयः संभवन्ति[3] । तेषु स्वरूपविशेषणपक्षो न युक्तः । यथोक्तविशेषणं ज्ञानं प्रत्यक्षमिति हि तत्रार्थः स्यात् । तथा चाकारकस्य ज्ञानस्य प्रत्यक्षत्वप्रसक्तिः, न चाकारकस्य प्रत्यक्षत्वं युक्तम् असाधकतमत्वात्साधकतमस्यैव च प्रमाणत्वात् ।

---

संशयज्ञानकी व्यावृत्ति सूचित की गयी है । ऐसा अनिश्चयात्मक संशयज्ञान प्रत्यक्षका फल नहीं हो सकता ।

§ २४. शंका—जब अव्यभिचारि तथा व्यवसायात्मक इन दो विशेषणोंसे ही ज्ञानका बोध हो जाता है तब ज्ञान पदका ग्रहण करना व्यर्थ ही है ?

समाधान—ज्ञानपदका ग्रहण धर्मीका प्रतिपादन करनेके लिए है । ज्ञानरूप धर्मी ही तो इन्द्रियार्थसन्निकर्षजत्व आदि विशेषणोंवाला होगा । यदि धर्मी ही न हो तब ये अव्यभिचार आदि धर्म कहाँ रहेंगे ? अतः अव्यभिचारि आदि पदोंके द्वारा जिसमें अव्यभिचार आदि धर्मोंका कथन किया जाता है उस आधारभूत ज्ञानका कथन करना उचित ही है ।

§ २५. कोई व्याख्याकार अव्यपदेश्य तथा व्यवसायात्मक पदोंसे क्रमशः प्रत्यक्षके निर्विकल्पक तथा सविकल्पक इन दो प्रकारोंका प्रतिपादन हुआ है ऐसा कहते हैं । बाकी अव्यभिचारि आदि पदोंको ज्ञानके विशेषण ही मानते हैं ।

§ २६. इस सूत्रमें इन्द्रियार्थसन्निकर्षजत्व आदि विशेषणोंके विषयमें फलविशेषण, स्वरूपविशेषण तथा सामग्रीविशेषण रूपसे तीन पक्ष सम्भव हैं । इनमें स्वरूपविशेषण पक्ष तो ठीक नहीं है क्योंकि स्वरूपविशेषण पक्षमें 'उक्त विशेषणोंसे विशिष्ट ज्ञान प्रत्यक्ष है' यह अर्थ होता है । इस स्वरूपविशेषण पक्षमें प्रमाणताकी प्रयोजक साधकतम रूपसे कारकता द्योतित नहीं होती, अतः इस पक्षमें अकारक ज्ञान भी प्रत्यक्ष हो सकेगा । परन्तु अकारकको प्रत्यक्ष मानना उचित

---

१. कानि व्यभिचारादीन् धर्मा-भ. २ । २. -कल्पकसविकल्पभे-प., १, २, ३ भ. १ । -कल्पसविकल्पभे-भ. २ । ३. "अत्र चोदयन्ति-इन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणैः स्वरूपं वा विशिष्यते सामग्री वा फलं वा, तत्र स्वरूपविशेषणपक्षे यदेवंस्वरूपं ज्ञानं तत्प्रत्यक्षमिति तत्स्वरूपस्य विशेषितत्वात्फलविशेषणानुपादानाच्च लक्षणमव्याप्त्यतिव्याप्तिभ्यामुपहतं स्यात् ।'''नापि सामग्रीविशेषणपक्षः तत्र ह्यीन्द्रियार्थसंनिकर्षोत्पन्नमिति इन्द्रियार्थसंनिकर्षोपपन्नं सामग्र्यमिति व्याख्यातव्यम्, अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानमिति च तज्जनकत्वादुपचारेण तथा साकल्यं वर्णनीयमिति क्लिष्टकल्पना, फलविशेषणपक्षोऽपि न संगच्छते, ज्ञानप्रत्यक्षयोः फलकरणवाचिनोः सामानाधिकरण्यप्रसङ्गात्, प्रमाणलक्षणप्रस्तावात्प्रत्यक्षं प्रमाणमुच्यते तच्च करणमिति वर्णितम्, ज्ञानं तु तदुपजनितं फलमिति कथमैकाधिरण्यं तस्मात्पक्षत्रयस्याप्ययुक्तियुक्तत्वात्पक्षान्तरस्याप्यसंभवादयुक्तं सूत्रमिति । अत्रोच्यते, स्वरूपसामग्रीविशेषणपक्षौ तावद्यथोक्तदोषोपहतत्वान्नाभ्युपगम्येते, फलविशेषणपक्षमेव संमन्यामहे, तत्र च यद्वैयधिकरण्यं चोदितं तद्वतः शब्दाध्याहारेण परिहरिष्यामः, यत एवं यद्विशेषणविशिष्टं ज्ञानाख्यं फलं भवति तत्प्रत्यक्षमिति सूत्रार्थः, इत्थं च न क्वचिदव्याप्तिरतिव्याप्तिर्वा न काचित् क्लिष्टकल्पना यतः शब्दाध्याहारमात्रेण निरवद्यलक्षणोपवर्णनसमर्थसूत्रपदसंगतिसंभवात् ।" —न्यायम. प्रमा. पृ. ६१ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

तुलासुवर्णादीनां प्रदीपादीनां संनिकर्षेन्द्रियादीनां [1]चाबोधरूपाणामप्रत्यक्षत्वप्रसङ्गश्च। इष्यते चैषां सूत्रकृता प्रत्यक्षत्वम्। तन्न स्वरूपविशेषणपक्षो युक्तः।

§ २७. नापि सामग्रीविशेषणपक्षः, सामग्रीविशेषणपक्षे ह्येवं सूत्रार्थः स्यात्—प्रमातृप्रमेय-चक्षुरादीन्द्रियालोकादिका ज्ञानजनिका सामग्री इन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणविशिष्टज्ञान-जननात् उपचारेणेन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणविशिष्टा सती प्रत्यक्षमिति। एवं च सामग्र्याः सूत्रोपात्तविशेषणयोगित्वं तथाविधफलजनकत्वादुपचारेणैव भवति, न तु स्वत इति। न तु युक्तस्तत्पक्षोऽपि।

§ २८. फलविशेषणपक्षस्तु युक्तिसङ्गतः। अत्र पक्षे 'यतः' इत्यध्याहार्यम्। ततोऽयमर्थः[2]-इन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणं ज्ञानं यत इन्द्रियार्थसंनिकर्षादेर्भवति, स इन्द्रियार्थसंनि-कर्षादिः प्रत्यक्षं प्रमाणम्। ज्ञानं च[3] प्रत्यक्षप्रमाणफलम्। यदा तु ततोऽपि ज्ञानाद्धानोपादानादि-बुद्धय उत्पद्यन्ते, तदा हानादिबुद्ध्यपेक्षया ज्ञानं प्रमाणं हानादिबुद्धयस्तु फलम्। "यदा ज्ञानं प्रमाणं तदा हानादिबुद्धयः फलम्।" [ न्यायभा. १।१।३ ] इति वचनात्। यथा चा[4]नुभवज्ञान-वंशजायाः स्मृतेस्तथा चायमित्येतज्ज्ञानमिन्द्रियार्थसंनिकर्षजत्वात्प्रत्यक्षफलम्। तत्स्मृतेस्तु

नहीं है, क्योंकि प्रमाके प्रति साधकतम कारकको ही प्रमाण कहते हैं। जो अकारक है वह साधकतम हो ही नहीं सकता। स्वरूपविशेषण पक्षमें ज्ञान ही प्रमाण होता है अतः तौलनेमें साधकतमभूत तराजू तथा सोनेके बाँट आदि, दीपक आदि और सन्निकर्ष तथा इन्द्रिय आदि अज्ञानरूप होनेसे प्रत्यक्षप्रमाण नहीं हो सकेंगे। पर, सूत्रकारने इन्हें साधकतम होनेसे प्रमाण माना है। अतः स्वरूपविशेषण पक्ष किसी भी तरह युक्त नहीं है।

§ २७, इसी तरह सामग्रीविशेषण पक्ष भी ठीक नहीं है, क्योंकि सामग्रीविशेषण पक्षमें सूत्र-का यह अर्थ होता है—'प्रमाता, प्रमेय, चक्षुरादि इन्द्रियाँ तथा प्रकाश आदि ज्ञानोत्पादक सामग्री प्रत्यक्ष प्रमाण रूप है। चूँकि इन्द्रियार्थसन्निकर्षजत्व आदि विशेषणोंसे विशिष्ट ज्ञानको उत्पन्न करती है अतः इसमें भी उपचारसे इन्द्रियार्थसन्निकर्षजत्व आदि विशेषणोंका अन्वय हो जाता है, यह भी उक्त विशेषणोंसे विशिष्ट होकर प्रमाण है। इस तरह सूत्रमें कहे गये विशेषणोंका साक्षात् सम्बन्ध सामग्रीमें नहीं हुआ, किन्तु उक्त विशेषण विशिष्ट ज्ञानको उत्पन्न करनेके कारण उपचारसे ही सामग्रीमें उक्त विशेषणोंका सम्बन्ध हुआ स्वतः नहीं। अतः उपचाररूप प्रमाणता लानेवाला यह पक्ष भी उचित नहीं है।

§ २८. हाँ, फलविशेषण पक्ष निर्दोष तथा युक्तिसंगत है। इस पक्षमें 'यतः-जिससे' शब्दका अध्याहार करना चाहिए। तब यह अर्थ होगा कि-इन्द्रियार्थसन्निकर्षजत्व आदि विशेषणवाला ज्ञान यतः-जिस इन्द्रियार्थसन्निकर्ष आदिसे होता है वह इन्द्रियार्थसन्निकर्ष आदि प्रत्यक्ष प्रमाण हैं। ज्ञान तो प्रत्यक्ष प्रमाणका फल है। हाँ, जब उस ज्ञानसे भी उत्तरकालमें हानोपादानादि बुद्धियाँ उत्पन्न होती हैं तब हानोपादानबुद्धि की अपेक्षा ज्ञान प्रमाण होता है तथा हानादिबुद्धियाँ फल। "जब ज्ञानको प्रमाणता होती है तब हानादिबुद्धियाँ फलरूप होंगी।" यह पुरातन आचार्योंका कथन है। इसी तरह अनुभवज्ञानसे संस्कार होता है, तथा संस्कारसे होनेवाली स्मृति

१. -वा बोध-प. १, २, भ. २। २. "यदा संनिकर्षस्तदा ज्ञानं प्रमितिः, यदा ज्ञानं तदा हानो-पादानोपेक्षाबुद्धयः फलम्।....." —न्यायभा. १।१।३। "तत्र सामान्यविशेषेषु स्वरूपालोचनमात्रं प्रत्यक्षं प्रमाणम्....प्रमितिः द्रव्यादिविषयं ज्ञानम्....अथवा सर्वेषु पदार्थेषु चतुष्टयसंनिकर्षादवितथमव्यपदेश्यं यज्ज्ञानमुत्पद्यते तत्प्रत्यक्षं प्रमाणम्....प्रमितिः गुणदोषमाध्यस्थ्यदर्शनमिति।" —प्रश. भा. पृ. १८७। —न्यायवा. पृ. २९। "प्रमाणतायां सामग्र्यास्तज्ज्ञानं फलमिष्यते। तस्य प्रमाणभावे तु फलहानादि-बुद्धयः॥" —न्यायम. प्रमा. पृ. ६२। ३. तु भ. १, २, क.। ४. -ज्ञातवंश-भ. २।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

प्रत्यक्षता । सुखदुःखसंबन्धस्मृतेस्त्विन्द्रियार्थसंनिकर्षसहकारित्वात्तथा चायमिति सारूप्यज्ञानजनकत्वेनाध्यक्षप्रमाणता । सारूप्यज्ञानस्य च सुखसाधनोऽयमित्यानुमानिकफलजनकत्वेनानुमानप्रमाणता । न च सुखसाधनत्वशक्तिज्ञानमिन्द्रियार्थसंनिकर्षजं शक्तेरसंनिहितत्वात् । आत्मनो मनइन्द्रियेण संनिकर्षे सुखादिज्ञानं फलम् । मनइन्द्रियस्य तत्संनिकर्षस्य च प्रत्यक्षप्रमाणता । एवमन्यत्रापि यथार्हं प्रमाणफलविभागोऽवगन्तव्य इति ।

§ २९. एतदेवेन्द्रियार्थसंनिकर्षादिसूत्रं ग्रन्थकारः पद्यबन्धानुलोम्येनेत्थमाह । 'इन्द्रियार्थसंपर्कोत्पन्नम्'[2] इत्यादि । अत्र संपर्कः संबन्धः । 'अव्यभिचारि च' इत्यत्र चकारो विशेषणसमुच्चयार्थः । अव्यभिचारिकमिति पाठे त्वव्यभिचार्येवाव्यभिचारिकं स्वार्थे[3] कप्रत्ययः । व्यपदेशो नामकल्पना । अत्रापि व्याख्यायां 'यतः' इत्यध्याहार्यम् । भावार्थः सर्वोऽपि प्राग्वदेवेति ।

§ ३०. अथ प्रत्यक्षतत्फलयोरभेदविवक्षया प्रत्यक्षस्य भेदा उच्यन्ते । प्रत्यक्षं द्वेधा, अयोगिप्रत्यक्षं योगिप्रत्यक्षं च । यदस्मदादीनामिन्द्रियार्थसंनिकर्षाज्ज्ञानमुत्पद्यते तदयोगिप्रत्यक्षम् । तदपि द्विविधं निर्विकल्पकं सविकल्पं च । तत्र वस्तुस्वरूपमात्रावभासकं निर्विकल्पकं यथा प्रथमाक्षसंनिपातजं ज्ञानम् । संज्ञासंज्ञिसंबन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकं यथा देवदत्तोऽयं दण्डीत्यादि ।

---

'यह उसके समान है' इस इन्द्रियार्थसन्निकर्षज प्रत्यभिज्ञान रूप प्रत्यक्षज्ञानको उत्पन्न करती है । यहाँ प्रत्यभिज्ञान प्रत्यक्ष प्रमाणका फल है तथा स्मृति साधकतम होनेसे प्रत्यक्षप्रमाणरूप है । किन्तु सुखदुःख सम्बन्ध की स्मृति इन्द्रियार्थसन्निकर्षकी सहायतासे 'उसी तरह यह है' इस सादृश्यज्ञानको उत्पन्न करती है अतः वह प्रत्यक्ष प्रमाणरूप है । सादृश्यज्ञान तो 'उसी तरह यह भी सुख साधन है' इस अनुमानरूप फलको उत्पन्न करनेके कारण अनुमान प्रमाणरूप है । क्योंकि सुखसाधनत्वरूप शक्तिका ज्ञान इन्द्रियार्थसन्निकर्षसे नहीं हो सकता, क्योंकि शक्ति अतीन्द्रिय होनेसे सन्निहित नहीं है आत्माका मनरूप इन्द्रियसे सन्निकर्ष होनेपर सुखादिका ज्ञान होता है । यहाँ सुखादिज्ञान फलरूप है तथा मनरूप इन्द्रिय एवं आत्मा और मनका सन्निकर्ष प्रत्यक्षप्रमाणरूप होते हैं । इसी तरह सर्वत्र साधकतम अंशमें प्रमाणरूपता तथा कार्यरूपी अंशमें फलरूपताका विचारकर प्रमाण-फलविभाग समझ लेना चाहिए ।

§ २९. ग्रन्थकारने इसी 'इन्द्रियार्थसन्निकर्षोत्पन्न' सूत्रको पद्यरूपमें परिवर्तित करनेकी इच्छासे 'सन्निकर्ष' की जगह 'सम्पर्क' शब्दका प्रयोग किया है । सम्पर्कका अर्थ है सम्बन्ध, अर्थात् सन्निकर्ष । अव्यभिचारि पदके आगे आया हुआ 'च' शब्द अन्य विशेषणोंका समुच्चय करता है । 'अव्यभिचारिकम्' इस पाठमें अव्यभिचारीको ही अव्यभिचारिक ( स्वार्थमें क प्रत्यय करनेपर ) कहते हैं । व्यपदेश—शब्दकल्पना । इस व्याख्यामें भी 'यतः' शब्दका अध्याहार कर लेना चाहिए । शेष भावार्थ पूर्वोक्त प्रकारसे ही समझ लेना चाहिए ।

§ ३०. 'प्रत्यक्ष' शब्दका प्रयोग प्रमाण तथा फल दोनोंमें ही होता है । अतः प्रत्यक्ष प्रमाण तथा उसके प्रत्यक्ष फलमें अभेद विवक्षा करके प्रत्यक्षके भेद कहते हैं । प्रत्यक्ष दो प्रकारका है—१ अयोगिप्रत्यक्ष तथा २ योगिप्रत्यक्ष । हमलोगोंको जो इन्द्रियार्थसन्निकर्षसे ज्ञान उत्पन्न होता है वह अयोगिप्रत्यक्ष है । यह निर्विकल्पक तथा सविकल्पक रूपसे दो प्रकारका है । वस्तुके स्वरूपमात्रका अवभास करानेवाला ज्ञान निर्विकल्पक है । यह इन्द्रियसन्निकर्ष होते ही सबसे पहले उत्पन्न होता है । वाचक-संज्ञा तथा वाच्य-संज्ञाके सम्बन्धका उल्लेख करके होनेवाले शब्द संसृष्ट ज्ञानके निमित्तको सविकल्पक कहते हैं, जैसे यह देवदत्त है, यह दण्डी है इत्यादि ।

---

१. –धनश–भ. २ । २. इति । अत्र भ. २ । ३. कः प्र–भ. २ । ४. –क्षरस–भ. २ । ५. संज्ञानं संज्ञि–भ. २ ।

Jain Education International                For Private & Personal Use Only                www.jainelibrary.org

§ ३१. "योगिप्रत्यक्षं[1] तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्। तद्द्विविधं युक्तानां प्रत्यक्षं वियुक्तानां च[2]। तत्र समाध्यैकाग्र्यवतां योगजधर्मेश्वरादिसहकृतादात्मान्तःकरणसंयोगादेव बाह्यार्थसंयोगनिरपेक्षं [3]यदशेषार्थग्रहणं तद्युक्तानां प्रत्यक्षम्। एतच्च निर्विकल्पकमेव भवति, विकल्पतः समाध्यैकाग्र्यानुपपत्तेः। इदं चोत्कृष्टयोगिन एव विज्ञेयं योगिमात्रस्य तदसंभवात्। असमाध्यवस्थायां योगिनामात्ममनोबाह्येन्द्रियरूपाद्याश्रयचतुष्कसंयोगाद्रूपादीनाम् आत्ममनःश्रोत्रत्रयसंयोगाच्छब्दस्य, आत्ममनोद्वयसंयोगात्सुखादीनां च यद्ग्रहणं तद्वियुक्तानां प्रत्यक्षम्। तच्च निर्विकल्पकं सविकल्पकं च प्रतिपत्तव्यम्।" विस्तरार्थिना तु न्यायसारटीका विलोकनीयेति।

§ ३२. अथानुमानलक्षणमाह 'अनुमानं तु तत्पूर्वं त्रिविधं भवेत्पूर्ववच्छेषवच्चैव' इत्यादि। अत्र चैवशब्दौ पूर्ववदादीनामर्थबाहुल्यसूचकौ। तथाशब्दश्चकारार्थः[4] समुच्चये। शेषं तु सूत्र[5]व्याख्ययैव व्याख्यास्यते। सूत्रं त्विदम्—"तत्पूर्वकं त्रिविधमनुमानं, पूर्ववच्छेषवत्सामान्यतो दृष्टं च" [ ] इति। एके व्याख्यान्ति[6]—अत्रैकस्य पूर्वकशब्दस्य सामान्यश्रुत्या लुप्तनिर्देशो द्रष्टव्यः।

---

§ ३१. योगिप्रत्यक्ष दूरदेशवर्ती अतीतानागतकालवर्ती तथा सूक्ष्मस्वभाववाले यावत् अतीन्द्रिय पदार्थोंको जानता है। योगिप्रत्यक्ष स्वामीके भेदसे दो प्रकारका है। १ युक्त-योगिप्रत्यक्ष, २ वियुक्त-योगिप्रत्यक्ष। समाधिसे जिनका चित्त परम एकाग्रताको प्राप्त हुआ है उन युक्त योगियोंको, योगजधर्म तथा ईश्वरादि जिसमें सहकारी हैं ऐसे आत्मा तथा अन्तःकरणके संयोगमात्रसे जो सम्पूर्ण पदार्थोंका यथावत् परिज्ञान होता है वह युक्त-योगिप्रत्यक्ष है। इसमें बाह्य अर्थोंके सन्निकर्ष की आवश्यकता नहीं है। यह प्रत्यक्ष निर्विकल्पक ही होता है, क्योंकि समाधिकी एकाग्रतामें विकल्प की सम्भावना ही नहीं है, विकल्प होते ही समाधिकी एकाग्रता टूट जाती है। यह प्रत्यक्ष उत्कृष्ट योगियोंको ही होता है, सभी योगियोंको इसके होनेका नियम नहीं है। समाधिसे रहित अवस्थामें वियुक्त समाधिशून्य योगियोंको, आत्मा, मन, बाह्य इन्द्रियाँ तथा रूपादि पदार्थ इन चारके सन्निकर्षसे रूपादिका, आत्मा, मन और श्रोत्र इन तीनके सन्निकर्षसे शब्दका तथा आत्मा और मन दो के संयोगसे सुखादिका जो ज्ञान होता है वह वियुक्त-योगिप्रत्यक्ष कहलाता है। यह निर्विकल्पक तथा सविकल्पक दोनों प्रकारका होता है। इनका विशेष विवरण न्यायसारटीकामें देखना चाहिए।

§ ३२. 'अनुमानं तु तत्पूर्वं त्रिविधं भवेत्। पूर्ववच्छेषवच्चैव' इत्यादि श्लोकांशमें अनुमानका स्वरूप कहा गया है। श्लोकमें आये हुए 'च' और 'एव' शब्द पूर्ववत् आदि पदोंकी अनेक व्याख्याओंकी सूचना देते हैं। 'तथा' शब्द चकारके स्थानमें प्रयुक्त हुआ है। यह समुच्चयार्थक है। श्लोककी शेष व्याख्या 'पूर्ववत्' आदि न्यायसूत्रकी निम्नलिखित व्याख्यासे ही गतार्थ हो जाती है। "तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतोदृष्टं च" यह न्यायदर्शनका अनुमानसूत्र है। कोई व्याख्याकार 'तत्पूर्वक'में एक पूर्वकशब्दका लुप्तनिर्देश मानते हैं। उनका तात्पर्य है कि 'तत्पूर्वक'में दो पूर्वकशब्द थे उनमें-से समानश्रुति होनेके कारण व्याकरणके नियमके अनुसार एक पूर्वकशब्दका लोप हो गया है और एक पूर्वक शब्द शेष बचा है। अतः अर्थ करते समय 'तत्पूर्वक

---

१. "योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्। तद्द्विविधम्। युक्तावस्थायामयुक्तावस्थायां चेति। यत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहितादशेषार्थग्राहकम्। वियुक्तावस्थायां चतुष्टयत्रयद्वयसंनिकर्षाद्ग्रहणम्। यथासंभावनं योजनीयम्। अत्रैवार्षमप्यन्तर्भूतं प्रकृष्टधर्मजत्वाविशेषादिति। तच्च द्विविधं सविकल्पकं निर्विकल्पकं चेति। तत्र संज्ञादिसंबन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकम् यथा देवदत्तोऽयं दण्डीत्यादि। वस्तुस्वरूपमात्रावभासकं निर्विकल्पकं यथा प्रथमाक्षसंनिपातजं ज्ञानम्। युक्तावस्थायां योगिज्ञानं चेति।" —न्यायसा. १ पृ. ३। २. योगधर्म–आ., क., प. २। ३. यदि शेषार्थसंयोगनिरपेक्षं यदशे–भ. २। ४. –श्चकारोऽर्थस–भ. २। ५. सूत्रं व्याख्यास्य–क.। ६. ख्यातं भावि सूत्रं भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तत्पूर्वकमित्यत्र तच्छब्देन प्रत्यक्षं प्रमाणमभिसंबध्यते । तत्पूर्वकं प्रत्यक्षफलं लिङ्गज्ञानमित्यर्थः । तत्पूर्वकपूर्वकं लिङ्गिज्ञानम् । अयमत्र भावः—प्रत्यक्षाद्धूमादिज्ञानमुत्पद्यते, धूमादिज्ञानाच्च वह्न्यादिज्ञानमिति । इन्द्रियार्थसंनिकर्षोत्पन्नत्ववर्जाणि च ज्ञानादिविशेषणानि प्रत्यक्षसूत्रादत्रापि संबन्धनीयानि । एषां च व्यवच्छेद्यानि प्रागुक्तानुसारेण स्वयं परिभाव्यानि ।

§ ३३. तथा द्वितीयलिङ्गदर्शनपूर्विकाया[1] अविनाभावसंबन्धस्मृतेस्तत्पूर्वकपूर्वकत्वात्तज्जनकस्यानुमानत्वनिवृत्त्यर्थमर्थोपलब्धिग्रहणं कार्यं, स्मृतेस्त्वर्थं विनापि भावात् । ततोऽयमर्थः । अर्थोपलब्धिरूपमव्यभिचरितमव्यपदेश्यं व्यवसायात्मकं ज्ञानं तत्पूर्वकपूर्वकं यतो लिङ्गादेः समुपजायते तदनुमानमिति । तथा ते द्वे प्रत्यक्षे लिङ्गलिङ्गिसंबन्धदर्शनं [2]लिङ्गदर्शनं च पूर्वं यस्य तत्तत्पूर्वकमिति विग्रहविशेषाश्रयणादनुमानस्याध्यक्षफलद्वयपूर्वकत्वं ज्ञापितं द्रष्टव्यम्[3] । तथा

पूर्वक' यही दृष्टिमें रखना चाहिए । 'तत्पूर्वक'में 'तत्' शब्दसे प्रत्यक्ष प्रमाण अभिप्रेत है अतएव तत्पूर्वक शब्दसे प्रत्यक्षफलज्ञान अर्थात् लिंगज्ञानका बोध होता है । अतः तत्पूर्वक अर्थात् लिंगज्ञान जिसका पूर्व अर्थात् कारण है ऐसे लिंगज्ञानको तत्पूर्वक अर्थात् अनुमिति कहते हैं । तात्पर्य यह कि प्रत्यक्षसे धूमादि लिंगका ज्ञान होता है और धूमादिलिंगज्ञानसे अग्नि आदि लिंगी अर्थात् साध्यका ज्ञान होता है । इस अनुमानके लक्षणमें 'इन्द्रियार्थसन्निकर्षोत्पन्न' विशेषणके सिवाय प्रत्यक्षके लक्षणमें प्रयुक्त अन्य सभी विशेषणोंकी अनुवृत्ति कर लेनी चाहिए । और उन विशेषणोंसे विपर्यय आदि ज्ञानोंकी व्यावृत्ति भी यहाँ कर लेनी चाहिए ।

§ ३३. द्वितीयलिंगदर्शन अर्थात् लिंगके दूसरे बार होनेवाले प्रत्यक्षसे अविनाभाव सम्बन्धकी स्मृति भी होती है, अतः यह स्मृति भी तत्पूर्वक कही जा सकती है अतः इस स्मृतिको उत्पन्न करनेवाले द्वितीयलिंगदर्शनमें भी अनुमानप्रमाणताका प्रसंग होता है अतः इसके वारणके लिए अनुमानके लक्षणमें 'अर्थोपलब्धि' का अध्याहार कर लेना चाहिए । स्मृति तो अर्थके बिना भी हो जाती है अतः वह अर्थोपलब्धिरूप नहीं है अतः इसको उत्पन्न करनेवाला द्वितीयलिंगदर्शन अनुमानप्रमाण नहीं कहा जा सकता । इसका सार यह है कि अव्यभिचारी अव्यपदेश्य व्यवसायात्मक तत्पूर्वकपूर्वक ज्ञानरूप अर्थात् प्रत्यक्ष प्रमाणसे होनेवाले लिंगदर्शनसे उत्पन्न लिंगिज्ञानरूप अर्थोपलब्धि जिस लिंग आदिसे उत्पन्न होती है उसे अनुमान कहते हैं । इस तरह दो प्रत्यक्ष अर्थात् लिंगलिंगिसम्बन्धदर्शन और लिंगदर्शन जिसके कारण हैं वह तत्पूर्वक ज्ञान अर्थात् अनुमान

१. –भाविस–भ. २ । २. लिङ्गिदर्शनं आ. । ३. अथेदानीं सूत्रमनुसरामः, तत्पूर्वकमित्यादि, अनुमानमिति लक्ष्यनिर्देशः तत्पूर्वकमिति लक्षणम्, तदिति सर्वनाम्ना प्रक्रान्तं प्रत्यक्षमवमृश्यते तत् पूर्वं कारणं यस्य तत्तत्पूर्वकम्, एतावत्युच्यमाने निर्णयोपमानादौ तत्पूर्वके प्रसङ्गो न व्यावर्त्तते इति तद्व्यावृत्तये द्विवचनान्तेन विग्रहः प्रदर्शयितव्यः, ते द्वे प्रत्यक्षे पूर्वं यस्येति यदेकमविनाभावग्राहि प्रत्यक्षं व्याख्यातं यच्च द्वितीयं लिङ्गदर्शनं ते द्वे प्रत्यक्षे अनुमानस्यैव कारणं नोपमानादेः, तत्र प्रतिबन्धग्राहि प्रत्यक्षं स्मरणद्वारेण तत्कारणं लिङ्गदर्शनं तु स्वत एव ।"—न्यायम. प्रमा. पृ. ११२ । "तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाभिसंबध्यते, लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन लिङ्गिस्मृतिरभिसंबध्यते । स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते ।"—न्यायभा. १।१।५ । "तानि ते तत् पूर्वं यस्य तदिदं तत्पूर्वकम् । यदा तानीति विग्रहः तदा समस्तप्रमाणाभिसंबन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति । पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठते इति तत्पूर्वकत्वमुक्तं भवति । यदापि विवेकात् ते पूर्वे यस्येति, ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति । ते च द्वे प्रत्यक्षे । लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षं, लिङ्गदर्शनं द्वितीयम् । बुभुत्सावतो द्वितीयालिङ्गदर्शनात् संस्काराभिव्यक्त्युत्तरकालं स्मृतिः स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति । तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपमनुमानं भवति ।"—न्यायवा. पृ. ४३ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तानि प्रत्यक्षादिसर्वप्रमाणानि पूर्वं यस्य तत्तत्पूर्वकमिति विग्रहविशेषाश्रयणेन सर्वप्रमाणपूर्वकत्वमप्यनुमानस्य लभ्यते। न च तेषां पूर्वमप्रकृतत्वात्कथं तच्छब्देन परामर्श इति प्रेर्यम्। यतः साक्षादप्रकृतत्वेऽपि प्रत्यक्षसूत्रे व्यवच्छेद्यत्वेन प्रकृतत्वादिति। अस्यां व्याख्यायां[1] नाव्याप्त्यादिदोषः कश्चनापि।

§ ३४. ये तु पूर्वशब्दस्यैकस्य लुप्तस्य निर्देशं नाभ्युपगच्छन्ति तेषां प्रत्यक्षफलेऽनुमानत्वप्रसक्तिः, तत्फलस्य प्रत्यक्षप्रमाणपूर्वकत्वात्। अथाकारकस्याप्रमाणत्वात्[2] कारकत्वं लभ्यते, ततोऽयमर्थः—अव्यभिचारिताव्यपदेश्यव्यवसायात्मिकार्थोपलब्धिजनकमेवाध्यक्षफलं[3] लिङ्गज्ञानमनुमानमिति चेत्; उच्यते—एवमपि विशिष्टज्ञानमेवानुमानं प्रसज्यते। न च ज्ञानस्यैवानुमानत्वम्, "स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि" [ न्यायभा. १।१।१६ ] इति वचनात् सर्वस्य बोधाबोधरूपस्य विशिष्टफलजनकस्यानुमानत्वादित्य-

है। ऐसा द्विवचनान्त तत् शब्दसे विशेष विग्रह करनेसे सूचित होता है कि अनुमान प्रत्यक्षप्रमाणके फलरूप दो प्रत्यक्षज्ञानोंसे उत्पन्न होता है। इसी तरह वे प्रत्यक्ष आदि सभी प्रमाण जिसके पूर्वमें हैं उस तत्पूर्वकज्ञानको अनुमान कहते हैं। ऐसे बहुवचनान्त तत् शब्दसे विग्रह करनेसे यह ज्ञात हो जाता है कि-अनुमानमें प्रत्यक्ष आदि सभी प्रमाण कारण होते हैं।

शंका—प्रत्यक्षसे अतिरिक्त अन्य प्रमाणोंका तो पहले प्रकरण नहीं आया है इसलिए बहुवचनान्त तत् शब्दके विग्रहमें उनका ग्रहण कैसे किया जा सकता है?

**समाधान**—यद्यपि अन्य प्रमाणोंका साक्षात् प्रकरण नहीं है फिर भी प्रत्यक्षके लक्षण सूत्रमें उन अन्य प्रमाणोंकी व्यावृत्ति तो की ही गयी है। अतः व्यवच्छेद्य रूपमें उनका प्रकरण था ही। अतः तत् शब्दसे उनका ग्रहण किया जा सकता है।

इस तरह पूर्व शब्दका लुप्त निर्देश मानकर की जानेवाली अनुमानकी यह व्याख्या अव्याप्ति अतिव्याप्ति आदि सभी दोषोंसे रहित है। उसमें कोई दोष नहीं है।

§ ३४. जो व्याख्याकार एक पूर्वशब्दके लोपका निर्देश नहीं मानते, उनके मतमें प्रत्यक्षके फलमें भी अनुमानत्वका प्रसंग होता है; क्योंकि प्रत्यक्षका फल भी प्रत्यक्ष प्रमाण पूर्वक तो होता ही है, अतः तत्पूर्वक होनेसे वह भी अनुमान रूप हो जायेगा।

शंका—प्रमाके प्रति साधकतम कारकको प्रमाण कहते हैं, इसलिए अकारक प्रमाण नहीं बन सकता। अतएव प्रत्यक्ष फलमें, जो कि अकारक है, अनुमानत्वका प्रसंग नहीं हो सकता। तात्पर्य यह कि जो प्रत्यक्षप्रमाणका फलभूत लिंगज्ञान अव्यभिचरित अव्यपदेश्य तथा व्यवसायात्मकरूप अर्थोपलब्धिको उत्पन्न करता है वही अनुमान प्रमाण रूप हो सकता है, अन्य नहीं।

**समाधान**—आपकी इस व्याख्याके अनुसार तो विशिष्ट ज्ञान ही अनुमानरूप हो सकता है। पर मात्र ज्ञान ही तो अनुमानरूप नहीं होता, शास्त्रमें तो अज्ञानात्मक पदार्थोंको भी लिंगिज्ञानमें साधकतम होनेसे अनुमानरूप कहा है। न्यायसूत्रमें ही कहा है कि—"स्मृति, अनुमान, आगम, संशय, प्रतिभा, स्वप्नज्ञान, ऊह, सुखादिका प्रत्यक्ष तथा इच्छा आदि मनके लिंग हैं।" इसमें स्मृति आदि ज्ञानोंकी तरह इच्छा आदि अज्ञानात्मक पदार्थोंको भी लिंग-अनुमान माना ही है। सूत्रकारका तो यह अभिप्राय है कि—लिंगिज्ञानरूप विशिष्टफलको उत्पन्न

१. -व्यात्यादि -भ. २। २. -णत्वात् साधकतमस्य का.-आ.। -माणत्वात् असाधकतमस्य का-प. १, २। भ. १ प्रतौ तु 'अकारकस्य' इति पदस्य टिप्पणीस्थले 'असाधकतमस्य' इति लिखितम्, तेन ज्ञायते यत् 'साधकतमस्य, असाधकतमस्य' वेति पदं टिप्पणीगतमेव मूले प्रक्षिप्तम्। ३. -जनकमध्यक्ष-भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

व्याप्तिर्लक्षणदोषः[1]। अतोऽर्थोपलब्धिरव्यभिचारादिविशेषणविशिष्टा तत्पूर्वकपूर्विका यतस्तदनुमानमित्येव व्याख्यानं[2] युक्तिमत्।

§ ३५. नन्वत्रापि त्रिविधग्रहणमनर्थकमिति चेत्; न; अनुमानविभागार्थत्वात्। पूर्ववदादिग्रहणं च स्वभावादिविषयप्रतिषेधेन पूर्ववदादिविषयज्ञापनार्थम्। पूर्ववदाद्येव त्रिविधविभागेन विवक्षितं न स्वभावादिकमिति प्रथमं व्याख्यानम्।

§ ३६. अपरे त्वेवं सूत्रं व्याचक्षते[3]—तत्पूर्वकं प्रत्यक्षपूर्वकं त्रिविधमिति त्रिभेदमनुमानम्। के पुनर्भेदा इत्याह—पूर्ववदित्यादि। पूर्वशब्देनान्वयो व्यपदिश्यते, व्यतिरेकात्प्रागवसीयमानत्वात् पूर्वोऽन्वयः, स एवास्ति यस्य तत्पूर्ववत्केवलान्वय्यनुमानम् ॥१॥ शेषो व्यतिरेकः, स एवास्ति यस्य तच्छेषवत् केवलव्यतिरेकि च ॥२॥ सामान्येनान्वयव्यतिरेकयोः साधनाङ्गयोर्यद्दृष्टं तत्सामान्यतोदृष्टमन्वयव्यतिरेकि चेति ॥३॥

---

करनेवाले पदार्थको अनुमान कहना चाहिए, चाहे वह पदार्थ ज्ञानरूप हो अथवा अज्ञानरूप। इस तरह उक्त व्याख्यामें अव्याप्ति दोष आता है। अतः अव्यभिचरित आदि विशेषणोंसे विशिष्ट तत्पूर्वकपूर्विका अर्थोपलब्धि जिससे भी उत्पन्न हो वह अनुमान है। यह ज्ञानरूप भी हो सकता है तथा अज्ञानरूप भी।' यही व्याख्या युक्तिसंगत है।

§ ३५. शंका—जब सूत्रमें 'पूर्ववत्' आदि तीन नाम गिना ही दिये हैं तब फिर त्रिविधपदका प्रयोग किसलिए है? वह तो निरर्थक ही मालूम होता है?

समाधान—त्रिविध पद अनुमानके भेदोंका सूचक होनेसे सार्थक है। 'पूर्ववत्' आदिका ग्रहण तो इसलिए है कि—वे तीन प्रकार 'पूर्ववत्, शेषवत् तथा सामान्यतोदृष्ट' रूपसे ही हो सकते हैं, स्वभाव, कार्य आदि रूप से नहीं। यह प्रथम व्याख्यान हुआ।

§ ३६. कोई इस प्रकार व्याख्यान करते हैं कि—प्रत्यक्षपूर्वक तीन प्रकारका अनुमान होता है। वे भेद इस प्रकार हैं। पूर्ववत्–पूर्व-अन्वय। व्यतिरेकके पहले अन्वयका ही ज्ञान होता है अतः पूर्व शब्दसे अन्वयका ग्रहण होता है। जिस अनुमानमें केवल अन्वयव्याप्ति मिलती है उसे पूर्ववत् अर्थात् केवलान्वयी अनुमान कहते हैं। शेष–व्यतिरेक, जिस अनुमानकी केवल व्यतिरेक व्याप्ति मिलती है वह शेषवत् अर्थात् केवलव्यतिरेकी अनुमान है। सामान्यरूपसे अन्वय और व्यतिरेक दोनों ही व्याप्तियाँ जिसमें मिलती हों वह सामान्यतोदृष्ट अर्थात् अन्वय-व्यतिरेकी अनुमान है।

१. –व्याप्तिलक्ष–आ.। २. "उभयथाऽपि न दोषः कारणावमर्शे तावदिन्द्रियादिकरणपूर्वकं तत्फलं लिङ्गदर्शनं यत् तदेव परोक्षार्थप्रतिपत्तौ करणमनुमानमिति न द्विःपूर्वकशब्दस्य पाठ उपयुज्यते, फलेऽप्यवमृश्यमाने प्रत्यक्षफललिङ्गदर्शनपूर्वकं यदविनाभावस्मरणं तदनुमानं करणमेव ततः परोक्षार्थप्रतिपत्तेः, यदुक्तं प्रत्युत्पन्नकारणजन्या स्मृतिरनुमानमिति स्पष्टमेव सामानाधिकरण्यम्, फले वा अनुमानशब्दं वर्णयिष्यामः अनुमितिरनुमानमिति, यतः शब्दं वा अध्याहरिष्यामः प्रत्यक्षफलपूर्वकं परोक्षार्थप्रतिपत्तिरूपं फलं यतो भवति तदनुमानमिति, अत्र हि प्रथमं लिङ्गदर्शनं ततः प्रतिबन्धस्मरणं ततः केषांचिन्मते परामर्शज्ञानं ततः साध्यार्थप्रतीतिस्ततः लक्षणावसरवर्णितेन क्रमेण हेयादिज्ञानमितीयति प्रतीतिकलापे यथोपपत्तिकार्यकारणभावो वक्तव्य इत्येवं तत्पूर्वकपदमेव केवलमनुमानलक्षणमिति गुरवो वर्णयाञ्चक्रुः।"— न्यायम. प्रमा. पृ. ११५। ३. "त्रिविधमि'ति। अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति। तत्रान्वयव्यतिरेकी विवक्षिततज्जातीयोपपत्तौ विपक्षावृत्तिः यथा अनित्यः शब्दः सामान्यविशेषत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद् घटवदिति। अन्वयी विवक्षिततज्जातीयवृत्तित्वे सति विपक्षहीनो यथा सर्वानित्यत्ववादिनामनित्यः शब्दः कृतकत्वादिति। अस्य हि विपक्षो नास्ति। व्यतिरेकी विवक्षितव्यापकत्वे सति सपक्षाभावे सति विपक्षावृत्तिः। यथा नेदं जीवच्छरीरं निरात्मकं अप्रमाणादिमत्त्वप्रसङ्गादिति।" —न्यायवा. पृ. ४६।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३७. अथवा[1] त्रिविधमिति त्रिरूपम्। कानि त्रीणि रूपाणीत्याह पूर्ववदित्यादि। [2]पूर्वमुपादीयमानत्वापूर्वः पक्षः सोऽस्यास्तीति पूर्ववत्पक्षधर्मत्वम्। शेष उपयुक्तादन्यत्वात्साधर्म्यदृष्टान्तः सोऽस्त्यत्रेति शेषवत्सपक्षे सत्त्वम्। सामान्यतोदृष्टमिति [3]विपक्षे मनागपि यन्न दृष्टं विपक्षे सर्वत्रासत्त्वं तृतीयं रूपम्। चशब्दात्प्रत्यक्षागमाविरुद्धत्वासत्प्रतिपक्षत्वरूपद्वयं च। एवं च पञ्चरूपलिङ्गालम्बनं यत्तत्पूर्वकं तदन्वयव्यतिरेक्यनुमानम्। विपक्षासत्त्वसपक्षसत्त्वयोरन्यतररूपस्यानभिसंबन्धात्तु चतूरूपलिङ्गालम्बनं केवलान्वयि केवलव्यतिरेकि चानुमानम्। तत्र 'अनित्यः शब्दः, कार्यत्वात्, घटादिवदाकाशादिवच्च' इत्यन्वयव्यतिरेकी हेतुः ॥१॥ 'अदृष्टादीनि कस्यचित्प्रत्यक्षाणि, प्रमेयत्वात्, करतलादिवत्' इत्यत्र कस्यचित्प्रत्यक्षत्वे साध्येऽप्रत्यक्षस्य कस्यापि वस्तुनो विपक्षस्याभावादेव केवलान्वयी ॥२॥ सर्ववित्कर्तृपूर्वकं सर्वं कार्यम्, कादाचित्कत्वात्, यत्सर्ववित्कर्तृपूर्वकं न भवति तन्न कादाचित्कं यथाकाशादि। अत्र सर्वस्य कार्यस्य पक्षीकृतत्वादेव सपक्षा-

---

§ ३७. अथवा, त्रिविध—त्रिरूप। हेतुके तीन रूप होते हैं। पूर्ववत्—सर्वप्रथम पक्षका प्रयोग किया जाता है अतः पक्षको पूर्वशब्दसे कहते हैं। पक्षमें रहनेवाले हेतुको पूर्ववत् अर्थात् पक्षधर्मवाला कहते हैं। शेष-पक्षसे भिन्न सदृश धर्मी सपक्ष, अर्थात् अन्वयदृष्टान्त है। जिस हेतुका शेष-अन्वयदृष्टान्त मिलता हो वह शेषवत् अर्थात् सपक्षसत्त्ववाला है। 'सामान्यतोदृष्ट' में अकारका प्रश्लेष करके 'सामान्यतोऽदृष्ट' हो जाता है। जो हेतु किसी भी विपक्षमें किसी भी तरह नहीं रहता वह सामान्यतोदृष्टविवक्षासत्त्व रूपवाला है। 'च' शब्दसे अबाधितविषयत्व अर्थात् प्रत्यक्ष और आगमसे हेतुका बाधित न होना, तथा असत्प्रतिपक्षत्व अर्थात् साध्यके अभावको सिद्ध करनेवाले विपरीत अनुमानका न होना, इन दो रूपोंका भी ग्रहण हो जाता है। इस तरह पांच रूपवाले लिंगसे प्रत्यक्षपूर्वक होनेवाला अन्वयव्यतिरेकी अनुमान होता है। केवलान्वयी हेतुमें विपक्षका अभाव होनेसे विपक्षासत्त्व रूप नहीं पाया जाता तथा केवलव्यतिरेकीमें सपक्षका अभाव होनेसे सपक्षसत्त्वरूप नहीं मिलता, इसलिए ये दोनों अनुमान-हेतु चार-चार रूपवाले होते हैं। जैसे—शब्द अनित्य है, क्योंकि वह कार्य है, जो-जो कार्य होते हैं वे-वे अनित्य होते हैं, जैसे कि घट, जो अनित्य नहीं हैं वे कार्य भी नहीं हैं जैसे कि आकाश। यह अन्वय-व्यतिरेकी अनुमान है। अदृष्ट-पुण्यपाप आदि किसीके प्रत्यक्ष हैं, क्योंकि वे प्रमेय हैं, जो प्रमेय होते हैं वे किसीके प्रत्यक्ष होते हैं जैसे हाथकी हथेली। इस अनुमानमें अदृष्ट आदि सभी पदार्थोंको किसी सर्वज्ञ व्यक्तिके प्रत्यक्षज्ञानका विषय सिद्ध करना प्रस्तुत है। संसारमें सर्वज्ञके अप्रत्यक्ष तो कोई वस्तु है ही नहीं जिसे विपक्ष कह सके, इस तरह विपक्षका अभाव होनेसे इस हेतुमें विपक्षासत्त्व रूप नहीं पाया जाता, इसीलिए यह हेतु केवलान्वयी है। समस्तकार्य सर्वज्ञके द्वारा उत्पन्न किये गये हैं क्योंकि वे

---

१. अथवा त्रिविधमिति। पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति। पूर्वं साध्यं तद् व्याप्त्या यस्यास्तीति तत् पूर्ववत्। साध्यतज्जातीयः शेषः तद्यस्यास्तीति तत् शेषवत्। पूर्ववन्नाम साध्यव्यापकं शेषवदिति समानेऽस्ति। सामान्यतश्चादृष्टम्। चशब्दात् प्रत्यक्षागमाविरुद्धं चेत्येवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति।" —न्यायवा. पृ. ४६। २. "अत्राहुः वादादिकथात्रयेऽपि पूर्वमुपादीयमानत्वात्पक्षः पूर्वशब्देनोच्यते सोऽस्यास्त्याश्रयत्वेनेति पूर्ववल्लिङ्गमित्येवमनेन पदेन पक्षधर्मत्वमुक्तं भवति, पक्षे उपयुक्ते सति शेषः सपक्षो भवति सोऽस्यास्त्याश्रयत्वेनेति शेषवत्, एवमनेन सपक्षे वृत्तिरुक्ता भवति, सामान्यतोदृष्टमित्यनेन विपक्षाद्व्यावृत्तं लिङ्गमुच्यते, कथम्, अकारप्रश्लेषात् सामान्यतोऽदृष्टमिति तिष्ठतु तावद्विशेषः सामान्यतोऽपि न दृष्टम्, क्वेति पक्षसपक्षयोर्वृत्तेरुक्तत्वात्परिशेषाद्विपक्षे सामान्यतोऽपि न दृष्टमित्यवतिष्ठते इत्थं त्रिरूपं लिङ्गमेभिः शब्दैरुक्तं भवति, तदालम्बनं ज्ञानमनुमानम्।" —न्यायम. प्रमा. पृ. ११५। ३. 'विपक्षे मनागपि यन्न दृष्टम्' इति नास्ति—आ.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भावात्केवलव्यतिरेकी । प्रसङ्गद्वारेण वा केवलव्यतिरेकी । यथा नेदं निरात्मकं जीवच्छरीरम-प्राणादिमत्त्वप्रसङ्गाल्लोष्टवदिति प्रसङ्गः । प्रयोगस्त्वित्थम्–इदं जीवच्छरीरं सात्मकम्, प्राणादिमत्त्वात्, यन्न सात्मकं तन्न प्राणादिमद्यथा लोष्टमिति प्रसङ्गपूर्वकः केवलव्यतिरेकीति ॥३॥

§ ३८. एवमनुमानस्य भेदान् स्वरूपं च व्याख्याय विषयस्य त्रैविध्यप्रतिपादनार्थेवमाहुः–अथवा तत्पूर्वकमनुमानं त्रिविधं त्रिप्रकारम् । के पुनस्त्रयः प्रकारा इत्याह पूर्ववदित्यादि[1], पूर्वं कारणं विद्यते यत्रानुमाने तत्पूर्ववत्, यत्र कारणेन कार्यमनुमीयते, यथा विशिष्टमेघोन्नत्या भविष्यति वृष्टिरिति । अत्र कारणशब्देन कारणधर्मं उन्नतत्वादिर्ग्राह्यः । प्रयोगस्त्वेवम्, अमी मेघा वृष्टयुत्पादकाः, गम्भीरगर्जितत्वेऽचि ( त्वे चि ) रप्रभावत्वे च [3]सत्यत्युन्नतत्वात्, य एवं ते वृष्टयुत्पादका यथा वृष्टयुत्पादकपूर्वमेघाः, तथा चामी, तस्मात्तथा ।

§ ३९. ननून्नतत्वादिधर्मयुक्तानामपि मेघानां वृष्टयजनकत्वदर्शनात् कथमैकान्तिकं कारणात्कार्यानुमानमिति चेत् । न, विशिष्टस्योन्नतत्वादेर्धर्मस्य गमकत्वेन विवक्षितत्वात् । न च तस्य

---

कादाचित्क—कभी-कभी नियत समयमें होते हैं, अनित्य हैं, जो सर्वज्ञकर्ताके द्वारा उत्पन्न नहीं किया गया वह कादाचित्क—अनित्य भी नहीं है जैसे कि आकाश आदि । यहाँ समस्त कार्योंको पक्ष किया है, इसलिए संसारमें पक्षसे बहिर्भूत कोई कार्य ही नहीं बचा जिसे सपक्ष मानकर सपक्ष-सत्त्व रूपकी सिद्धि की जा सके । अतः यह हेतु केवलव्यतिरेक व्याप्ति मिलनेके कारण केवलव्यतिरेकी है । अनिष्टका प्रसंग देकर भी केवलव्यतिरेकी हेतुका प्रयोग किया जाता है । जैसे—यह जीवित शरीर आत्मशून्य नहीं है अन्यथा इसमें पत्थर आदिकी तरह प्राणादिके अभावका प्रसंग होगा । इसके प्रयोगका प्रकार यह है—यह जीवित शरीर सात्मक–आत्मासे युक्त है, क्योंकि इसमें प्राण आदि पाये जाते हैं, जो सात्मक नहीं है वह प्राणादिवाला भी नहीं है जैसे कि पत्थर । यह प्रसंगपूर्वक केवलव्यतिरेकी हेतुका उदाहरण है ।

§ ३८. इस तरह अनुमान सूत्रकी भेद तथा स्वरूपको दृष्टिसे व्याख्या करके अब विषय-दृष्टिसे उसके तीन विषयोंका निर्देश करनेके लिए तीसरी व्याख्या करते हैं । अथवा, तत्पूर्वक अनुमान तीन प्रकारका है । पूर्ववत् आदि तीन प्रकार हैं । पूर्ववत्—जिस अनुमानमें पूर्व–कारण मौजूद हो वह पूर्ववत् है अर्थात् जहाँ कारणसे कार्यका अनुमान किया जाता है वह पूर्ववत् अनुमान है । जैसे विशिष्ट—काले और घने मेघोंका उदय हो अर्थात् विशिष्ट मेघोदय देखकर भविष्यत् कालमें पानी बरसनेका अनुमान । यहाँ कारण शब्दसे कारणके उन्नतत्व आदि धर्मोंका ग्रहण करना चाहिए । इसका प्रयोग इस प्रकार है—ये मेघ वृष्टि अवश्य करेंगे, क्योंकि ये खूब घड़घड़ाकर गम्भीर गर्जना कर रहे हैं, बहुत काल तक स्थिर रहनेवाले हैं, जल्दी ही हवामें उड़नेवाले नहीं हैं । तथा उन्नत—खूब सघन हैं, काले हैं । जो मेघ उक्त विशिष्टता रखते हैं वे अवश्य ही बरसते हैं जैसे कि पहले देखे गये बरसनेवाले मेघ, ये मेघ भी तो उसी प्रकारके हैं, इसलिए ये भी अवश्य ही बरसेंगे ।

§ ३९. शंका—आपके द्वारा कहे गये उन्नतत्व आदि धर्मवाले भी बहुत-से मेघ केवल गरज-कर ही रह जाते हैं, बरसते तो नहीं हैं, इसलिए कारणसे कार्यका अनुमान एकान्तिक-सत्य कैसे कहा जा सकता है ? व्यभिचारी भी हो सकता है ।

समाधान—यहाँ बरसनेवाले मेघोंमें रहनेवाले उन्नतत्व आदि विशिष्ट धर्मोंकी विवक्षा है ।

---

१. "पूर्ववन्नाम यत्र कारणेन कार्यमुपनीयत इति भाष्यम् ।''''''''। कथं पुनरस्य प्रयोगः । वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति बहुलबलाकावत्त्वे सति अचिरप्रभावत्त्वे सति उन्नतिमत्त्वात् वृष्टिमन्मेघवदिति ।''—न्यायवा. पृ. ४६, ४७ । २. –त्त्वे चिरप्रभा– भ. २ । ३. सत्युन्नत–क. ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

विशेषो नासर्वज्ञेन निश्चेतुं पार्यत इति वक्तुं शक्यम्; सर्वानुमानोच्छेदप्रसक्तेः। तथाहि–मशकादिव्यावृत्तधूमादीनामपि स्वसाध्याव्यभिचारित्वमसर्वविदा न निश्चेतुं शक्यमिति वक्तुं शक्यत एव। अथ "सुविवेचितं कार्यं कारणं न व्यभिचरति" इति न्यायाद्धूमादेर्गमकत्वम्,[1] तत्तर्ह्यत्रापि समानम्। यो हि भविष्यद्वृष्ट्यव्यभिचारिणमुन्नतत्वादिविशेषमवगन्तुं समर्थः स एव [2]तस्मात्तामनुमिनोति, नागृहीतविशेषः। तदुक्तम्–"अनुमातुरयमपराधो नानुमानस्य" इति।[3]

§ ४०. शेषः [4]कार्यं तदस्यास्ति तच्छेषवत्[5], यत्र कार्येण कारणमनुमीयते, यथा नदीपूरदर्शनाद्वृष्टिः। अत्र कार्यशब्देन कार्यधर्मो लिङ्गमवगन्तव्यम्। प्रयोगस्त्वित्थम्,–उपरिवृष्टिमद्देशसंबन्धिनी नदी, शीघ्रतरस्रोतस्त्वे फलफेनसमूहकाष्ठादिवहनत्वे च सति पूर्णत्वात्, तदन्यनदीवत्।

---

दिखावटी हवामें काफूर होनेवाले मेघोंके उन्नतत्व धर्म तो व्यभिचारी होंगे ही। 'बरसनेवाले मेघोंके उन्नतत्व आदि विशिष्ट धर्मोंको हम लोग जान ही न सकते हों' यह बात तो नहीं है। यदि हम लोग इतना भी विवेक न कर सकें कि 'कौन-से मेघ बरसनेवाले हैं तथा कौन-से केवल गरजनेवाले' तब तो संसारके सभी अनुमानोंका उच्छेद हो जायेगा। क्योंकि यह भी तो कहा जा सकता है कि—'झाले, मच्छर आदिसे धूमका भेद जान भी लिया जाय, पर वह धूम सदा अपने साध्यका व्यभिचारी होगा यह जानना असर्वज्ञोंके सामर्थ्यकी बात नहीं है' लिहाजा धूमसे अग्निका अनुमान करना भी कठिन हो जायेगा। "अच्छी तरह देखा एवं विचारा गया कार्य कारणका व्यभिचारी नहीं हो सकता" इस न्यायके अनुसार धूम हेतुको यदि सत्य माना जाता है तो यह न्याय कारण हेतुमें भी अच्छी तरह लगाया जा सकता है। कि जो व्यक्ति बरसनेवाले मेघोंके अव्यभिचारी उन्नतत्व आदि विशेष धर्मोंका विवेक अच्छी तरह कर सकता है वह अवश्य ही विशिष्ट मेघोदयसे भविष्यद् वृष्टिका अनुमान करेगा। अभी भी साधारण किसान बादलोंका रंग-ढंग देखकर पानी बरसनेका अव्यभिचारी अनुमान करते ही हैं। हाँ, जो मन्द बुद्धि केवल गरजनेवाले तथा बरसनेवाले मेघोंके धर्मोंमें विवेक नहीं कर सकता उसे कारणसे कार्यके अनुमान करनेकी अनधिकार चेष्टा नहीं करनी चाहिए। इसी विषयको शास्त्रमें भी कहा है कि—"यह तो अनुमान करनेवालेकी बुद्धिका दोष है, इसमें अनुमानका कोई दोष नहीं है।"

§ ४०. शेष अर्थात् कार्य। कार्यसे कारणके अनुमानको शेषवत् अनुमान कहते हैं। जैसे नदीकी बाढ़ देखकर ऊपरी देशोंमें हुई वृष्टिका अनुमान करना। यहाँ कार्य शब्दसे कार्यके धर्मभूत हेतुका ग्रहण करना चाहिए। इसका प्रयोग इस प्रकार है—इस नदीके ऊपरी प्रदेश में वृष्टि हुई है, क्योंकि इसका प्रवाह बहुत तेज है, फल फेन तथा किनारेकी लकड़ी आदिको बहानेवाला तथा पूर्ण है, जैसे कि अन्य बाढ़वाली नदी।

---

१. तुलना—"यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते इति चेत् स्तुतं प्रस्तुतम्।"—अष्ट. श., अष्टसह. पृ. ७१। प्रमेयरत्नमा. ३।१०१। लघी. ता. पृ. ४९। सुविवेचितं कार्यं कारणं न व्यभिचरति।"—न्यायकुमु. पृ. ६०४। २. तस्मात्तमनु—आ. क.। सन्मति टी. पृ. २६६। ३. "प्रतिपत्तुरपराधो नानुमानस्येति।" —अष्टश. अष्टस. पृ. ७१, न्यायकुमु. पृ. ७३। स्या. रत्ना. पृ. २६९। "प्रमातुरपराधोऽयं विशेषं यो न पश्यति। नानुमानस्य दोषोऽस्ति प्रमेयाव्यभिचारिणः॥" —न्यायम. प्रमा. पृ. ११८। ४. शेषं का—आ., क.। ५. शेषवत्—तद् यत्र कार्येण कारणमनुमीयते पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते—भूता वृष्टिरिति।" —न्यायभा. १।१।५। "उपरि वृष्टिमद्देशसंबन्धिनी नदी स्रोतः शीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात् पूर्णवृष्टिमन्नदीवदिति। न्यायवा. पृ. ४७।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ४१. [1]सामान्यतोदृष्टं [2]नाम अकार्यकारणभूतेनाविनाभाविना लिङ्गेन यत्र लिङ्गिनोऽवगमः, यथा बलाकया सलिलस्येति । प्रयोगस्त्वयम्—बलाकाजहद्वृत्तिः प्रदेशो जलवान्बलाकावत्त्वात्, संप्रतिपन्नदेशवत् । यथा वान्यवृक्षोपरिदृष्टस्यादित्यस्यान्यपर्वतोपरिदर्शनेन गतेरवगमः । प्रयोगः पुनः—रवेरन्यत्र दर्शनं गत्यविनाभूतं, अन्यत्र दर्शनत्वात्, देवदत्तादेरन्यत्र दर्शनवत् । अत्र यथा देवदत्तादेरन्यत्र दृष्टस्यान्यत्र दर्शनं व्रज्यापूर्वं, तथादित्यस्यापीति, अन्यत्र दर्शनं च[4] न गतेः कार्यं संयोगादेर्गतिकार्यत्वात् ।

§ ४२. अन्ये त्वेवं वर्णयन्ति । [5]समानकालस्य स्पर्शस्य रूपादकार्यकारणभूतात्प्रतिपत्तिः सामान्यतोदृष्टानुमानप्रभवा । अत्र प्रयोगः, ईदृशस्पर्शमिदं वस्त्रमेवंविधरूपत्वात्, तदन्यतादृशवस्त्रवत् । एकं चूतं फलितं दृष्ट्वा पुष्पिता जगति चूता इति प्रतिपत्तिर्वा । प्रयोगस्तु, पुष्पिता जगति चूताश्चूतत्वात्, दृष्टचूतवदित्यादि ।

§ ४१. सामान्यतोदृष्ट—कार्य और कारणसे भिन्न ऐसे किसी भी अविनाभावी साधनसे साध्यका ज्ञान करना सामान्यतोदृष्ट है; जैसे बगुलाको देखकर जलका अनुमान करना । प्रयोग—जिसमें बगुला सदा रहते हैं ऐसा यह प्रदेश जलवाला है, क्योंकि यहाँ बगुला पाये जाते हैं, जैसे कोई बगुलावाला जलाशय । अथवा किसी वृक्षके ऊपर दिखाई देनेवाले सूर्यको कालान्तरमें पर्वत आदिपर देखकर उसकी गतिका अनुमान करना भी सामान्यतोदृष्ट है । प्रयोग—समीपवर्ती वृक्षपर दिखाई देनेवाले सूर्यका थोड़ी ही देरमें दूरवर्ती पर्वतपर दिखाई देना गतिका अविनाभावी है अर्थात् वह गतिके बिना नहीं हो सकता, क्योंकि वह एक जगह देखी गयी वस्तुका अन्यत्र दर्शन है, जैसे एक जगह देखे गये देवदत्तका अन्यत्र दिखाई देना । जैसे एक जगह देखे गये देवदत्तका दूसरे स्थानमें दिखाई देना गमनपूर्वक है उसी तरह सूर्यका भी । यह 'अन्यत्र दिखाई देना' हेतु गतिका कार्य नहीं है; क्योंकि गतिके कार्य तो संयोग आदि होते हैं ।

§ ४२. कोई व्याख्याकार कहते हैं कि रूप देखकर तत्समानकालवर्ती स्पर्शका अनुमान करना सामान्यतोदृष्ट है । यहाँ रूप न तो स्पर्शका कार्य ही है और न कारण ही । प्रयोग—इस वस्त्रका अमुक स्पर्श होना चाहिए, क्योंकि इसमें अमुक रूप पाया जाता है, उस प्रकारके रूप-स्पर्शवाले अन्य वस्त्रकी तरह । अथवा—एक आमके वृक्षको फलोंसे लदा हुआ देखकर 'जगत्के सब आम्र वृक्षोंमें फूल-बौर आ गये हैं' यह अनुमान करना सामान्यतोदृष्ट है । प्रयोग—जगत्के सब आमोंके वृक्षोंमें बौर आ गये हैं क्योंकि वे आमके वृक्ष हैं जैसे कि सामने दिखाई देनेवाला बौरवाला आमका वृक्ष ।

१. "सामान्यतोदृष्टं नाम अकार्याकारणोभूतेन यत्राविनाभाविना विशेषेण विशेष्यमाणो धर्मी गम्यते तत् सामान्यतोदृष्टं यथा बलाकया सलिलानुमानम् । कथं पुनर्बलाकया सलिलानुमानम् ? यावानस्य देशो बलाकयाजहद्वृत्तित्वेन प्रसिद्धो भवति तावन्तमन्तर्भाव्य वृक्षादिकमर्थं पक्षीकृत्य बलाकावत्त्वेन साधयति ।" —न्यायवा. पृ. ४७ । २. नाम कार्य आ. । ३. "सामान्यतोदृष्टम्—व्रज्यापूर्वकमन्यत्र दृष्टस्याऽन्यत्र दर्शनमिति तथा चादित्यस्य, तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति ।" "सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्याद् अप्रत्यक्षो लिङ्गी गम्यते यथेच्छादिभिरात्मा । इच्छादयो गुणा गुणाश्च द्रव्यसंस्थानाः तद् यदेषां स्थानं स आत्मेति ।" न्यायभा. १।१।५ । ४. च गतेः क., म. २ । ५. "सामान्यतोदृष्टं तु यदकार्यकारणभूताल्लिङ्गात्तादृशस्यैव लिङ्गिनोऽनुमानं यथा कपित्थादौ रूपेण रसानुमानम्, रूपरसयोः समवायिकारणमेकं कपित्थादि द्रव्यं न तु तयोरन्योन्यं कार्यकारणभावः ।" न्यायम. प्रमा. पृ. १९ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ४३. अथवा[1] पूर्वेण व्याप्तिग्राहकप्रत्यक्षेण तुल्यं वर्तत इति पूर्ववत् संबन्धग्राहकप्रत्यक्षेण विषयतुल्यत्वात्कथंचित्परिच्छेदक्रियाया अपि तुल्यतात्रानुमाने समस्तीति क्रियातुल्यत्वे[2] वतेः प्रयोगः सिद्धः, तेन पूर्वप्रतिपत्त्या तुल्या प्रतिपत्तिर्यतो भवति, तत्पूर्ववदनुमानम्। इच्छादयः परतन्त्रा गुणत्वात् रूपादिवदिति।

§ ४४. शेषवन्नाम परिशेषः,[3] स च प्रसक्तानां प्रतिषेधेऽन्यत्र प्रसङ्गासंभवाच्छिष्यमाणस्य संप्रत्ययः, यथा गुणत्वादिच्छादीनां पारतन्त्र्ये सिद्धे शरीरादिषु प्रसक्तेषु प्रतिषेधः। शरीरविशेषगुणा इच्छादयो न भवन्ति, तद्गुणानां रूपादीनां स्वपरात्मप्रत्यक्षत्वेनेच्छादीनां च स्वात्मप्रत्यक्षत्वेन वैधर्म्यात्। नापीन्द्रियाणां विषयाणां वा गुणा उपहतेष्वप्यनुस्मरणदर्शनात्। न चान्यस्य प्रसक्तिरस्ति, अतः परिशेषादात्मसिद्धिः। प्रयोगश्चात्र, योऽसौ परः स आत्मशब्दवाच्यः, इच्छाद्याधारत्वात्। ये त्वात्मशब्दवाच्या न भवन्ति, त इच्छाद्याधारा अपि न भवन्ति, यथा शरीरादयः। अत्र प्रत्यक्षेणागृहीतत्वान्वयं केवलव्यतिरेकबलादात्मनः प्रमा शेषवतः[4] फलम्।

§ ४३. अथवा, पूर्ववत्—पूर्व अर्थात् प्राक्कालीन व्याप्तिको ग्रहण करनेवाले प्रत्यक्षके तुल्य विषयवाला अनुमान। अविनाभाव रूप सम्बन्धको ग्रहण करनेवाले प्रत्यक्षके तुल्य ही इसका विषय होता है अतः परिच्छित्ति भी प्रायः उसके तुल्य ही होती है। पूर्ववत्में वति प्रत्यय क्रियाकी तुल्यताके अर्थमें किया गया है। इसलिए जैसे पहले सम्बन्धग्राहि प्रत्यक्षने प्रतिपत्ति की, ठीक उसी तरहकी प्रतिपत्ति जिससे हो उसे पूर्ववत् अनुमान कहते हैं। उदाहरणार्थ—इच्छा आदि परतन्त्र अर्थात् किसी द्रव्यके आश्रित रहते हैं क्योंकि वे गुण हैं जैसे कि रूपादि।

§ ४४. शेषवत्—परिशेषानुमान। प्रसक्त अर्थात् जिनमें प्रकृत पदार्थके रहनेकी आशंका हो सकती है उन पदार्थोंका निषेध करनेपर, जब अन्य किसी अनिष्ट अर्थकी सम्भावना न रहे, तब शेष बचे हुए इष्ट पदार्थकी प्रतिपत्ति करना परिशेषानुमान है। जैसे गुणत्व हेतुसे इच्छा आदिमें परतन्त्रत्वकी सिद्धि होनेपर शरीर विषय और इन्द्रियोंमें भी इच्छाके रहनेका प्रसंग आया कि—'इच्छा आदि शरीर आदिके आश्रित भी हो सकते हैं' तब इन प्रसक्त पदार्थोंका निषेध करके अनिष्ट अर्थकी सम्भावना नहीं रहनेपर परिशेष रूपसे इष्ट-आत्मामें ही इच्छा आदिको आश्रित सिद्ध करना परिशेषानुमानका कार्य है। प्रसक्त प्रतिषेध इस प्रकार किया जाता है—इच्छा आदि शरीरके विशेष गुण नहीं हो सकते, क्योंकि शरीरके विशेष गुण रूपादि स्व तथा पर सर्वसाधारणके प्रत्यक्ष होते हैं, पर इच्छा आदि तो जिस आत्माके हैं उसीके ही प्रत्यक्ष होते हैं अन्य आत्माके प्रत्यक्ष नहीं होते। इच्छादि इन्द्रिय तथा विषयके गुण भी नहीं हैं, क्योंकि अमुक इन्द्रियोंका तथा विषयोंका नाश हो जानेपर भी स्मरण आदि गुणोंका सद्भाव देखा जाता है। यदि ज्ञान इच्छादि इन्द्रियों तथा विषयोंके गुण होते, तब गुणीके नाश होनेपर अनुस्मरण आदि गुणोंकी प्रतीति कदापि नहीं हो सकती थी। इनके अतिरिक्त अन्य किसी अनिष्ट अर्थकी सम्भावना नहीं है अतः परिशेष अर्थात् शेष बचे हुए इष्ट आत्माकी ही उन गुणोंके आधार रूपमें सिद्ध हो जाती है। प्रयोग—परतन्त्रमें जो पर है वह आत्मशब्दवाच्य—आत्मा ही है क्योंकि वही इच्छा आदिका आधार हो सकता है। जो आत्मशब्दवाच्य आत्मा नहीं है वह इच्छा आदिका आधार भी नहीं हो सकता जैसे कि शरीर आदि। यहाँ प्रत्यक्षसे अन्वय व्याप्ति गृहीत नहीं है, अतः केवल-व्यतिरेक दृष्टान्तके आधारसे आत्माका ज्ञान शेषवदनुमानका फल है।

---

१. पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्निरिति। न्यायभा. १।१।५। २. तुल्यत्ववतः आ., क.। ३. "शेषवद् नाम परिशेषः स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्ययः।"—न्यायभा. १।१।५। ४. वत्फलं भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ४५. यत्र धर्मी साधनधर्मश्च प्रत्यक्षः साध्यधर्मश्च सर्वदा[1] प्रत्यक्षः साध्यते तत्सामान्यतोदृष्टम्[2]। यथेच्छादयः परतन्त्रा गुणत्वाद्रूपवत्। उपलब्धिर्वा करणसाध्या क्रियात्वाच्छिदिक्रियावत्। असाधारणकारणपूर्वकं जगद्वैचित्र्यं चित्रत्वाच्चित्रादिवैचित्र्यवदित्यादि सामान्यतोदृष्टस्यानेकमुदाहरणं मन्तव्यम्।

§ ४६. ननु साध्यधर्मस्य सर्वदाप्रत्यक्षत्वेन साध्येन हेतोः कथं व्याप्तिग्रहणमिति चेत्, उच्यते। धर्मिण इच्छादेः प्रत्यक्षप्रतिपन्नत्वं गुणत्वकार्यत्वादेरपि साधनस्य तद्धर्मत्वं प्रतिपन्नमेव। पारतन्त्र्येण च स्वसाध्येन तस्य व्याप्तिरध्यक्षतो रूपादिष्ववगतैव। साध्यव्यावृत्त्या साधनव्यावृत्तिरपि प्रमाणान्तरादेवावगता।

§ ४७. नन्वेवं[3] पूर्ववच्छेषवत्सामान्यतोदृष्टानां परस्परतः को विशेषः। उच्यते। इच्छादेः पारतन्त्र्यमात्रप्रतिपत्तौ गुणत्वं कार्यत्वं वा पूर्ववत्, तदेवाश्रयान्तरबाधया विशिष्टाश्रयत्वेन बाधकेन प्रमाणेनावसीयमानं शेषवतः फलम्, तस्य साध्यधर्मस्य धर्म्यन्तरे प्रत्यक्षस्यापि तत्र धर्मिणि सर्वदाप्रत्यक्षत्वं सामान्यतोदृष्टव्यपदेशनिबन्धनम्। अतस्त्रयाणामेकमेवोदाहरणम्।

---

§ ४५. जहाँ धर्मी और हेतु तो प्रत्यक्ष हो तथा साध्यधर्म सदा अप्रत्यक्ष रहता हो वहाँ सामान्यतोदृष्ट अनुमान होता है। जैसे—इच्छा आदि परतन्त्र हैं क्योंकि वे गुण हैं जैसे कि रूप उपलब्धि रूप क्रिया करणके द्वारा होती है क्योंकि वह क्रिया है जैसे कि बसूलेसे होनेवाली छेदन क्रिया। संसारकी विचित्रता किसी असाधारण कारण—( अदृष्ट ) से होती है क्योंकि वह विचित्रता है जैसे अनेक रंग आदिसे होनेवाली चित्रकी विविधरूपता इत्यादि अनेकों उदाहरण सामान्यतोदृष्ट अनुमानके स्वयं समझ लेना चाहिए।

§ ४६. शंका—सामान्यतोदृष्ट अनुमानमें यदि साध्यधर्म सर्वदा अप्रत्यक्ष है तो उसकी साधनके साथ व्याप्तिका ग्रहण कैसे होगा? सम्बन्धका बोध तो दोनों सम्बन्धियोंके प्रत्यक्ष होनेपर ही हो सकता है।

उत्तर—इच्छादि धर्मी तो 'अहमिच्छावान्' इस मानस प्रत्यक्षसे सिद्ध ही है, इसी तरह उसमें रहनेवाले गुणत्व या कार्यत्व रूप साधन धर्मोंका भी प्रत्यक्ष हो ही जाता है। इन साधनोंकी पारतन्त्र्य रूप साध्यके साथ व्याप्ति भी रूपादिमें प्रत्यक्षसे देखते ही हैं कि—'रूपादि गुण भी है और घट आदिके आश्रित भी हैं। इसी तरह परतन्त्रत्व रूप साध्यकी व्यावृत्ति होनेपर गुणत्व रूप साधन की व्यावृत्ति भी दूसरे प्रमाणोंसे जान ही ली जाती है।

§ ४७. प्रश्न—यदि गुणोंको परतन्त्र सिद्ध करनेमें पूर्ववत्, शेषवत् और सामान्यतोदृष्ट इन तीनों अनुमानोंका प्रयोग होता है, तब इनमें परस्पर क्या भेद है?

उत्तर—इच्छादिमें केवल परतन्त्रता सिद्ध करनेमें प्रयुक्त गुणत्व या कार्यत्व हेतु पूर्ववत् हैं। ये ही जब बाधक प्रमाणोंके द्वारा अन्य आश्रयोंका निषेध करके किसी आत्मारूप विशिष्ट आश्रयमें इच्छादिकी वृत्ति सिद्ध करते हैं तब परिशेषानुमान रूप हो जाते हैं। और चूँकि परतन्त्रत्व रूप साध्य धर्म दूसरे धर्मी सपक्षभूत घटादिमें तो प्रत्यक्ष है पर धर्मीमें सदा अप्रत्यक्ष रहता है इसलिए इसे सामान्यतोदृष्ट अनुमान भी कह सकते हैं। इसीलिए इन तीनोंका एक ही उदाहरण दिया गया है।

---

१. सदा प्र–भ. २। २. "सामान्यतोदृष्टं तु नित्यपरोक्षे धर्मिणि व्याप्तिग्रहणादनुमानम्। यथेच्छादिना कार्येणात्मानुमानं वक्ष्यते।" —न्यायक. पृ. ३। "सामान्यतोदृष्टस्य नित्यपरोक्षानुमेयैकविषयत्वात्।" —न्यायम. प्रमा. पृ. १२१। ३. एकत्राप्युदाहरणे त्रैविध्यमभिधातुं शक्यते, यथा इच्छादिकार्यमाश्रितं कार्यत्वाद् घटवद् इत्याश्रयमात्रे साध्ये पूर्ववदनुमानम्, प्रसक्तशरीरेन्द्रियाद्याश्रयप्रतिषेधेन विशिष्टाश्रयकल्पने तदेव परिशेषानुमानम्, अनुमेयस्य नित्यपरोक्षत्वात् तदेव सामान्यतोदृष्टं च।" —न्यायम. प्रमा. पृ. १२१।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ४८. तदेवं कारणादित्रैविध्यात्त्रिप्रकारं लिङ्गं प्रमिति जनयत्तत्पूर्वकं सदनुमानमिति द्वितीयं व्याख्यानम्। अत्र व्याख्याद्वये प्रथमव्याख्यानमेव बहूनामध्ययनप्रभृतीनामभिमतम्। तत्र च पूर्ववदादीनां व्याख्या द्वितीयव्याख्याने[1] या चतुःप्रकाराभिहिता सैव[2] द्रष्टव्येति। अथ शास्त्रकार एव बालानामसंमोहार्थं शेषव्याख्याप्रकारानुपेक्ष्यानुमानस्य त्रिविधस्य विषयज्ञापनाय पूर्ववदादीनि पदानि व्याख्यानयन्नाह 'तत्राद्यम्' इत्यादि। तत्र तेषु पूर्ववदादिष्वाद्यं पूर्ववदनुमानं किमित्याह—कारणाल्लिङ्गात्कार्यस्य लिङ्गिनोऽनुमानं ज्ञानं कार्यानुमानम्, इहानुमानप्रस्तावे, गीयते प्रोच्यते। कारणात्कार्यमनुमानमिहोदितमिति पाठो वा। तत्रास्तीति-शब्दाध्याहारे कारणात्कार्यमस्तीत्यनुमानम्। कारणात्कार्यमस्तीति ज्ञानमिहानुमानप्रस्ताव उदितं प्रोक्तम्। पाठद्वयेऽप्यत्र यल्लिङ्गिज्ञानमनुमानशब्देनोचे, तद्द्वितीयव्याख्यानकारिणां मतेन, न तु प्रथमव्याख्यानकर्तृमतेन। प्रथमव्याख्याकारिमतेन हि ज्ञानस्य हेतुरेवानुमानशब्दवाच्यः स्यात्। एवं शेषवत्यपि ज्ञेयम्। यत्र कारणात्स्वज्ञानविशिष्टात्कार्यस्य ज्ञानं भवति, तत्पूर्ववदनुमानम्। अत्र ह्यर्थोपलब्धिहेतुः प्रमाणमिति वचनात्कार्यज्ञानमनुमानस्य फलं, तद्धेतुस्त्वनुमानं प्रमाणम्। तेनात्र कारणं वा तज्ज्ञानं वा कार्यकारणप्रतिबन्धस्मरणं वा [3]कार्यं ज्ञापयत्पूर्ववदनुमानमिति ॥१७-१८-१९॥

§ ४९. तस्योदाहरणमाह। यथा—

§ ४८. इस प्रकार कारण आदिके भेदसे तीन प्रकारका लिंग प्रत्यक्ष होकर लिंगि-विषयक प्रमिति को उत्पन्न करता है अतः वह अनुमान है। यह दूसरा व्याख्यान हुआ। इन दो व्याख्याओंमें पहली व्याख्या ही बहुत-से अध्ययन आदि आचार्योंको मान्य है। द्वितीय व्याख्यानमें पूर्ववत् आदिकी जो चार व्याख्याएँ की हैं वे सभीको अभिमत हैं। इन अनेक व्याख्या भेदोंके जालमें शिष्यकी बुद्धि न उलझ जाय, वह भटक न जाय इसलिए ग्रन्थकार स्वयं अन्य व्याख्याओंकी उपेक्षा करके त्रिविध हेतुओंका विषय बतानेके लिए पूर्ववत् आदि पदोंका व्याख्यान करते हैं—उन पूर्ववत् आदि हेतुओंमें पहला पूर्ववत् अनुमान है। कारण रूप हेतुसे कार्य रूप साध्यके अनुमान अर्थात् ज्ञानको इस प्रकरणमें पूर्ववद् अनुमान अर्थात् कार्यानुमान ( कार्यका अनुमान ) कहते हैं। 'कारणात् कार्यमनुमानमिहोदितम्' ऐसा भी पाठ देखा जाता है। इस पाठमें 'अस्ति' शब्दका अध्याहार करके कारणसे 'कार्य है' ऐसा अनुमान-ज्ञान करना इस प्रकरणमें पूर्ववत् अनुमान कहा गया है। यह अर्थ होता है। दोनों ही पाठोंमें जो लिंग-ज्ञानको अनुमान शब्दसे कहा गया है वह 'पूर्ववत्' सूत्रके द्वितीय व्याख्याकारके मतसे है, प्रथम व्याख्याकारके मतसे नहीं। प्रथम व्याख्याकारके मतसे तो उक्त साध्यका ज्ञान 'यतः' जिससे होता है वह हेतु ही अनुमान शब्दका वाच्य होता है। इसी तरह शेषवत् आदिकी व्याख्यामें भी दो पक्ष समझ लेना चाहिए। तात्पर्य यह कि जहाँ स्वज्ञानविशिष्ट कारणसे अर्थात् ज्ञायमान कारणसे कार्यका ज्ञान होता है वह पूर्ववत् अनुमान है। यहाँ "अर्थोपलब्धिके कारणको प्रमाण कहते हैं" ऐसा शास्त्रकारोंका कथन होनेसे कार्यज्ञान तो अनुमानका फल हुआ है तथा यह कार्यज्ञान जिस हेतुसे होता है वह हेतु अनुमान प्रमाण रूप है। इसलिए कारण या कारणका ज्ञान अथवा कार्य-कारण रूप सम्बन्धका स्मरण सभी कार्यका अनुमान-ज्ञान करानेके कारण पूर्ववत् अनुमान हैं ॥१७-१९॥

§ ४९. इस पूर्ववत् अनुमानका उदाहरण कहते हैं। जैसे—

१. ने चतुः भ. २। २. सेव आ., क.। ३. कार्यज्ञानं यत् भ.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

रोलम्बगवलव्यालतमालमलिनत्विषः ।

वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः[1] ॥२०॥

व्याख्या–'यथेति' निदर्शनदर्शनार्थः । रोलम्बा भ्रमराः, गवला अरण्यजातमहिषाः, व्याला दुष्टगजाः सर्पाश्च, तमालास्तापिच्छवृक्षाः । तद्वन्मलिनाः श्यामलास्त्विषः कान्तयो येषां ते तथा । एतेन मेघानां कान्तिमत्ता वचनेनानिर्वचनीया काप्यतिशयश्यामता व्यज्यते, 'एवंप्रायाः' एवंशब्द इदंप्रकारवचनः । प्रायशब्दो बाहुल्यवाचकः । तत एवमिदं प्रकाराणां प्रायो बाहुल्यं येषु त एवंप्राया ईदृक्प्रकारबाहुल्या इत्यर्थः । एतेन गम्भीरगर्जितत्वा(त्व)[2]चिरप्रभावत्वादिप्रकाराणां बाहुल्यं मेघेषु सत्सूचितम् । उक्तविशेषणविशिष्टा मेघा इह [3]जने वृष्टिं न व्यभिचरन्ति, वृष्टिकरा एव भवन्तीत्यर्थः । प्रयोगस्तु सूत्रव्याख्यावसरोक्त एवात्रापि वक्तव्यः ॥२०॥

§ ५०. अथ शेषवद्व्याख्यामाह ।

कार्यात्कारणानुमानं यच्च तच्छेषतन्मतम् ।

तथाविधनदीपूराद्देवो वृष्टो यथोपरि ॥२१॥

§ ५१. व्याख्या–कार्याल्लिङ्गात्कारणस्य लिङ्गिनोऽनुमानं ज्ञानं यत्, चकारः प्रागुक्तपूर्ववदपेक्षया समुच्चये, तच्छेषवन्मतम् । अयमत्र तत्त्वार्थः । यत्र कार्यात्कारणज्ञानं भवति, तच्छेषवद-

---

भ्रमर, भैंसा, सर्प या मदोन्मत्त जंगली हाथी अथवा तमालवृक्षकी तरह गहरी श्याम कान्तिवाले तथा और भी इसी प्रकारके मेघ वृष्टिके व्यभिचारी नहीं होते, ऐसे मेघोंसे अवश्य ही वृष्टि होती है अतः इस प्रकारके मेघोंको देखकर भावी वृष्टिका अनुमान होता ही है ॥२०॥

यथा शब्द उदाहरणके अर्थमें आया है। रोलम्ब-भौंरा, गवल–जंगली भैंसे, व्याल–मत्तहाथी अथवा कृष्णसर्प, तमाल–तापिच्छके पेड़ इन सबके समान मलिन-श्याम कान्तिवाले मेघ वृष्टिके व्यभिचारी नहीं होते, वे अवश्य ही बरसते हैं। यहाँ मेघोंकी कान्तिका कथन होनेसे मालूम होता है कि मेघोंमें कोई ऐसा अनिर्वचनीय विचित्र अतिशय कालापन होता है जो देखा तो जा सकता है, कहा नहीं जा सकता। एवं प्रायः शब्दसे सूचित होता है कि मेघोंमें मात्र विचित्र श्यामलता ही वृष्टिका अनुमान नहीं कराती, किन्तु और भी इसी प्रकारके अनेक धर्म देखे जाते हैं जो कि वृष्टिके अव्यभिचारी होते हैं। जैसे गम्भीर घड़घड़ाकर गरजना, हवा आनेपर भी उड़ नहीं जाना और चिरकाल तक मँडराते रहना, इत्यादि। इस तरह अनेकों वृष्टिके अविनाभावी विशेषणोंसे विशिष्ट मेघ नियमसे बरसनेवाले होते हैं इसलिए इनसे भावी वृष्टिका निर्दुष्ट अनुमान होता ही है। इस अनुमानके प्रयोगका ढंग 'पूर्ववत्' सूत्रकी व्याख्यामें कहा जा चुका है ॥२०॥

§ ५०. अब शेषवद् अनुमानकी व्याख्या करते हैं–

कार्यसे कारणके अनुमानको शेषवत् कहते हैं। जैसे नदीके विशिष्ट पूरको देखकर नदीके ऊपरी भागमें हुई वृष्टिका अनुमान करना ॥२१॥

§ ५१. कार्यरूप लिंगसे कारणरूप लिंगी–साध्यका जो अनुमान होता है वह शेषवत् है। चकार पूर्ववत्की अपेक्षा समुच्चयके लिए है। तात्पर्य यह कि–जहाँ कार्यसे कारणका ज्ञान किया

---

१. तुलना–"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः। रोलम्बगवलव्यालतमालमलिनत्विषः ॥ त्वङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः। वृष्टिं व्यभिचरन्तीह नैव प्रायः पयोमुचः ॥" –न्यायम. प्रमा. पृ. ११७। "आवर्तवर्तनाशालिविशालकलुषोदकः। कल्लोलविकटास्फालस्फुरत्फेनच्छटाञ्चितः ॥ वहद्बहलशैवालवनशाद्वलसंकुलः। नदीपूरविशेषोऽपि शक्येत न निवेदितुम् ॥"–न्यायम. प्रमा. पृ. ११८। २. –त्वात् चिर– भ. २। ३. जनेषु वृ– भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नुमानम्। अत्रापि प्राग्वत्कारणज्ञानस्य हेतुः कार्यं कार्यदर्शनं तत्संबन्धस्मरणं चानुमानशब्देन प्रतिपत्तव्यम्। यथेत्युदाहरणोपन्यासार्थः प्रथममत्र योज्यः। तथा[1]विधः शीघ्रतरस्रोतस्त्वफलफेनादिवहनत्वोभयतटव्यापित्वधर्मविशिष्टो यो नदीपूरस्तस्माल्लिङ्गादुपरिदेशे देवो मेघो वृष्ट इति ज्ञानम्। अत्र प्रयोगः प्राग्वत् ॥२१॥

यच्च सामान्यतोदृष्टं तदेवं गतिपूर्विका।
पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥२२॥

§ ५२. व्याख्या—चः पुनरर्थे, यत्पुनः कार्यकारणभावादन्यत्र सामान्यतोऽविनाभावबलेन दृष्टं लिङ्गं सामान्यतोदृष्टं, तदेवम्। कथमित्याह—यथा पुंस्येकस्माद्देशाद्देशान्तरप्राप्तिर्गतिपूर्विका तथा सूर्येऽपि सा देशान्तरप्राप्तिस्तथा गतिपूर्विका। अत्र देशान्तरप्राप्तिशब्देन देशान्तरदर्शनं ज्ञेयम्। अन्यथा देशान्तरप्राप्तेर्गतिकार्यत्वेन शेषवतोऽनुमानादस्य भेदो न स्यात्। यद्यपि गगने संचरतः सूर्यस्य नेत्रावलोकप्रसराभावेन गतिर्नोपलभ्यते, तथाप्युदयाचलात्कालान्तरेऽस्ताचलचूलिकादौ तद्दर्शनं गतिं गमयति। प्रयोगः पुनः पूर्वमुक्त एव।

§ ५३. अथवा देशान्तरप्रा[2]प्तेर्गतिकार्यत्वं लोको न प्र[3]त्येतीति इदमुदाहरणं कार्यकारणभावाविवक्षयात्रोपन्यस्तम्[4] एतत्प्रयोगस्त्वेवम्, सूर्यस्य देशान्तरप्राप्तिर्गतिपूर्विका देशान्तरप्राप्तित्वाद्देवदत्तदेशान्तरप्राप्तिवत् ॥२२॥

---

जाय वह शेषवदनुमान है। यहाँ भी पहलेकी तरह कारणभूत साध्यके ज्ञानमें हेतु होनेवाले कार्य, कार्यका ज्ञान तथा कार्यकारणभाव रूप सम्बन्धका स्मरण सभी अनुमान प्रमाण रूप होते हैं। 'यथा' शब्द उदाहरणार्थक है। वैसा शीघ्रतर प्रवाह वाला, फल फेन आदिको बहानेवाला, दोनों तटोंके अन्त तक डट कर फैला हुआ जो नदीपूर है उससे ऊपरी भागमें हुई वृष्टिका ज्ञान-अनुमान होता ही है। प्रयोगका प्रकार पहले कहा जा चुका है ॥२१॥

**और जो सामान्यतोदृष्ट है वह इस प्रकार है—किसी पुरुषका गमनपूर्वक देशान्तरमें पहुँचना देखकर सूर्यमें भी देशान्तर प्राप्तिसे गतिका अनुमान करना ॥२२॥**

§ ५२. 'च' शब्द पुनः शब्दके अर्थमें प्रयुक्त हुआ है। जो लिंग कार्यकारणभावके बिना सामान्य रूपसे अविनाभावके बलपर ही अनुमापक होता है वह सामान्यतोदृष्ट है। उदाहरणार्थ—किसी पुरुषका एक देशसे दूसरे देशमें पहुँचना गमन करनेपर ही होता है। इस तरह देशान्तरप्राप्तिका गमन पूर्वकत्वके साथ सामान्यसे अविनाभाव ग्रहण करके सूर्यमें देशान्तरप्राप्तिसे गतिका अनुमान करना सामान्यतोदृष्ट है। देशान्तरप्राप्तिका अर्थ है देशान्तरमें उस वस्तुका देखा जाना। यदि देशान्तर संयोग ही देशान्तरप्राप्तिका अर्थ हो; तब यह संयोग तो गमन क्रियाका कार्य है अतः शेषवदनुमानमें ही यह अन्तर्भूत हो जायेगा, अतः देशान्तर प्राप्तिका अर्थ 'देशान्तरमें उस वस्तुका दिखाई देना' ही करना चाहिए। यद्यपि सूर्यके प्रखर ताप एवं तेज पुंज किरण जालके कारण नेत्र चकचौंधया जाते हैं और इसलिए उसका आकाश गमन नेत्रोंसे नहीं दिखाई देता फिर भी प्रातःकाल उदयाचलपर दिखनेवाले सूर्यको सायंकाल अस्ताचलपर देखनेसे उसकी गतिका परिज्ञान सहज ही हो जाता है। इस अनुमानके प्रयोगकी सरणि पहले बतायी जा चुकी है।

§ ५३. अथवा—'देशान्तरप्राप्ति गमन क्रियाका कार्य है' इस कार्य-कारण भावको साधारण व्यवहारी जन नहीं समझ पाते हैं अतः कार्यकारणभावकी अविवक्षामें इस उदाहरणको सामान्यतोदृष्ट अनुमान मानना चाहिए। प्रयोग—सूर्यका एक देशसे दूसरे देशमें पहुँचना गतिपूर्वक होता है, क्योंकि वह देशान्तरप्राप्ति है जैसे देवदत्तका एक देशसे गति करके दूसरे देशमें पहुँचना ॥२२॥

---

१. विधशीघ्र–आ., क.। तथाविधाः शी– भ. २। २. –प्तिर्गवि–भ. २। ३. प्रत्येतीदमु–भ. २। ४. प्रयो–आ., क.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ५४. उपमानलक्षणमाह—

**प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् ।**
**[1]उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥२३॥**

§ ५५. व्याख्या—[2]"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्" [न्यायसू. १।१।६] इति सूत्रम् । अत्र यत इत्यध्याहार्यम्[3], ततश्च प्रसिद्धेन वस्तुना गवा यत्साधर्म्यं समानधर्मत्वं तस्मात्प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य गवयगतस्य साध्यस्य संज्ञासंज्ञिसंबन्धस्य साधनं प्रतिपत्तिर्यतः साधर्म्यज्ञानाद्भवति तदुपमानं समाख्यातम् । साधर्म्यस्य [4]च प्रसिद्धिरागमपूर्विका[5] । तत आगमसंसूचनायाह[6]—यथा गौस्तथा गवय इति । गवयोऽरण्यगवयः । अयमत्र भावः—कश्चित्प्रभुणा गवयानयनाय प्रेषितस्तदर्थमजानानस्तमेवाप्राक्षीत् कीदृग्गवय इति, स प्रोचे यादृग्गौस्तादृग्गवय इति । ततः सोऽरण्ये परिभ्रमन् समानमर्थं[7] यदा पश्यति, तदा तस्य तद्वाक्यार्थस्मृतिसहायेन्द्रियार्थसंनिकर्षाद् गोसदृशोऽयमिति यत्सारूप्यज्ञानमुत्पद्यते, तत्प्रत्यक्षफलं, तदेवाव्यभिचारादिविशेषणमयं स गवयशब्दवाच्य इति संज्ञासंज्ञिसंबन्धप्रतिपत्तिं जनयदुपमानम् । संज्ञासंज्ञिसंबन्धप्रतिपत्तिस्तूपमानस्य फलम् । न पुनराग-

§ ५४. उपमानका लक्षण कहते हैं—

प्रसिद्ध वस्तुके साधर्म्य-सादृश्यसे अप्रसिद्धकी सिद्धि करना उपमान प्रमाण है। जैसे गौके समान गवय होता है ॥२३

§ ५५. "प्रसिद्ध अर्थके सादृश्यसे साध्यकी सिद्धि उपमान है" यह न्यायदर्शनका उपमान सूत्र है। वहाँ भी 'यतः' पदका अध्याहार करना चाहिए। अतएव प्रसिद्ध वस्तु गौके साधर्म्य-सादृश्यसे गवयमें रहनेवाले अप्रसिद्ध संज्ञा संज्ञिसम्बन्ध ( गवयशब्दका वाच्य यही गोसदृश पदार्थ है ) का साधन-प्रतिपत्ति यतः जिस सादृश्यज्ञानसे होता है उस सादृश्यज्ञानको उपमान प्रमाण कहते हैं। सादृश्यका ज्ञान तो आगमसे होता है। अतएव उसी आगम वाक्यकी सूचनाके लिए 'जैसी गौ है वैसा ही गवय अर्थात् जंगली रोज होता है' यह कहा है। तात्पर्य यह कि—किसी स्वामीने अपने सेवकसे कहा कि—'जाओ, गवय ले आओ'। बिचारा नौकर गवयको जानता ही नहीं था अतः उसने अपने स्वामीसे ही पूछा कि—'गवय कैसा होता है?' स्वामीने उसे बता दिया कि—'जैसी गौ होती है ठीक वैसा ही गवय होता है'। नौकर स्वामीकी बतायी हुई गवयकी पहचानको याद करके जंगल गया। घूमते-घूमते वह एक जगह गौके समान आकारवाले प्राणीको देखता है। उसी समय उसे स्वामीके द्वारा बतायी हुई 'जैसी गौ वैसा ही गवय' पहचानका स्मरण हो आता है। उस स्मरणकी सहायतासे इन्द्रियार्थ सन्निकर्षके द्वारा 'यह गौके सदृश है' ऐसा सादृश्यज्ञान उत्पन्न होता है। यह सादृश्यज्ञान प्रत्यक्षका फल है। यही अव्यभिचारी व्यवसायात्मक आदि विशेषणवाला सादृश्यज्ञान जब 'यही वह गवयशब्दका वाच्य प्राणी है' इस संज्ञासंज्ञि-सम्बन्धकी प्रतिपत्तिको उत्पन्न करता है तब उपमानप्रमाण कहलाता है। संज्ञासंज्ञिसम्बन्धकी

१. "यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतः तमर्थं प्रतिपद्यते इति, समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थम् इन्द्रियार्थसंनिकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यते इति ।"—न्यायभा. १।१।६ । २. प्रसिद्धवस्तुसा– भ. २ । ३. "अत्रापि यत इत्यध्याहार्यम् ।" —न्यायवा. ता. टी. पृ. १९६ । ४. –स्य प्रति– क., भ. २ । ५. "प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च । श्रुतिमयी यथा गौरेवं गवय इति । प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासंबन्धप्रतिपत्तिहेतुः ।" —न्यायभा. ता. टी. पृ. १९७ । ६. –नाय प्राह प. १, २, भ. १, २, । ७. तमर्थमजा–भ. २ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

मिकी सा, शब्दस्य तज्जनकस्य तदानीमभावात् । गवयपिण्डविषये च हेयादिज्ञानं यदुत्पद्यते तदिन्द्रियार्थसंनिकर्षजन्यत्वात्प्रत्यक्षफलम् ॥२३॥

§ ५६. अथ तुर्यं शाब्दमाह—

शाब्दमाप्तोपदेशस्तु[1] मानमेवं[2] चतुर्विधम् ।
प्रमेयं त्वात्मदेहाद्यं बुद्धीन्द्रियसुखादि च ॥२४॥

§ ५७. व्याख्या —शब्दजनितं शाब्दमागम इत्यर्थः । तुर्भिन्नक्रमे, शाब्दं तु प्रमाणमाप्तोपदेशः । [3]आप्त एकान्तेन सत्यवादी हितश्च, तस्योपदेशो वचनमाप्तोपदेशः । तज्जनितं तु ज्ञानं शाब्दस्य फलम् । मानं प्रमाणमेवमुक्तविधिना चतुर्विधम् ।

§ ५८. तदेवं प्रथमं प्रमाणतत्त्वं व्याख्याय संप्रति द्वितीयं प्रमेयतत्त्वं व्याख्यातुमाह— "प्रमेयं त्वात्मदेहाद्यम्" प्रमेयं तु प्रमाणफलस्य[4] ग्राह्यं पुनरात्मदेहाद्यम्, आत्मा जीवः, देहो वपुः, तावाद्यौ यस्य तदात्मदेहाद्यम् । बुद्धीन्द्रियसुखादि च प्रमेयम् । बुद्धिर्ज्ञानं, इन्द्रियं चक्षुरादिमनःपर्यन्तं, सुखं सातं तान्यादिर्यस्य[5] तद्बुद्धीन्द्रियसुखादि । चकार आत्मदेहाद्यपेक्षया समुच्चये । [6]अत्र विशेषणद्वय आद्यशब्देनादिशब्देन च शेषाणामपि सप्तानां प्रमेयानां (पादं) संग्रहो द्रष्टव्यः । तथा च नैयायिकसूत्रम्[7] —"[8]आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्ग-

---

प्रतिपत्ति तो उपमानका फल है । यह प्रतिपत्ति आगमजन्य नहीं कही जा सकती, क्योंकि उस समय इस प्रतिपत्तिको उत्पन्न करनेवाला कोई शब्द नहीं है । गवय प्राणीमें जो हेय उपादेय आदि बुद्धि होती है वह तो इन्द्रियार्थ-सन्निकर्षज होनेसे प्रत्यक्षका फल है ।।२३।।

§ ५६. अब चौथे शाब्द—आगम प्रमाणका वर्णन करते हैं—

**आप्तके उपदेशको शाब्द—आगम प्रमाण कहते हैं । इस तरह प्रमाण चार प्रकारका होता है । आत्मा, शरीर आदि तथा बुद्धि, इन्द्रिय, सुखादि प्रमेय हैं ॥२४॥**

§ ५७. शब्दसे उत्पन्न होनेवाला शाब्द-आगम है । तु शब्द भिन्नक्रमवाला है–अर्थात् इसका जिस शब्दके साथ प्रयोग है उससे अतिरिक्तके साथ अन्वय है । अतएव शाब्द प्रमाण तो आप्तोपदेश रूप है—ऐसा अर्थ होगा । जो एकान्तसे सर्वथा सत्यवादी तथा हितकारी है वह आप्त है । आप्तके वचनको आप्तोपदेश कहते हैं । इस आप्तोपदेश रूप वचनसे होनेवाला ज्ञान आगमका फल है । इस प्रकार प्रमाण चार भेदवाला है ।

§ ५८. इस तरह प्रमाणतत्त्वका व्याख्यान करके अब द्वितीय प्रमेय तत्त्वका वर्णन करते हैं— प्रमाणके फलस्वरूप ज्ञानके ग्राह्य-विषयको प्रमेय कहते हैं। वे प्रमेय आत्म, देह आदि हैं। आत्मा–जीव और देह–शरीर जिनकी आदिमें हैं, वह तथा बुद्धि, ज्ञान, चक्षु आदि मन पर्यन्त छह इन्द्रियां तथा सुख-साता रूप अनुभव, इत्यादि प्रमेय हैं। 'च' शब्द समुच्चयार्थक है। श्लोकमें आद्य तथा आदि इन दोका विशेषणोंमें प्रयोग है। इनसे मन आदि शेष सात प्रमेयोंका संग्रह हो जाता है। न्यायसूत्रमें कहा भी है—"आत्मा, शरीर, इन्द्रिय, अर्थ, बुद्धि, मन, प्रवृत्ति, दोष, प्रेत्यभाव—परलोक,

---

१. "आप्तोपदेशः शब्दः।"—न्यायसू. १।१।७। २. –मानमेव चतु-भ. २। ३. आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा।" —न्यायभा. १।१।७। ४. –फलं ग्राह्यं आ. क.। ५. तान्यादीनि यस्य आ.। ६. –ये आद्यशब्देन च शेषाणामपि प्रमेयानां सप्तानां संग्रहो द्रष्टव्यः—भ. २। ७. सूत्रं तच्च आत्म –१, २, भ. १, २। ८. आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्।" —न्यायसू. १।१।९।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भेदेन द्वादशविधं तदिति प्रमेयम्।" [ न्यायसू. १।१।९ ] [1]तत्र शरीरादिदुःखपर्यन्तं हेयम्, अपवर्गं उपादेयः, आत्मा तु कथंचिद्धेयः कथंचिदुपादेयः सुखदुःखादि [2]भोक्तृतया हेयः तदुन्मुक्ततयोपादेय इति। तत्रेच्छाद्वेषप्रयत्नसुखदुःखज्ञानादीनामाश्रय आत्मा[3]। सचेतनत्वकर्तृत्वसर्वगतत्वादिधर्मैरात्मा प्रतीयते १। तद्भोगायतनं शरीरम् २।[4] [5]पञ्चेन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि ३। पञ्चार्था रूपरसगन्धस्पर्शशब्दाः। तत्र[6] गन्धरसरूपस्पर्शाश्चत्वारः पृथिवीगुणाः, रूपरसस्पर्शास्त्रयोऽपां गुणाः, रूपस्पर्शौ तेजसो गुणौ, एकः स्पर्शो वायोर्गुणः, शब्द आकाशस्य गुण इति ४।[7] बुद्धिरुपलब्धिर्ज्ञानमित्यर्थः, सा क्षणिका, भोगस्वभावत्वाच्च संसारकारणमिति हेया ५। इन्द्रियार्थसंनिकर्षे सत्यपि [9]युगपज्ज्ञानानुत्पादादान्तरसुखादिविषयोपलब्धेश्च बाह्यगन्धादिविषयोपलब्धिवत्करणसाध्यत्वादान्तरं करणं[10] मनोऽनुमीयते, तत्सर्वविषयं तच्चाणु वेगवदाशुसंचारि नित्यं

फल, दुःख तथा मोक्ष ये बारह प्रमेय हैं।" इनमें शरीरसे लेकर दुःख पर्यन्त दश प्रमेय हेय—त्याज्य हैं। अपवर्ग ( जिसके बाद पवर्ग—प फ आदिका कोई अक्षर नहीं हो अर्थात् पवर्गका अन्तिम ही अक्षर-'म' जिसमें प्रयुक्त होता हो ऐसे मोक्षको अपवर्ग कहते हैं।) उपादेय है। आत्मा तो अवस्था विशेषमें हेय भी होता है तथा उपादेय भी। जब आत्मा सुख, दुःख आदिका भोक्ता होता है तब वह हेय है। और जब सुख, दुःख भोगसे रहित होकर निरुपाधि हो जाता है तब उपादेय है। आत्मा इच्छा, द्वेष, प्रयत्न, सुख, दुःख तथा ज्ञानादि गुणोंका आश्रय होता है। चेतनत्व, कर्तृत्व, सर्वगतत्व आदि धर्मोंसे आत्माकी प्रतीति होती है। ( आत्मा सर्वगत है अतः जिन नियत प्रदेशोंमें आत्माको सुख, दुःखका उपभोग होता है उन नियत प्रदेशोंका अवच्छेदक तथा ) आत्माके भोगका आयतन शरीर होता है। घ्राण—नाक, रसना—जीभ, चक्षु, त्वक्—स्पर्शन तथा श्रोत्र ये पाँच भोगके साधनभूत इन्द्रियाँ हैं। रूप, रस, गन्ध, स्पर्श तथा शब्द ये पाँच इन्द्रियोंके विषय रूप अर्थ हैं। पृथिवीमें गन्ध, रूप, रस तथा स्पर्श ये चार गुण पाये जाते हैं। जलमें रूप, रस तथा स्पर्श ये तीन, तेज—अग्निमें रूप और स्पर्श ये दो तथा वायुमें केवल स्पर्श गुण ही पाया जाता है। शब्द आकाशका गुण है। बुद्धि-उपलब्धि ज्ञान ये सब एकार्थक हैं। बुद्धि क्षणिक होती है। भोगरूप होनेसे संसारका कारण है अतः हेय है। मन सभी पदार्थोंको विषय करनेवाला है, अणुरूप है, वेगवाला होनेसे बहुत शीघ्र संचार करनेवाला है तथा नित्य है। सभी

१. "तत्र देहादिदुःखान्तं हेयमेव व्यवस्थितम्। उपादेयोऽपवर्गस्तु द्विधावस्थितिरात्मनः॥ सुखदुःखादिभोक्तृत्वस्वभावो हेय एव सः। उपादेयस्तु भोगादिव्यवहारपराङ्मुखः॥" —न्यायम. प्रमे. पृ. २। २. –भोक्तुतया आ.। ३. "तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभवी।"—न्यायभा. १।१।९। "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।—न्यायसू. १।१।१०। ४. "चेष्टेन्द्रियार्थाश्रयः शरीरम्।" —न्यायसू. १।१।११। "तस्य भोगायतनं शरीरम्।" —न्यायभा. १।१।९। ५. "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः।"—न्यायसू. १।१।१२। "भोगसाधनानि इन्द्रियाणि।" —न्यायभा. १।१।९। ६. "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः।" —न्यायसू. १।१।१४। "भोक्तव्या इन्द्रियार्थाः।" —न्यायभा. १।१।१। ७. "गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः॥" "अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः॥" —न्यायसू. ३।१।६१, ६२। 'चतुर्गुणा पृथिवी' 'त्रिगुणा आपः' 'द्विगुणं तेजः' 'एकगुणो वायुः' इति, नियमश्चोपपद्यते।"—न्यायभा. ३।१।६५। ८. "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्।" —न्यायसू. १।१।१५। "भोगो बुद्धिः।" —न्यायभा. १।१।९। न्यायक. पृ. ७। ९. "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्।"—न्यायसू. १।१।१६। १०. "सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः।"—न्यायभा. १।१।९।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

षे ६। वाग्मनःकायव्यापारः शुभाशुभफलः प्रवृत्तिः[2] ७। रागद्वेषमोहास्त्रयो दोषाः[3], ईर्ष्यादीनामेतेष्वेवान्तर्भावः, तत्कृतश्चैष संसारः ८। देहेन्द्रियादिसंघातस्य प्राक्तनस्य त्यागेन संघातान्तरग्रहणं प्रेत्यभावः[4], एष एव संसारः ९। [5]प्रवृत्तिदोषजनितं सुखदुःखात्मकं मुख्यं फलं, तत्साधनं तु गौणम् १०। पीडासंतापस्वभावजं दुःखम्, [6]फलग्रहणेनाक्षिप्तमपीदं सुखस्यापि दुःखाविनाभावित्वात् दुःखत्वभावनार्थमुपदिश्यते ॥११॥ आत्यन्तिको दुःखवियोगोऽपवर्गः[7]; सर्वगुणवियुक्तस्यात्मनः

---

पदार्थोंके साथ इन्द्रियोंका सन्निकर्ष होनेपर भी युगपत् समस्त रूपादि ज्ञानोंकी उत्पत्ति नहीं होती है अतः ज्ञात होता है कि जिस इन्द्रियसे मनका संयोग है उसी इन्द्रियके द्वारा ज्ञान उत्पन्न होता है अन्यसे नहीं। इस तरह युगपत् ज्ञानोंकी अनुत्पत्तिसे मनका सद्भाव सिद्ध होता है। तथा जैसे गन्धादि बाह्य पदार्थोंकी उपलब्धि करण रूप इन्द्रियोंके बिना नहीं हो सकती उसी प्रकार अन्तरंग सुखादि विषयोंकी उपलब्धिके लिए भी एक करण साधकतमकरण नितान्त अपेक्षणीय है यह करण मन ही हो सकता है। इस प्रकारसे मनका अनुमान किया जाता है। शुभ और अशुभ फलको उत्पन्न करनेवाले वचन मन तथा कायके व्यापार को प्रवृत्ति कहते हैं। राग द्वेष तथा मोह ये तीन दोष हैं। ईर्ष्या आदिका इसी त्रिपुटीमें अन्तर्भाव हो जाता है। इन्हीं दोषोंके द्वारा यह संसार होता है। इस जन्ममें ग्रहण किये गये देह इन्द्रिय आदिके संघातका त्यागकर नवीन देहादिका ग्रहण करना प्रेत्यभाव (प्रेत्य—मरकर, भाव—उत्पत्ति) होना है। जन्मसे जन्मान्तरकी परम्परा ही संसार है। प्रवृत्ति और दोषसे उत्पन्न हुए सुख और दुःख मुख्य फल हैं तथा सुख-दुःखके साधनभूत पदार्थ गौण फल हैं। पीड़ा तथा सन्ताप स्वभावसे उत्पन्न होनेवाला दुःख है। यद्यपि 'फल'के कहनेसे दुःखका कथन हो जाता है फिर भी संसारको दुःखरूप दिखानेके लिए तथा सांसारिक किंचित् सुखलवको दुःखाविनाभावी होनेसे दुःखरूप समझानेके लिए 'दुःख'का पृथक् ग्रहण किया है। तात्पर्य यह कि संसारको दुःखरूप देखने की भावना होनेपर ही संसारमें हेय बुद्धि हो सकती है। दुःखके अत्यन्त नाशको अपवर्ग कहते हैं। अर्थात् आत्यन्तिक नाश होनेपर मौजूद दुःखोंके अभावके साथ ही साथ भविष्यमें दुःखोंकी उत्पत्ति न होना भी विवक्षित है। अपवर्ग अवस्थामें आत्मा अपने बुद्धि आदि सभी विशेष गुणोंसे शून्य होकर शुद्ध आत्मस्वरूपमें स्थित हो जाता है। इस संसारमें सुख और दुःखको पृथक् कर त्याग करना असम्भव है अतः दुःख छोड़नेकी इच्छासे

---

१. "इन्द्रियार्थसंनिकर्षे सत्यपि युगपज्ज्ञानानुत्पादात्...तच्चाणु वेगवदाशुसंचारि नित्यम्...।"—न्यायक. पृ. ७। २. "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति।"—न्यायसू. १।१।१७। न्यायक. पृ. ७। "प्रवर्तनालक्षणा दोषाः।"—न्यायसू. १।१।१८। ३. "रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते। तथा द्विष्टस्तथा मूढ इति, रागद्वेषमोहा इत्युच्यमानो बहुनोक्तं भवति।" न्यायभा. १।१।१८। न्यायक. पृ. ७। ४. "पुनरुत्पत्तिः प्रेत्यभावः।" —न्यायसू. १।१।१९। उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः, उत्पन्नस्य = संबद्धस्य, संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः, पुनरुत्पत्ति = पुनर्देहादिभिः, संबन्धः,...। प्रेत्यभावः = मृत्वा पुनर्जन्म, सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति।" —न्यायभा. १।१।१९। न्यायक. पृ. ७। ५. "प्रवृत्तिदोषजनितोऽर्थः फलम्।"—न्यायसू. १।१।२०। "प्रवृत्तिदोषजनकं सुखदुःखात्मकं मुख्यं फलम्। तत्साधनं तु गौणम्।"—न्यायक. पृ. ७। ६. "बाधनालक्षणं दुःखम्।"—न्यायसू. १।१।२१। ७. "तदत्यन्तविमोक्षोऽपवर्गः।"—न्यायसू. १।१।२२। "जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणम् अपवर्ग इति।" न्यायभा. १।१।१। "आत्यन्तिको दुःखवियोगोऽपवर्गः सर्वगुणवियुक्तस्यात्मनः स्वरूपावस्थानम्। सुखदुःखयोर्विवेकहानस्याशक्यता। दुःखं जिहासुः सुखमपि जह्यात्। तस्मात्परमपुरुषार्थोऽपवर्गः। स च तत्त्वज्ञानादवाप्यते।"—न्यायक. पृ. ८।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्वरूपेणावस्थानम् । सुखदुःखयोर्विवेकेन हानस्याशक्यत्वात् दुःखं जिहासुः सुखमपि जह्यात् । यस्माज्जन्मजरामरणप्रबन्धोच्छेदरूपः परमः पुरुषार्थोऽपवर्गः, स च तत्त्वज्ञानादवाप्यते १२॥२४॥

§ ५९. संशयप्रयोजनयोः स्वरूपं प्राह—

किमेतदिति संदिग्धः प्रत्ययः संशयो[1] मतः ।
प्रवर्तते तदर्थित्वात्तत्तु साध्यं प्रयोजनम्[2] ॥२५॥

§ ६०. व्याख्या—अयं किंशब्दोऽस्ति क्षेपे 'किंसखा योऽभिद्रुह्यति' अस्ति प्रश्ने 'किं ते प्रियं' अस्ति निवारणे 'किं ते रुदितेन' अस्त्यपलापे 'किं तेऽहं धारयामि' अस्त्यनुनये 'किं[3] तेऽहं प्रियं करोमि' अस्त्यवज्ञाने 'कस्त्वामुल्लापयते' अस्ति वितर्के 'किमिदं दूरे दृश्यते', इह तु वितर्के दूरावलोकनेन पदार्थसामान्यमवबुध्यमानस्तद्विशेषं संदिहानो वितर्कयति, एतत् प्रत्यक्षमूर्ध्वस्थितं वस्तु किं [4]तर्के स्थाणुर्वा पुरुषो वेति । यः संदिग्धोऽनेककोटिपरामर्शी प्रत्ययो विमर्शः, स संशयो मतः संमत इति ।

§ ६१. अथ प्रयोजनम्, यदर्थित्वाद्यस्य[5] फलस्यार्थित्वमभिलाषुकत्वे यदर्थित्वं, तस्मात्प्रवर्तते [6]तत्तदीप्रसाधनेषु यत्नं कुरुते, तत्तु तत्पुनः साध्यं कर्तव्यतयेष्टं प्रयोजनं फलं यस्य वाञ्छया कृत्येषु

दुःखमिश्रित सुखको भी छोड़ना ही पड़ता है। जैसे विष छोड़नेकी इच्छासे विषमिश्रित अन्नको भी छोड़ना ही पड़ता है। जन्म, जरा तथा मरणकी अविच्छिन्न परम्परा का नाम ही संसार है और इस संसारका उच्छेद करना परमपुरुषार्थ है, यही अपवर्ग है। इस अपवर्गकी प्राप्ति तत्त्वज्ञानसे होती है ॥२४॥

§ ५९, अब संशय और प्रयोजनका स्वरूप कहते हैं—

**'यह क्या है' इस प्रकारके सन्दिग्ध प्रत्ययको संशय कहते हैं। जिसकी प्राप्तिके लिए मनुष्य प्रवृत्ति करता है उस साध्य अर्थको प्रयोजन कहते हैं ॥२५॥**

§ ६०, किं शब्दके अनेक अर्थ होते हैं। यथा, किं शब्द अधिक्षेप—तिरस्कार अर्थमें प्रयुक्त होता है—'वह क्या मित्र है जो द्रोह करता है?' प्रश्न अर्थमें प्रयुक्त होनेवाला किं शब्द, जैसे 'आपको क्या प्रिय है?' निवारण—रोकने रूप अर्थमें भी किं शब्दका प्रयोग देखा जाता है, जैसे 'तुम्हारे रोनेसे क्या लाभ है? अर्थात् मत रोओ।' कहीं अपलाप अर्थमें भी किं शब्द प्रयुक्त होता है, जैसे 'क्या मैं तेरा देनदार हूँ?' अनुनयार्थक भी किं शब्द होता है, जैसे 'मैं आपकी क्या सेवा करूँ?' अवज्ञानार्थक भी किं शब्द है, जैसे 'कौन तुझे बुलाता है?' वितर्क अर्थमें भी किं शब्दका प्रयोग होता है—'यह दूर क्या दिखाई देता है?' प्रस्तुत प्रकरणमें किं शब्द वितर्कार्थक है। दूरसे पदार्थ सामान्यको देखकर विशेषांशका प्रत्यक्ष न होनेके कारण सन्देहसे वितर्क करता है कि—'यह जो सामने ऊँची वस्तु दिखाई देती है वह स्थाणु—ठूँठ है अथवा पुरुष?' तात्पर्य यह कि—अनेक कोटियोंमें झूलनेवाले चलित प्रतिपत्ति रूप सन्दिग्ध प्रत्ययको संशय कहते हैं। वि अर्थात् विरुद्ध कोटियोंमें झूलनेवाले, मर्श अर्थात् ज्ञानको विमर्श-संशय कहते हैं।

§ ६१. जिस फलको प्राप्त करनेकी अभिलाषासे उसकी प्राप्तिके कारणोंको जुटानेके लिए यत्न किया जाता है वह कर्तव्य रूपसे इष्ट साध्य वस्तु प्रयोजन फल कहलाती है। जिसकी वांछा-

१. "विशेषस्मृतिहेतोर्धर्मस्य ग्रहणाद् विशेषस्मृतेश्च जायमानः किंस्वित् इति विमर्शः संशयः।"—न्यायक. पृ. ८। २. "यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्।"—न्यायसू. १।१।२४। ३. तेऽहं करो – प. १, २, भ. १, २। ४. वितर्के प. १, २, भ. १, २। ५. -स्य सकलस्या – भ. २। ६. यत्तदी– भ. २।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

**प्रवर्तते तत्प्रयोजनमित्यर्थः। प्रयोजनमूलत्वाच्च प्रमाणोपन्यासप्रवृत्तेः प्रमेयान्तर्भूतमपि प्रयोजनं पृथगुपदिश्यते ॥२५॥**

§ ६२. अथ दृष्टान्तसिद्धान्तौ व्याचिख्यासुराह—

[1]दृष्टान्तस्तु भवेदेष विवादविषयो न यः।
[2]सिद्धान्तस्तु चतुर्भेदः [3]सर्वतन्त्रादिभेदतः ॥२६॥

§ ६३. व्याख्या—दृष्टोऽन्तो निश्चयोऽत्रेति दृष्टान्तः, दृष्टान्तः पुनरेषोऽयं भवेत्। एष क इत्याह—य उपन्यस्तः सन् विवादविषयो वादिप्रतिवादिनोर्मिथो विरुद्धो वादो विवादः, तस्य विषयो गोचरो न भवति, वादिप्रतिवादिनोरुभयोः संमत एवानुमानादौ दृष्टान्त उपन्यस्तव्य इत्यर्थः। पञ्चस्ववयवेषु वक्ष्यमाणोऽपि दृष्टान्तः साध्यसाधनधर्मयोः प्रतिबन्धग्रहणस्थानमिति पृथगिहोपदिश्यते। तावदेव ह्यन्वयव्यतिरेकयुक्तोऽर्थः स्खलति, याव[4]न्न स्पष्टदृष्टान्तावष्टम्भः। उक्तं च—"तावदेव चलत्यर्थो[5] मन्तुर्विषयमागतः। [6]यावन्नोत्तम्भनेनैव दृष्टान्तेनाव[7]लम्ब्यते ॥१॥"

§ ६४. 'सिद्धान्तस्तु' सिद्धान्तः पुनश्चतुर्भेदो भवेत्। कुत इत्याह—सर्वतन्त्रादिभेदतः सर्वतन्त्रादिभेदेन। प्रथमः सर्वतन्त्रसिद्धान्तः, आदिशब्दात्प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगम-

---

से करणीय अर्थमें प्रवृत्ति की जाती है उसका नाम प्रयोजन है। यद्यपि इसका प्रमेयमें अन्तर्भाव हो जाता है फिर भी प्रमाण आदिका कथन तथा प्रवृत्ति प्रयोजन मूलक होती है अतः प्रमेयसे इसका पृथक् निर्देश किया गया है ॥२५॥

§ ६२. अब दृष्टान्त और सिद्धान्तका स्वरूप कहते हैं—

**जिसमें किसीको विवाद न हो ऐसा सबकी सम्प्रतिपत्तिका विषयभूत अर्थ दृष्टान्त होता है। सर्वतन्त्र आदिके भेदसे सिद्धान्त चार प्रकारका है ॥२६॥**

§ ६३. दृष्ट अर्थात् देखा गया है अन्त अर्थात् निश्चय जहाँ उसे दृष्टान्त कहते हैं। जिसके कहनेपर वादी तथा प्रतिवादी किसीको भी विवाद अर्थात् विरुद्धवाद न हो, जो दोनोंको समानरूपसे सम्मत हो वह प्रसिद्ध निर्विवाद पदार्थ दृष्टान्त है। अनुमान आदिमें ऐसे ही दृष्टान्तका कथन करना चाहिए। यद्यपि आगे कहे जानेवाले पंचावयवोंमें दृष्टान्त अन्तर्भूत है फिर भी दृष्टान्त साध्य और साधनके प्रतिबन्ध—अविनाभाव सम्बन्धके ग्रहण करनेका स्थान है इसलिए उसका पृथक् निर्देश किया गया है। अन्वय व्याप्ति या व्यतिरेक व्याप्तिमें तभी तक शंका रहती है जबतक कि स्पष्ट रूपसे प्रसिद्ध दृष्टान्तका उपन्यास नहीं किया जाता। कहा भी है—

"विचारक बुद्धिमें आया हुआ पदार्थ तभी तक चलायमान—सन्दिग्ध रहता है जब तक उसे दृष्टान्तरूपी साधनेवाले स्तम्भका सहारा नहीं मिलता।"

§ ६४. 'यह ऐसा ही है' इस रूपसे निश्चित अर्थको सिद्धान्त कहते हैं। सिद्धान्त सर्वतन्त्र आदिके भेदसे चार प्रकारका माना जाता है। १. सर्वतन्त्र सिद्धान्त, २. प्रतितन्त्र सिद्धान्त, ३. अधिकरण सिद्धान्त, ४. अभ्युपगम सिद्धान्त। तन्त्रका अर्थ शास्त्र है। अपने शास्त्रमें माने गये

---

१. लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त।" —न्यायसू. १।१।२५। २. "अयमेवमिति प्रमाणमूलाभ्युपगमः विषयीकृतः सामान्यविशेषवानर्थः सिद्धान्तः।"—न्यायक. पृ. ९। ३. "सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्।" —न्यायसू. १।१।२७। ४. –न्नास्य दृष्टान्तोऽवष्ट– भ. २। ५. –त्यर्थमन्तर्विष–भ. २। ६. यावतोत्तम्भनेनैव भ. २। ७. –वलंवति– भ. २। ८. –पगतश्च भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सिद्धान्तश्च वेदितव्यः। इह तन्त्रशब्देन शास्त्रं विज्ञेयम्[1]। तत्र[2] सर्वतन्त्राविरुद्धः स्वतन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः सर्वेषां शास्त्राणां संप्रतिपत्तिविषयः, यथा प्रमाणानि प्रमेयसाधनानि, घ्राणादीनीन्द्रियाणि, गन्धादयस्तदर्थाः, प्रमाणेन प्रमेयस्य परिच्छेद इत्यादि।[3] समानतन्त्रप्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः यथा भौतिकानीन्द्रियाणि योगानां[4] काणादादीनां च, अभौतिकानि सांख्यानाम्। तथा सांख्यानां[5] सर्वं सदेवोत्पद्यते न पुनरसत्, नैयायिकादीनां सर्वमसदेवोत्पद्यते सामग्रीवशात्, जैनानां तु सदसदुत्पद्यत इत्यादि। यस्य[6] सिद्धावन्यस्य[7] प्रक्रियमाणस्य प्रतिज्ञार्थस्य प्रसङ्गेनाधिकस्य सिद्धिः, सोऽधिकरणसिद्धान्तः,[8] यथा कार्यत्वादेः क्षित्यादौ बुद्धिमत्कारणसामान्यसिद्धावन्यस्य तत्कारणसमर्थस्य नित्यज्ञानेच्छाप्रयत्नाधारस्य तत्कारणस्य सिद्धिरिति। प्रौढवादिभिः स्वे-

ऐसे अर्थ, जो सभी दर्शनोंके शास्त्रोंमें साधारण रूपसे स्वीकृत हों वे सर्वतन्त्र सिद्धान्त हैं। तात्पर्य यह कि जिनके माननेमें किसीको भी विवाद न हो, जैसे प्रमाणोंसे प्रमेयकी सिद्धि होती है, प्राण आदि इन्द्रियाँ हैं; गन्ध आदि इन्द्रियोंके अर्थ हैं, प्रमाणसे प्रमेयका परिच्छेद होता है। इत्यादि। जो पदार्थ समान-शास्त्रोंमें स्वीकृत हो तथा परशास्त्रोंमें असिद्ध हो उसे प्रतितन्त्र सिद्धान्त अर्थात् अपने-अपने शास्त्रमें स्वीकृत पदार्थ कहते हैं। जैसे 'इन्द्रियाँ पृथिव्यादि भूतोंसे उत्पन्न हैं, भौतिक हैं' यह नैयायिक तथा वैशेषिकोंका सिद्धान्त है। 'इन्द्रियाँ भौतिक नहीं हैं किन्तु आहंकारिक हैं' यह सांख्योंका सिद्धान्त है। सांख्योंका सिद्धान्त है कि—कारणमें कार्यका सद्भाव रहता है अतः कारणमें सत् कार्य की उत्पत्ति होती है। नैयायिकादि कारणमें कार्यका सद्भाव नहीं मानते। इनके मतसे सामग्री मिलनेपर कारणमें असत् कार्यकी उत्पत्ति होती है। जैन लोग कारणमें कार्यको द्रव्यरूपसे सत् तथा पर्यायरूपसे असत् मानते हैं। इनके मतसे कारणमें कथंचित् सदसत् कार्यकी उत्पत्ति होती है। इत्यादि तत्तत् शास्त्रोंके अपने-अपने सिद्धान्त प्रतितन्त्र सिद्धान्त कहे जाते हैं। जिस एक सिद्धान्तकी सिद्धि होनेपर प्रसंगसे तत्सम्बन्धी अन्य पदार्थोंकी सिद्धि हो जाय उसे अधिकरण-सिद्धान्त—अन्य सिद्धान्तोंकी सिद्धिका आधारभूत सिद्धान्त कहते हैं। जैसे कार्यत्व हेतुसे पृथिवी आदिको सामान्य रूपसे ईश्वरकर्तृक सिद्ध होनेपर उस ईश्वरमें नित्य ज्ञान, नित्य इच्छा तथा नित्य प्रयत्नकी सिद्धि होना अधिकरण सिद्धान्त है। क्योंकि ईश्वरमें नित्यज्ञान आदि माने बिना पृथिव्यादि कार्योंके उत्पन्न करनेकी सामर्थ्य ही सिद्ध नहीं हो सकती। तात्पर्य यह कि जिस मूल सिद्धान्तके सिद्ध होनेपर तदविनाभावी अन्य छोटे-मोटे अनेक सिद्धान्त फलित हो जाते हैं—अपने ही आप सिद्ध घोषित हो जाते हैं—उसे अधिकरण सिद्धान्त कहते हैं। प्रौढ़वादी अपनी बुद्धि

१. –यं सर्व –भ. २। २. "सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः। ॥२८॥ यथा घ्राणादीनीन्द्रियाणि। गन्धादय इन्द्रियार्थाः। पृथिव्यादीनि भूतानि। प्रमाणैरर्थस्य ग्रहणमिति।" न्यायभा. १।१।२८। ३. "समानतन्त्रासिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः। ॥२९॥ यथा—नाऽसत आत्मलाभः। न सत आत्महानम्। निरतिशयाश्चेतनाः। देहेन्द्रियमनस्सु विषयेषु तत्कारणे च विशेष इति सांख्यानाम्। पुरुषकर्मादिनिमित्तो भूतसर्गः। कर्महेतवो दोषाः प्रवृत्तिश्च। स्वगुणविशिष्टाश्चेतनाः। असदुत्पद्यते उत्पन्नं विरुध्यते इति योगानाम्॥" —न्यायभा. १।१।२९। ४. काणादीनां च, प. १, २। काणादानां च भ. १, २। ५. –नां सदेव प. १, २। ६. सिद्धान्तस्य प्र–आ.। ७. प्रतिक्रिय – भ. २। ८. "यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥३०॥ यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते=न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधिष्ठानाः सोऽधिकरणसिद्धान्तः यथा—देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिभिः, अत्रानुषङ्गिणोऽर्थाः—इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि। गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्। अनियतविषयाश्चेतना इति, पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति। न तैर्विना सोऽर्थः संभवतीति॥"—न्यायभा. १।१।३०। ९. स्वध्यति–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

बुद्धयतिशयचिख्यापयिषया यत्किंचिद्वस्त्वपरीक्षितमभ्युपगम्य विशेषः परीक्ष्यते, सोऽभ्युपगमसिद्धान्तः, [1]यथास्तु द्रव्यं शब्दः, स तु किं नित्योऽनित्यो वेति शब्दस्य द्रव्यत्वमनिष्टमभ्युपगम्य नित्यानित्यत्वविशेषः परीक्ष्यते एवं चतुर्विधः सिद्धान्तः ॥२६॥

§ ६५. अवयवादितत्त्व[2]त्रयस्वरूपं प्ररूपयति ।

प्रतिज्ञाहेतुदृष्टान्तोपनया निगमस्तथा ।
अवयवाः पञ्च तर्कः संदेहोपरमे भवेत् ॥२७॥
यथा काकादिसंपातात्स्थाणुना भाव्यमत्र हि ।
ऊर्ध्वं संदेहतर्काभ्यां प्रत्ययो निर्णयो मतः ॥२८॥युग्मम्॥

§ ६६. व्याख्या—[3]अवयवाः पञ्च, के पञ्चेत्याह प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमशब्देन निगमनं चेति । तत्र प्रतिज्ञा[4] पक्षः धर्मधर्मिवचनं, कृशानुमानयं सानुमानित्यादि । [5]हेतुः साधनं [6]लिङ्गवचनं, धूमवत्त्वादित्यादि । [7]दृष्टान्त उदाहरणाभिधानं, तद्द्विविधं, [8]अन्वयमुखेन व्यतिरेकमुखेन च[9] । अन्वयमुखेन यथा, यो यो धूमवान्, स स कृशानुमान्, यथा महानसमित्यादि । व्यति-

का अतिशय-चमत्कार दिखानेकी इच्छासे जिस किसी पदार्थको परीक्षा किये बिना ही तुष्यतु दुर्जन न्यायसे स्वीकारके विशेषांशकी परीक्षा करते हैं उसे अभ्युपगम सिद्धान्त कहते हैं। जैसे—'अच्छा शब्द द्रव्य ही सही, पर वह नित्य है कि अनित्य ?' इस तरह शब्दमें द्रव्यत्वको, जो कि उसे इष्ट नहीं है, परीक्षाके बिना ही स्वीकार करके वह शब्दके नित्यत्व और अनित्यत्व रूप विशेषांशोंकी परीक्षामें प्रवृत्त होता है। इस तरह सिद्धान्त चार प्रकारका होता है ॥२६॥

§ ६५. अब अवयव, तर्क तथा निर्णय इन तीन तत्त्वोंका निरूपण करते हैं—

**प्रतिज्ञा, हेतु, दृष्टान्त, उपनय और निगमन ये पाँच अवयव हैं। सन्देहका नाश होनेपर तर्क होता है। जैसे कौआ आदिका सन्निधान देखकर 'इसे स्थाणु—ठूँठ होना चाहिए' यह भवितव्यता प्रत्यय है। सन्देह तथा तर्कके अनन्तर जो निश्चय होता है उसे निर्णय कहते हैं ॥२७-२८॥ युग्म।**

§ ६६. प्रतिज्ञा, हेतु, दृष्टान्त, उपनय तथा निगम—निगमन ये पाँच अवयव हैं। प्रतिज्ञा-पक्ष, धर्म और धर्मीके समुदायके कथनको प्रतिज्ञा कहते हैं, जैसे 'यह पर्वत अग्निवाला है'। हेतु-साधन, लिंगके वचनका नाम हेतु है, जैसे 'धूमवाला होनेसे या धूम होनेसे।' उदाहरण रूप कथनको दृष्टान्त कहते हैं। उदाहरणका कथन अन्वय रूपसे तथा व्यतिरेक रूपसे दो प्रकारका होता है। 'जो-जो धूमवाला है वह वह अग्निवाला है जैसे रसोई घर' यह अन्वयमुख कथन है। 'जो अग्नि-

१. "अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । ३१ । यत्र किंचिदर्थजातमपरीक्षितमभ्युपगम्यते—अस्तु द्रव्यं शब्दः स तु नित्यो अथानित्यः । इति द्रव्यस्य सतो नित्यतानित्यता वा तद्विशेषः परीक्ष्यते सोऽभ्युपगमसिद्धान्तः, स्वबुद्धचतिशयविख्यापयिषया परबुद्धचवज्ञानाय प्रवर्तते इति ।" —न्यायभा. १।१।३१ । २. तत्त्वत्रयं प्र– क. । तत्त्वत्रयरूपं प्र.–प. १, २, भ. १, २ । ३. "प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ।" —न्यायसू. १।१।३२ । ४. "साध्यनिर्देशः प्रतिज्ञा ।" —न्यायसू. १।१।३३ । "तत्र साध्यधर्मविशिष्टस्य धर्मिणो निर्देशः प्रतिज्ञा । यथा नित्यः शब्द इति । एष एव पक्ष उच्यते ।" न्यायक. पृ. ९ । ५. "उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ।" —न्यायसू. १।१।३४ । "लिङ्गवचनं हेतुः ।"—न्यायक. पृ. १० । ६. लिङ्गं वह्निर्धूम –भ. २ । ७. "साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ।"—न्यायसू. १।१।३६ । "दृष्टान्तवचनमुदाहरणम् । दृष्टान्तो द्विविधः । ८. साधर्म्येण वैधर्म्येण च ।"—न्यायक. पृ. ११ । ९. च यथा भ. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

रेकमुखेन यथा, यो यः कृशानुमान्न भवति, स स धूमवान्न भवति, यथा जलमित्यादि। [1]उपनयो हेतोरुपसंहारकं वचनम्, धूमवांश्चायमित्यादि। [2]निगमनं हेतूपदेशेन साध्यधर्मोपसंहरणम्, धूमवत्त्वात्कृशानुमानित्यादि।

§ ६७. अथ तर्कतत्त्वम्। 'तर्कः सन्देहोपरमे भवेत्'। सम्यग्वस्तुस्वरूपानवबोधे किमयं स्थाणुर्वा पुरुषो वेति संदेहः संशयस्तस्योपरमे व्यपगमे [3]तर्कोऽन्वयधर्मान्वेषणरूपो भवेत्। कथमित्याह—'यथा काकादीत्यादि' यथेत्युपदर्शने काकादिसंपातात् वायस[4]प्रभृतिपक्षिसंपतनादुपलक्षणत्वान्निश्चलत्ववल्यारोहणादिस्थाणुधर्मेभ्यश्चात्रारण्यप्रदेशे स्थाणुना कीलकेन भाव्यं भवितव्यम्। हिशब्दोऽत्र निश्चयोत्प्रेक्षणार्थो द्रष्टव्यः। संप्रति हि वनेऽत्र मानवस्यासंभवात्स्थाणुधर्माणामेव दर्शनाच्च स्थाणुरेवात्र घटत इति। तदुक्तम्—"आरण्यमेतत्सवितास्तमागतो न चाधुना संभवतीह मानवः। ध्रुवं तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना ॥१॥" [5]इत्येष तर्कः।

§ ६८. अथ निर्णय[6]तत्त्वमाह—'ऊर्ध्वमित्यादि' पूर्वोक्तस्वरूपाभ्यां संदेहतर्काभ्यामूर्ध्वमनन्तरं यः प्रत्ययः स्थाणुरेवायं पुरुष एव वेति प्रतीतिः स निर्णयो[7] निश्चयो मतोऽभीष्टः। यत्त-

---

वाला नहीं है वह धूमवाला भी नहीं जैसे जल' यह व्यतिरेकात्मक कथन है। हेतुका उपसंहार करनेवाले वचन उपनय कहलाते हैं, जैसे 'यह भी धूमवाला है।' हेतुका कथन करनेके अनन्तर साध्य धर्मके उपसंहार—दुहरानेको निगमन कहते हैं, जैसे 'चूँकि यह भी धूमवाला है अतः अग्निवाला है।'

§ ६७. वस्तुके यथार्थ स्वरूपका बोध न होनेसे 'यह स्थाणु—ठूँठ है अथवा पुरुष ?' यह सन्देह होता है। जब यह सन्देह बहुत कुछ शान्त हो जाता है तब ठूँठमें रहनेवाले अन्वयरूप धर्मोंको खोजनेवाले सम्भावनात्मक तर्कका उदय होता है। जैसे—उसपर कौए आदिको बैठा देखकर अर्थात् कौआ चिड़िया आदि पक्षियोंका उसपर बैठना, उसके आस-पास उड़ना, उसका निश्चल—बिना हिले-डुले जैसेका तैसा स्थिर रहना, उसपर लताओंका लिपटना इत्यादि स्थाणुगत धर्मोंको देखकर 'इस जंगलमें ऐसा ठूँठ ही हो सकता है, इसे ठूँठ अवश्य ही होना चाहिए' ऐसा भवितव्यता प्रत्ययरूप तर्क होता है। 'हि' शब्द निश्चयकी ओर झुकनेका संकेत करता है—'इसे अवश्य ही, स्थाणु होना चाहिए'। इस समय इस निर्जन वनमें मनुष्यकी सम्भावना तो है ही नहीं, तथा स्थाणुके धर्म ही इसमें पाये जाते हैं अतः यह स्थाणु ही हो सकता है, यहाँ स्थाणुकी सम्भावना ही अधिक है। कहा भी है—

"यह डरावना जंगल है, सूर्य भी इस समय अस्ताचलपर पहुँच चुका है, अन्धेरा हो चला है, इसलिए यहाँ इस समय मनुष्यकी सम्भावना तो है नहीं। फिर, इसके ऊपर पक्षी आकर निःशंक भावसे बैठे हुए चहक रहे हैं, अतः अवश्य ही इसे स्थाणु—ठूँठ होना चाहिए। यह अवश्य ही स्मराराति कामदेवको भस्म करानेवाले शंकरके समान नामवाला पर्यायवाची स्थाणु है। स्थाणु शंकरका पर्यायवाची है ॥ १ ॥"

§ ६८. पूर्वोक्त सन्देह तथा तर्कके अनन्तर 'यह स्थाणु ही है' अथवा 'यह पुरुष ही है' ऐसा जो एककोटिक निश्चय होता है उस अवधारणात्मक प्रत्ययको निर्णय कहते हैं। कहीं-कहीं यत्

---

१. "उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥" —न्यायसू. १।१।३८।
२. "हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ —न्यायसू. १।१।३९। ३. "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः।"—न्यायसू. १।१।४०। "अविज्ञाततत्त्वे धर्मिणि एकतरपक्षानुकूलार्थदर्शनेन तस्मिन् संभावनाप्रत्ययरूप ऊहस्तर्क उच्यते। यथा वाहकेकिप्रदेशे ऊर्ध्वत्वदर्शनात् पुरुषेणानेन भवितव्यमिति संभावनाप्रत्ययः।" —न्यायक. पृ. १३। ४. सप्रतिपक्षिसं–भ. २। ५. इत्येवं तर्कः भ. २। ६. तर्कमाह भ. २। ७. "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥"—न्यायसू. १।१।४१।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

दावर्थसंबन्धादनुक्तावपि क्वचन गम्येते, तेनात्र तौ व्याख्यातौ। एवमन्यत्रापि मन्तव्यम् ॥२७-२८॥

§ ६९. अथ वादतत्त्वमाह—

आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् ।
या कथाभ्यासहेतुः स्यादसौ वाद[1] उदाहृतः ॥२९॥

§ ७०. व्याख्या—वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः [2]कथा, सा द्विविधा, वीतरागकथा विजिगीषुकथा च। यत्र वीतरागेण गुरुणा सह शिष्यस्तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति, साधनं स्वपक्षे, उपालम्भश्च परपक्षेऽनुमानस्य दूषणं, सा वीतरागकथा वादसंज्ञयैवोच्यते। वादं प्रतिपक्षस्थापनाहीनमपि कुर्यात्। प्रश्नद्वारेणैव यत्र विजीगीषुर्जिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्त्तते, वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते, सा चतुरङ्गा वादिप्रतिवादिसभापतिप्राश्निकाङ्गा विजिगीषुकथा जल्पवितण्डासंज्ञोक्ता[3]। तथा चोक्तम्—"तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे, बीजप्ररोहसंरक्षणार्थं [4]कण्टकशाखावरणवत्।" [ न्यायसू.

---

और तत् सर्वनामका यद्यपि कथन नहीं होता फिर भी उनका प्रकरणसे अन्वय हो जाता है। इसीलिए यहाँ यत् और तत्का अनुगम करके व्याख्यान किया गया है ॥२७-२८॥

§ ६९, अब वाद तत्त्वका कथन करते हैं—

**शास्त्रार्थका अभ्यास करनेके लिए अथवा तत्त्वका अभ्यास करनेके लिए गुरु और शिष्य पक्ष-प्रतिपक्ष लेकर जो कथा—चर्चा—वार्ता करते हैं उसे वाद कहते हैं ॥ २९ ॥**

§ ७०, वादी तथा प्रतिवादीके द्वारा जिसमें पक्ष और प्रतिपक्षका ग्रहण किया जाय उसे कथा कहते हैं। कथा दो प्रकारकी है—१ वीतराग कथा, २ विजिगीषु कथा। जब वीतराग अर्थात् जय-पराजयकी इच्छा न रखनेवाले गुरुके साथ तत्त्व-निर्णयके लिए शिष्य अपने पक्षका साधन तथा प्रतिपक्षका उपालम्भ—खण्डन करता है तब वह वचनव्यापार वीतराग कथा कहलाता है। इस वीतराग कथाका ही नाम वाद है। इस वादमें प्रतिपक्षका स्थापन कोई आवश्यक नहीं है। एक ही पक्षमें शंका-समाधान करके तत्त्व-निर्णय किया जा सकता है। जहाँ एक जिगीषु—जयकी इच्छा रखनेवाला—दूसरे विजिगीषु—विशेषरूपसे सवागुनी जीतनेकी इच्छा रखनेवालेके साथ कोई शर्त लगाकर अर्थलाभके लिए अथवा ख्यातिकी इच्छासे जय-पराजयके लिए शास्त्रार्थ करता है;—वह विजिगीषु कथा है। एक वीतराग व्यक्ति भी किसी वैतण्डिकके साथ तत्त्व-ज्ञानरूपी अंकुरके संरक्षणके लिए तथा परोपकारार्थ विजिगीषु कथामें प्रवृत्त होता है। इस विजिगीषु कथा में वादी, प्रतिवादी, सभापति तथा प्राश्निक ये चार अंग होते हैं। अतः यह चतुरंगवादके नामसे ख्यात है। इसी विजिगीषु कथाको जल्प और वितण्डा भी कहते हैं। कहा भी है—

"जैसे कि छोटे अंकुरोंकी रक्षाके लिए काँटोंकी बारी लगायी जाती है, उसी तरह तत्त्वज्ञानकी सम्यक् प्रकारसे रक्षा करनेके लिए जल्प और वितण्डा नामक कथाएँ होती हैं।" यथोक्तोपपन्न-

---

१. "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥" —न्यायसू. १।२।१। २. "वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा। सा द्विविधा—वीतरागकथा विजिगीषुकथा चेति। यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति सा वीतरागकथा वादसंज्ञयोच्यते। तं प्रतिपक्षहीनमपि वा कुर्य्यात् प्रयोजनार्थित्वेन। यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेति।" —न्यायसा. पृ. १५। ३. "विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्त्तते सा विजिगीषुकथा। वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्त्तते सा चतुरङ्गा। वादिप्रतिवादिसभापतिप्राश्निकाङ्गा। विजिगीषुकथा जल्पवितण्डासंज्ञोक्ता।" —न्यायसा. पृ. १६। ४. 'कण्टकशाखापरिचरणवत् इति प्रत्यन्तरे'—आ. टि.। कण्टकशाखापरिचरणवत् क., प. १, २, भ. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

४।२।५० ] इति। "यथोक्तलक्षणोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रतिपक्षस्थापनाहीनो वितण्डा।" [ न्यायसू. १।२।२, ३ ] इति। **वादजल्पवितण्डानां व्यक्तिः।**

**§ ७१. अथ प्रकृतं प्रस्तुमः आचार्योऽध्यापको गुरुः, शिष्योऽध्येता विनेयः, तयोराचार्यशिष्ययोः 'पक्षप्रतिपक्षपरिग्रहात्' पक्षः पूर्वपक्षः प्रतिज्ञाविसंग्रहः, प्रतिपक्ष उत्तरपक्षः पूर्वपक्षप्रतिपन्थी पक्ष इत्यर्थः, तयोः परिग्रहात्स्वीकारात् अभ्यासस्य हेतुरभ्यासकारणम् या कथा प्रामाणिकी वार्ता असौ कथा वाद उदाहृतः कीर्तितः। आचार्यः पूर्वपक्षं स्वीकृत्याचष्टे शिष्यश्चोत्तरपक्षमुररीकृत्य पूर्वपक्षं खण्डयति। एवं पक्षप्रतिपक्षसंग्रहेण निग्राहकसभापतिजयपराजयच्छलजात्याद्यनपेक्षतयाभ्यासार्थं यत्र गुरुशिष्यौ गोष्ठीं कुरुतः, स वादो विज्ञेयः ॥२९॥**

§ ७२. अथ जल्पवितण्डे विवृणोति—

**विजिगीषुकथा[1] या तु छलजात्यादिदूषणा।**
**स जल्पः[2] सा वितण्डा तु या प्रतिपक्षवर्जिता ॥३०॥**

---

वादके लक्षणमें कहे गये 'प्रमाण और तर्कसे साधन और दूषण होता है, सिद्धान्तसे अविरुद्ध, पंचावयवसे युक्त, तथा पक्ष और प्रतिपक्षका जिसमें परिग्रह किया जाता है' इन विशेषणोंसे जो सहित हो, तथा जिसमें छल, जाति और निग्रहस्थान जैसे असदुपायोंसे भी स्वपक्षसाधन तथा परपक्ष दूषण किया जाता हो उसे जल्प कहते हैं। जिस जल्पमें प्रतिपक्ष—( प्रतिवादीके पक्षकी अपेक्षा वादीका पक्ष प्रतिपक्ष— ) अर्थात् अपने पक्षका स्थापन न करके केवल प्रतिवादीका खण्डन ही खण्डन किया जाता है, उस जल्पको वितण्डा कहते हैं। यह वाद, जल्प तथा वितण्डाका स्पष्ट स्वरूप है।

§ ७१. अब प्रकृत श्लोकका व्याख्यान करते हैं—आचार्य—अध्यापक गुरु, शिष्य—अध्ययन करनेवाला विनीत विद्यार्थी, ये दोनों जब पक्ष अर्थात् पूर्वपक्ष जिसमें अपने सिद्धान्तके स्थापनकी प्रतिज्ञा आदि होती है, और प्रतिपक्ष अर्थात् उत्तरपक्ष, पूर्वपक्षका खण्डन करनेवाला पक्ष, को स्वीकार करके अभ्यास करनेके लिए जो कथा–प्रामाणिक चर्चा करते हैं, वह कथा वाद कही जाती है। आचार्य किसी पूर्वपक्षको लेकर उसका स्थापन करता है, शिष्य उत्तरपक्ष लेकर अपनी तर्कशक्तिको बढ़ानेके लिए अपनी समझके अनुसार उसका खण्डन करता है। इस तरह गुरु और शिष्य पक्ष और प्रतिपक्ष रूपसे अभ्यास करनेके लिए जो गोष्ठी–तत्त्व चर्चा करते हैं वह वाद है। इस तत्त्वचर्चामें जय-पराजयकी व्यवस्था देनेवाले सभापतिकी, येन केन प्रकारेण जय-पराजय प्राप्तिके उपायभूत छल, जाति आदि असत्प्रयोगोंकी तथा जय और पराजयकी कोई अपेक्षा नहीं होती है। यह तो गुरु-शिष्यकी तत्त्वज्ञानगोष्ठी है ॥२९॥

§ ७२. अब जल्प और वितण्डाका व्याख्यान करते हैं—

**जिसमें छल, जाति आदिसे परपक्षमें दूषण दिये जाते हों वह विजिगीषुकथा जल्प है। जिस जल्पमें वादी अपना पक्ष स्थापित न कर केवल परपक्षमें दूषण ही दूषण देता है वह वितण्डा है ॥३०॥**

---

१. –कथायां तु छलजात्यादिदूषणाभ्यासः स भ. २। २. "स एव पक्षप्रतिपक्षपरिग्रहो विजिगीषया प्रयुक्तः छलजातिनिग्रहस्थानप्रयोगबहुलो जल्पः। स्वपक्षसाधनोपन्यासहीनो जल्प एव वितण्डा भवति।" —न्यायभा. पृ. १३।

Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

**§ ७३. व्याख्या–या तु या पुनर्विजिगीषुकथा विजयाभिलाषिभ्यां वादिप्रतिवादिभ्यां प्रारब्धा प्रमाणगोष्ठी, कथंभूता, छलानि जातयश्च वक्ष्यमाणलक्षणानि, आदिशब्दान्निग्रहस्थानादिपरिग्रहः, एतैः कृत्वा दूषणं परोपन्यस्तपक्षादेर्दोषोत्पादनं यस्यां सा छलजात्यादिदूषणा, स विजिगीषुकथारूपो जल्पः। 'उदाहृत' इति पूर्वश्लोकात्संबन्धनीयम्।**

**§ ७४. ननु छलजात्यादिभिः परपक्षादेर्दूषणोत्पादनं सतां कर्तुं न युक्तमिति चेत्, न। सन्मार्गप्रतिपत्तिनिमित्तं तस्याप्यनुज्ञातत्वात्[1]। अनुज्ञातं हि स्वपक्षस्थापनेन सन्मार्गप्रतिपत्तिनिमित्ततया छलजात्याद्युपन्यासैरपि परप्रयोगस्य दूषणोत्पादनम्। तथा चोक्तम्—**

"दुःशिक्षितकुतर्कांशलेशवाचालिताननाः।
शक्याः किमन्यथा जेतुं वितण्डाटोपमण्डिताः[2] ॥१॥
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः।
[3]मार्गादिति छलादीनि प्राह कारुणिको मुनिः ॥२॥" [ न्यायम, प्रमा. पृ. ११ ]

**इति। संकटे प्रस्तावे च[4] सति छलादिभिरपि स्वपक्षस्थापनमनुमतम्। [5]परविजये हि धर्मध्वंसादिदोषसंभवः, तस्माद्वरं छलादिभिरपि जयः।**

---

§ ७३. जो कथा विजयके अभिलाषी वादी तथा प्रतिवादी द्वारा प्रारम्भ की जाती है, तथा जिसमें छल, जाति और निग्रहस्थान जैसे असदुपायोंसे प्रतिपक्षमें दूषणोंका उद्भावन किया जाता हो वह प्रमाण गोष्ठी जल्प कही जाती है। इस श्लोकमें 'उदाहृतः' क्रियाका पूर्व श्लोकसे अनुवर्तन कर लेना चाहिए।

§ ७४. शंका—सभ्य सत्पुरुषोंको छल, जाति तथा निग्रहस्थान जैसे असदुत्तरोंसे परपक्षमें दूषण देना तो किसी भी तरह उचित नहीं मालूम होता।

उत्तर—आपका कहना ठीक है, परन्तु सन्मार्गकी प्रतिपत्ति या रक्षा करनेके लिए छल आदिका भी अपवाद रूपसे आश्रय करना ही पड़ता है। स्वपक्षके स्थापनके द्वारा सन्मार्गकी प्रतिपत्तिके लिए छल, जाति आदिका प्रयोग करके भी परपक्षका खण्डन करनेकी शास्त्रकारोंने अनुज्ञा दी है। कहा भी है—

"दुरभिप्रायसे सीखे गये छोटे-मोटे कुतर्कोंके बलपर अत्यन्त बकवाद करनेवाले, अथवा दुःशिक्षित होनेके कारण कुतर्कजालकी कल्पना करके जो अत्यन्त बकवास करते हैं, तथा जो वितण्डा—निरर्थक वाग्जालके द्वारा परपक्षको फटाटोपसे धूर्ततापूर्वक खण्डन करनेमें कुशल हैं, क्या ऐसे वाचाल कुवादी 'शठे शाठ्यम्' वाली नीतिके बिना भी जीते जा सकते हैं? इनके जीतनेके लिए तो छलादि उपायोंका आलम्बन करना ही पड़ेगा। यदि इन वाचाट कुवादियोंसे सन्मार्गकी रक्षा न की जायेगी; तब लोकमें धर्मकी हँसी होगी। जनता तो गतानुगतिक होती है उसमें विवेक कम होता है, वह तो प्रवादका ही अनुसरण करती है। अतः 'मूढ़ जनता कुवादियोंकी वाचालतासे बहककर कुमार्गपर न जावे' इसी सन्मार्ग रक्षणके उद्देश्यसे दयालु मुनिने छल आदि उपायोंका भी उपदेश दिया है" ॥१–२॥ इस तरह संकटके समय तथा प्रतिवादीके द्वारा शास्त्रार्थका प्रस्ताव उपस्थित किये जाने पर छल आदिके द्वारा भी परपक्षका खण्डन कर स्वपक्ष स्थापनकी अनुमति है। यदि प्रतिवादी अपनी वाचाटताके कारण जीत जाता है, तब धर्मका नाश एवं सन्मार्गका अपवाद आदि अवश्यम्भावी है अतः यह उचित है कि छल आदिसे भी प्रतिवादीको जीतकर धर्मको अपवादसे बचाकर सन्मार्गकी संरक्षा की जाय।

---

१. "मुमुक्षुरपि क्वचित्प्रसङ्गे तदुपयोगात्।" —न्यायम. प्रमे. पृ. १५२। २. –पपंडिताः भ. २। ३. मार्गादि आ., क.। ४. च प्रतिछलादि भ. २। ५. हि न धर्म–आ., क., प. १, २, भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ७५. 'सा वितण्डा त्वित्यादि' तुशब्दोऽवधारणार्थो भिन्नक्रमश्च । सा तु सैव विजिगीषुकथैव प्रतिपक्षविवर्जिता वादिप्रयुक्तपक्षप्रतिपन्थी प्रतिवाद्युपन्यासः प्रतिपक्षस्तेन विवर्जिता रहिता प्रतिपक्षसाधनहीनेत्यर्थः[1] वितण्डोदाहृता । [2]वैतण्डिको हि स्वाभ्युपगतपक्षमस्थापयन् यत्किंचिद्वादेन परोक्तमेव दूषयतीत्यर्थः ॥३०॥

§ ७६. अथ हेत्वाभासादितत्त्वत्रयस्वरूपं प्रकटयति—

[3]हेत्वाभासा असिद्धाद्याश्छलं कूपो नवोदकः ।
जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥३१॥

§ ७७. असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासाः । तत्र पक्षधर्मत्वं यस्य नास्ति, सोऽसिद्धः[4], अनित्यः शब्दश्चाक्षुषत्वादिति १ । विपक्षे सन्नसपक्षे चासन् विरुद्धः[5], नित्यः शब्दः कार्यत्वादिति[6] २ । पक्षादित्रयवृत्तिरनैकान्तिकः[7] अनित्यः शब्दः प्रमेयत्वा-

§ ७५. तु शब्द निश्चयार्थक है । यह तु शब्द भिन्न क्रमवाला है । अतः प्रतिपक्षसे रहित वह जल्प ही वितण्डा कहलाता है । वादीके द्वारा स्थापित पक्षकी अपेक्षा प्रतिवादीका पक्ष प्रतिपक्ष कहलाता है । वितण्डामें प्रतिवादी प्रतिपक्षका अर्थात् अपने पक्षका स्थापन नहीं करता, वह तो वैतण्डिक बनकर जिस किसी भी तरह वादीका मुँह बन्द करनेमें, मात्र उसके पक्षका खण्डन ही खण्डन करनेमें झुका रहता है । तात्पर्य यह कि अपने पक्षका स्थापन न करके मात्र परपक्ष खण्डनको वितण्डा कहते हैं ॥३०॥

§ ७६. अब हेत्वाभास छल और जातिका स्वरूप कहते हैं—

**असिद्ध आदि हेत्वाभास हैं । 'इस कुएँमें नवोदक है' यहाँ नूतन जलके अभिप्रायसे प्रयुक्त नवोदक शब्दका 'नव प्रकारका जल' अर्थ करना छल है । जैसे जातियाँ दूषणाभास हैं, इनके द्वारा पक्ष आदिका वस्तुतः खण्डन नहीं होता ॥३१॥**

§ ७७. असिद्ध, विरुद्ध, अनैकान्तिक, कालात्ययापदिष्ट तथा प्रकरणसम ये पाँच हेत्वाभास अर्थात् हेतुके लक्षणसे रहित होकर हेतुकी तरह भासमान होनेवाले हैं । जिस हेतुमें पक्षधर्मत्व न पाया जाय अर्थात् जो हेतु पक्षमें न रहे वह असिद्ध है जैसे शब्द अनित्य है क्योंकि वह चाक्षुष–चक्षुरिन्द्रियके द्वारा दिखाई देता है । शब्द श्रोत्रग्राह्य होता है अतः चाक्षुषत्व हेतु शब्दरूप पक्षमें न रहनेके कारण असिद्ध है । जो हेतु सपक्षमें तो न रहता हो और विपक्षमें रहता हो वह विरुद्ध है । जैसे शब्द नित्य है क्योंकि वह कार्य है । कार्यत्व हेतु अनित्यरूप विपक्षमें तो रहता है पर किसी भी नित्य सपक्षमें नहीं । पक्ष, सपक्ष तथा विपक्ष तीनोंमें रहनेवाला हेतु अनैकान्तिक है ।

१. –धनाहीना– प. १, २, भ. १, २, क. । २. "तयोरेकतरं वैतण्डिको न स्थापयतीति । परपक्षप्रतिषेधेनैव प्रवर्तते इति ।" —न्यायभा. १।२।३ । ३. "सव्यभिचारविरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः ।" —न्यायसू. १।२।४ । "अहेतवो हेतुवदवभासमानाः हेत्वाभासाः । हेतोः पञ्च लक्षणानि पक्षधर्मत्वादीनि उक्तानि । तेषामेकैकापाये पञ्च हेत्वाभासा भवन्ति । असिद्ध-विरुद्ध-अनैकान्तिककालात्ययापदिष्टप्रकरणसमाः ।" —न्यायक. पृ. १४ । न्यायसा. पृ. ७ । ४. "तत्र पक्षधर्मत्वं यस्य नास्ति सोऽसिद्धः । यथानित्यः शब्दः चाक्षुषत्वादिति ।" —न्यायक. पृ. १४ । "तत्रानिश्चितपक्षावृत्तिरसिद्धः ।"—न्यायसा. पृ. ७ । ५. "पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः ।" —न्यायसा. पृ. ७ । "सपक्षे सत्त्वं यस्य नास्ति विपक्षे च वृत्तिरस्ति स साध्यविपर्ययसाधनत्वाद् विरुद्धो भवति । यथा अश्वोऽयं विषाणत्वादिति ।" —न्यायक. पृ. १४ । ६. –त्वात् प–भ. २ । ७. "पक्ष-सपक्ष-विपक्षवृत्तिरनैकान्तिकः ।—न्यायसा. पृ. ७ । "विपक्षादपरिच्युतः पक्षसपक्षयोर्वर्तमानो हेतुः सव्यभिचारित्वादनैकान्तिको भवति ।" न्यायक. पृ. १४ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १२१. पर्षदा विदितस्य वादिना त्रिरभिहितस्यापि यदप्रत्युच्चारणं, तदननुभाषणं[1] नाम प्रतिवादिनो निग्रहस्थानं भवति। अप्रत्युच्चारयन् किमाश्रयं दूषणमभिदधीत १४।

§ १२२. पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं, तदज्ञानं[2] नाम निग्रहस्थानं भवति, अविदितोत्तरविषयो हि किमुत्तरं ब्रूयात्, न चाननुभाषणमेवेदं ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात् १५।

§ १२३. परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा[3] नाम निग्रहस्थानं भवति १६।

§ १२४. कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपो[4] नाम निग्रहस्थानं भवति, सिसाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्ति, इदं मे करणीयं परिहीयते पीनसेन कण्ठ उपरुद्ध इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते १७।

§ १२५. स्वपक्षे परापादितदोषमनुद्धृत्य तमेव परपक्षे प्रतीपमापादयतो मतानुज्ञा[5] नाम निग्रहस्थानं भवति। चौरो भवान्पुरुषत्वात् प्रसिद्धचौरवदित्युक्ते भवानपि चौरः पुरुषत्वादिति प्रतिब्रुवन्नात्मनः परापादितं चौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते १८।

§ १२१. वादीके जिस कथनको परिषद्ने समझ लिया और वादीने जिसका तीन बार उच्चारण भी किया, फिर भी यदि प्रतिवादी उसका अनुवाद न कर सके तो उसे अननुभाषण नामका निग्रहस्थान होता है। प्रतिवादी जब वादीके वाक्यका अनुवाद-उच्चारण ही नहीं कर सकता तब खण्डन किसका करेगा?

§ १२२. वादीके जिस वाक्यका अर्थ परिषद्ने अच्छी तरह समझ लिया है पर यदि प्रतिवादी उसे न समझ पाये तो उसे अज्ञान नामका निग्रहस्थान होता है। जब उसने प्रश्नको ही नहीं समझा तब वह उत्तर क्या देगा? यह अननुभाषणमें अन्तर्भूत नहीं होता, क्योंकि वस्तुका ज्ञान होनेपर शब्दोंके दुबारा उच्चारण करनेकी असामर्थ्य रह सकती है। अननुभाषणमें मात्र पुनः शब्दानुवाद न कर सकनेकी विवक्षा है और अज्ञानमें उसके अर्थको न समझ सकनेकी।

§ १२३. वादीके पक्षको समझ भी लिया, उसका अनुवाद—पुनः उच्चारण भी अच्छी तरह कर दिया, पर उसका उत्तर न सूझना अप्रतिभा नामका निग्रहस्थान है।

§ १२४. अपने पक्षको गिरता हुआ समझकर अन्य आवश्यक कार्योंको करनेका बहाना लेकर शास्त्रार्थको समाप्त करना, प्रकृत बातको उड़ा देना विक्षेप नामका निग्रहस्थान है। अपने पक्षको सिद्ध करना असम्भव जानकर शास्त्रार्थको समाप्त करनेके लिए यदि यह कहा जाय कि—'मेरा आवश्यक कार्य पड़ा हुआ है, उसे करके उत्तर दूँगा, पीनससे मेरा गला रुँध रहा है' आदि, तो उसको विक्षेप नामक निग्रहस्थान होता है।

§ १२५. अपने पक्षमें दिये गये दोषका उद्धार—खण्डन न करके, उस दोषको मानकर फिर परपक्षमें भी उसी दोषको बतलाना मतानुज्ञा नामका निग्रहस्थान है। जैसे—'आप चोर हैं क्योंकि आप पुरुष हैं जैसे कोई प्रसिद्ध चोर पुरुष', यह कहनेपर अपने ऊपर किये गये चोरत्वके आरोपका खण्डन नहीं करके यह कहना कि 'इस तरह तो आप भी पुरुष हैं अतः आप भी चोर हैं' मतानुज्ञा है। क्योंकि ऐसा कहनेसे वादीने अपनेको चोर तो मान ही लिया।

१. "विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥" —न्यायसू. ५।२।१६। २. "अविज्ञातं चाज्ञानम् ॥" —न्यायसू. ५।२।१७। ३. "उत्तरस्याप्रतिपत्तिरप्रतिभा ॥"— न्यायसू. ५।२।१८। ४. "कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥"—न्यायसू. ५।२।१९। ५. "स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥" —न्यायसू. ५।२।२०।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १२६. निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं[1] नाम निग्रहस्थानं भवति, पर्यनुयोज्यो नाम निग्रहोपपत्त्यावश्यं नोदनीय इदं ते निग्रहस्थानमुपनतमतो निगृहीतोऽसीति वचनीयः, तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते १९।

§ १२७. अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगो[2] नाम निग्रहस्थानं भवति, उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात्, स एवमसद्भूतदोषोद्भावनया निगृह्यते २०।

§ १२८. सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गोऽपसिद्धान्तो[3] नाम निग्रहस्थानं भवति, यः प्रथमं किंचित्सिद्धान्तमभ्युपगम्य कथामुपक्रमते तत्र च सिसाधयिषितार्थसाधनाय वा परोपलम्भाय वा सिद्धान्तविरुद्धमभिधत्ते, [4]सोऽपसिद्धान्तेन निगृह्यते, यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गस्य साधिका भवतीत्यनुयुक्तः प्राह अनया क्रिययाराधितो महेश्वरः फलं ददाति राजादिवदिति, तस्य मीमांसानभिमतेश्वरस्वीकारादपसिद्धान्तो नाम निग्रहस्थानं भवति २१।

§ १२६. जिसका निग्रह हो गया है फिर भी सभामें उसके निग्रहस्थानकी घोषणा न करना पर्यनुयोज्योपेक्षण है। पर्यनुयोज्य—अर्थात् निग्रह प्राप्तवादी या वादीको 'तुम्हें यह निग्रहस्थान हो गया है अतः तुम पराजित हो' इस कथनकी उपेक्षा करके जो चुप रह जाता है उसे पर्यनुयोज्योपेक्षण नामका निग्रहस्थान होता है।

§ १२७. जिसका निग्रह नहीं हुआ उसे निग्रहस्थान कहकर पराजित बताना निरनुयोज्यानुयोग है। किसी सयुक्तिक निरूपण करनेवाले सावधान सद्वादीसे जो किसी भी तरह पराजय—निग्रहके योग्य नहीं है, 'तुम पराजित हो' यह कहना निरनुयोज्यानुयोग नामका निग्रहस्थान है। ऐसा कहनेवाला स्वयं ही असद्भूत दोषको कहनेके कारण पराजित होता है।

§ १२८. स्वीकृत सिद्धान्तके विरुद्ध कथन करके यद्वा-तद्वा अनियमितरूपसे शास्त्रार्थ करना अपसिद्धान्त नामक निग्रहस्थान है। जो वादी पहले किसी सिद्धान्तको स्वीकार करके शास्त्रार्थ शुरू करता है, पीछे अपने पक्षकी सिद्धिके अभिप्रायसे या परपक्षमें दूषण देनेके विचारसे स्वीकृत सिद्धान्तके विरुद्ध बोल जाता है वह अपसिद्धान्त निग्रहस्थानके द्वारा पराजित हो जाता है। जैसे—कोई वादी मीमांसासिद्धान्तको स्वीकार कर अग्निहोत्र यज्ञको स्वर्गका साधन सिद्ध करता है। जब उससे प्रश्न किया गया कि 'अग्निहोत्र यज्ञ तो एक क्रिया है, वह तो कुछ देरमें नष्ट हो जाता है अतः वह कालान्तरभावी स्वर्गका साधन अर्थात् अव्यवहित कारण कैसे हो सकता है?' तब वह इस दूषणका परिहार करनेके लिए मीमांसकके अकर्तृक सिद्धान्तके विरुद्ध भी उत्तर देता है कि—'इस क्रियासे महेश्वरकी आराधना होती है और ईश्वर इसके फलस्वरूप स्वर्गमें पहुँचा देता है, जैसे कि, राजा अपने खैरख्वाह सेवकको सेवाका फल देता है।' इस तरह इसने मीमांसाके विरुद्ध ईश्वरकर्तृत्वका प्रतिपादन किया अतः अपसिद्धान्त निग्रहस्थानसे इसका पराजय हो जायगा।

१. "निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥" —न्यायसू. ५।२।२१। २. "अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥" —न्यायसू. ५।२।२२। ३. "सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥"—न्यायसू. ५।२।२३। ४. सोऽप्यपसि—भ. २।

Jain Education International	For Private & Personal Use Only	www.jainelibrary.org

§ १२९. हेत्वाभासाश्च[1] यथोक्ता[2] असिद्धविरुद्धादयो निग्रहस्थानम्[3] २२। इति भेदान्तरानन्त्येऽपि निग्रहस्थानानां द्वाविंशतिर्मूलभेदा निवेदिता इति।

§ १३०. तदेवं[4] छलजातिनिग्रहस्थानस्वरूपभेदाभिज्ञः स्ववाक्ये तानि वर्जयन्परप्रयुक्तानि समादधद्यथाभिमतसाध्यसिद्धिं लभत इति ॥

★[5]जातिनिग्रहस्थानानां संग्रहश्लोका यथा—

[6]साधर्म्यमथ वैधर्म्यमुत्कर्षश्चापकर्षकः।
वर्ण्यावर्ण्यविकल्पाश्च साध्यप्राप्त्यनवाप्तयः ॥१॥
प्रसङ्गः प्रतिदृष्टान्तोऽनुत्पत्तिः संशयस्तथा।
ततः प्रकरणाहेतू अर्थापत्त्यविशेषको ॥२॥
उपपत्तिश्चोपलब्ध्यनुपलब्धी तथा क्रमात्।
नित्यानित्ये कार्यसमा जातयः समुदीरिताः[7] ॥३॥
प्रतिज्ञाहानिसंन्यासविरोधाश्च तदन्तरम्।
हेत्वर्थान्तरे[8]निरर्थोऽविज्ञातार्थमपार्थकम् ॥४॥
अप्राप्तकालयुग् न्यूनमधिकं पुनरुक्तयुक्।
स्यान्नानुभाषणाज्ञानाप्रज्ञाविक्षेपसंज्ञकम् ॥५॥
मतानुज्ञापरिनिरनुयोज्यो[9] भवतस्ततः।
उपेक्षणानुयोगौ चापसिद्धान्तापसाधने ॥६॥ [10] इति
जातिनिग्रहस्थानसंग्रहश्लोकाः।★

---

§ १२९. पूर्वोक्त असिद्ध विरुद्ध आदि हेत्वाभास निग्रहस्थान हैं। इस तरह अनन्त अवान्तर भेद होनेपर भी निग्रहस्थानोंके बाईस मूलभेदोंका वर्णन किया।

§ १३०. इस प्रकार छल, जाति और निग्रहस्थानोंके स्वरूपको यथावत् जाननेवाला स्ववाक्यमें इनके प्रयोगसे परहेज रखता है तथा दूसरेके द्वारा प्रयुक्त छलादिका उचित समाधान करके अपने पक्षकी सिद्धि कर जयलाभ करता है।

जाति तथा निग्रहस्थानोंके नाम इस प्रकार हैं—साधर्म्यसमा, वैधर्म्यसमा, उत्कर्षसमा, अपकर्षसमा, वर्ण्यसमा, अवर्ण्यसमा, विकल्पसमा, साध्यसमा, प्राप्तिसमा, अप्राप्तिसमा, प्रसंगसमा, प्रतिदृष्टान्तसमा, अनुत्पत्तिसमा, संशयसमा, प्रकरणसमा, अहेतुसमा, अर्थापत्तिसमा, अविशेषसमा, उपपत्तिसमा, उपलब्धिसमा, अनुपलब्धिसमा, नित्यसमा, अनित्यसमा और कार्यसमा, ये चौबीस जातियाँ हैं।

प्रतिज्ञाहानि, प्रतिज्ञासंन्यास, प्रतिज्ञाविरोध, हेत्वन्तर, अर्थान्तर, निरर्थक, अविज्ञातार्थ, अपार्थक, अप्राप्तकाल, न्यून, अधिक, पुनरुक्त, अननुभाषण, अज्ञान, अप्रतिभा, विक्षेप, मतानुज्ञा, परिनिरनुयोज्य, उपेक्षण, अनुयोग, अपसिद्धान्त और हेत्वाभास ये बाईस निग्रहस्थान हैं।

---

१. "हेत्वाभासाश्च यथोक्ताः ॥"—न्यायसू. ५।२।२४। २. असिद्धादयो भ. २। ३. "ते इमे हेत्वाभासा न्यायप्रविवेकं कुर्वन्तो वस्तुशुद्धिं विदधतीति पृथगुच्यन्ते। अतएव निग्रहस्थानान्तर्गतानामप्येषां पृथगुपदेशः।"—न्यायक. पृ. १६। ४. "तदेवं छलजातिनिग्रहस्थानस्वरूपाभिज्ञः स्ववाक्ये तानि वर्जयन् परप्रयुक्तानि च समादधन् यथाभिमतसाध्यसिद्धिं लभते।"—न्यायक. पृ. २७। ५. ★एतदन्तर्गतः पाठो नास्ति आ., क.। ६. –र्म्यवै—भ. २। ७. –ताः इति जातिसंग्रहश्लोकाः प्रति—भ. २, प. १, २। ८.—न्तरमपार्थं च निरर्थाविज्ञातार्थकम् भ.२। ९. पर्यनुयो भ. २। १०. इति निग्र—भ. २, प. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १३१. अत्रानुक्तमपि किंचिन्निगद्यते । अर्थोपलब्धिहेतुः[1] प्रमाणम् । एकात्मसमवायिज्ञानान्तरवेद्यं[2] ज्ञानम्, प्रमाणादभिन्नं फलं, पूर्वं प्रमाणमुत्तरं तु फलम्[3] । स्मृतेरप्रामाण्यम्[4], परस्परविभक्तौ सामान्यविशेषौ नित्यानित्यत्वे सदसदंशौ च, प्रमाणस्य विषयः पारमार्थिकः, तमश्छाये[5] अद्रव्ये, आकाशगुणः[6] शब्दोऽपौद्गलिकः, संकेतवशादेव शब्दादर्थप्रतीतिर्न पुनस्तत्प्रतिपादन-

---

§ १३१. कारिकामें नहीं कही गयी कुछ विशेष बातें भी कहते हैं—अर्थोपलब्धिमें जो साधकतम कारण होता है उसे प्रमाण कहते हैं। उसी आत्माके द्वितीयज्ञान (अनुव्यवसाय) के द्वारा जिसका परिज्ञान होता है ऐसा प्रथमज्ञान प्रमाणका फल है। फलज्ञान प्रमाणसे भिन्न होता है। पूर्व—साधकतम कारणको प्रमाण तथा उत्तर—कार्यको फल कहते हैं। स्मृतिज्ञान अनुभवके द्वारा गृहीत अर्थको ही ग्रहण करनेके कारण अप्रमाण है। स्मृति पूर्वानुभवके परतन्त्र है। सामान्य और सामान्याश्रय द्रव्य गुण कर्मरूप विशेष परस्पर अत्यन्त भिन्न हैं। नित्य द्रव्य तथा अनित्यद्रव्य पृथक्-पृथक् हैं। भाव तथा अभाव दोनों पृथक् पदार्थ हैं। ये ही सब प्रमाणके विषय हैं। तम और छाया द्रव्यरूप न होकर तेजोऽभाव रूप हैं। शब्द आकाशका गुण है, पौद्गलिक नहीं है। संकेतके

---

१. "उपलब्धिहेतुश्च प्रमाणम् ।" —न्यायभा. २।१।११ । २. "ज्ञानान्तरसंवेद्यं संवेदनं वेद्यत्वात् घटादिवत् ।" —प्रश. व्यो. पृ. ५२९ । "विवादाध्यासिताः प्रत्ययान्तरेणैव वेद्याः प्रत्ययत्वात् । एवं प्रमेयत्वगुणत्वसत्त्वादयोऽपि प्रत्ययान्तरवेद्यत्वहेतवः प्रयोक्तव्याः ।" —विधिवि-न्यायकणि. पृ. २६७ । "करणं हि प्रमाणमुच्यते प्रमीयतेऽनेन इति । न च क्रियैव क्वचित् करणं भवति, क्रियायां साध्यायां कारकं किमपि करणमुच्यते यथा दात्रेण चैत्रः शालिस्तम्बं लुनाति इति कर्तृकर्मकरणानि क्रियातो भिन्नान्युपलभ्यन्ते तथेहापि चक्षुषा घटं पश्यतीति दर्शनक्रियातः पृथग्भाव एव तेषां युक्तो न दर्शनं करणमेव इति, प्रमा प्रमाणमिति तु फले प्रमाणशब्दस्य साधुत्वाख्यानमात्रम् कृतिः करणमितिवत्.......... तेन चक्षुरादेः ज्ञानक्रियामुपजनयतः करणत्वं ज्ञानस्य फलत्वमेवेति युक्तः तथाव्यपदेश;...."—न्यायमं. पृ. ७० । स्वातिरिक्तेत्यादिना शंकरस्वामी प्रमाणयति—स्वातिरिक्तक्रियाकारि प्रमाणं कारकत्वतः वास्यादिवत्....॥१३५३॥"—तत्त्वसं. । ३. "यदा निर्विकल्पकं सामान्यविशेषज्ञानं प्रमाणम् तदा द्रव्यादिविषयं विशिष्टं ज्ञानं प्रमितिः इत्यर्थः । यदा निर्विकल्पकं सामान्यविशेषज्ञानमपि प्रमारूपमर्थप्रतीतिरूपत्वात् तदा तदुत्पत्तावविभक्तमालोचनमात्रं प्रत्यक्षम्... विशेषज्ञानं हि विशेषज्ञानस्य फलम् विशेषणज्ञानं न ज्ञानान्तरफलम्....यदा निर्विकल्पकं सामान्यविशेषज्ञानं फलं तदा इन्द्रियार्थसन्निकर्षः प्रमाणम्, यदा विशेष्यज्ञानं फलं तदा सामान्यविशेषालोचनं प्रमाणम् इत्युक्तं तावत् । सम्प्रति हानादिबुद्धीनां फलत्वे विशेष्यज्ञानं प्रमाणमित्याह...."—प्रश. कन्दली पृ. १९९ । मीमांसाश्लो. सू. ४ श्लोक ७१-७३ । ४. "कथं तर्हि स्मृतेर्व्यवच्छेदः ? अननुभवत्वेनैव....न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति पृथगनुपदेशात् । —न्यायकुसु. ४।१ । ५. "द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः ।" —वैशे. सू. ५।२।१९ । "उद्भूतरूपवद्यावत्तेजःसंसर्गाभावस्तमः ।" वैशे. उप. ५।२।२० । "किं पुरुषवच्छायापि गच्छति आहोस्वित् आवारकद्रव्ये संसर्पति आवरणसन्तानादसन्निधिसन्तानोऽयं तेजसो गृह्यत इति । सर्वतः खलु द्रव्येण यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यते इति ।"—न्यायभा. ३।२।८ । "भासामभावरूपत्वात् छायायाः ।"—प्रश. व्यो. पृ. ४६ । "तस्मादभाव एव छाया न तु सतीति सिद्धम् ।" —न्यायवा. ता. टी. पृ. ३४२ । प्रश. किर. पृ. १९ । ६. "शब्दोऽम्बरगुणः ।"—प्रश. भा., व्यो. पृ. ६४५ ।



Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

सामर्थ्यात्, धर्मधर्मिणोर्भेदः, [1]सामान्यमनेकवृत्ति, [2]आत्मविशेषगुणलक्षणं कर्म, वपुर्विषयेन्द्रियबुद्धिसुखदुःखानामुच्छेदादात्मसंस्थानं[3] मुक्तिरिति[4] न्यायसारे[5] पुनरेवं 'नित्यसंवेद्यमानेन सुखेन विशिष्टात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष' इति ॥

§ १३२. एषां तर्कग्रन्था न्यायसूत्र-भाष्य-न्यायवार्तिक-तात्पर्यटीका-तात्पर्यपरिशुद्धि-न्यायालंकारवृत्तयः। क्रमेणाक्षपादवात्स्यायनोद्योतकरवाचस्पतिश्रीउदयनश्रीकण्ठाभयतिलकोपाध्यायविरचिताः ५४००० [6]प्रमिताः। भासर्वज्ञप्रणीते न्यायसारेऽष्टादश टीकाः॥ तासु मुख्या टीका न्यायभूषणाख्या तेनैव रचिता न्यायकलिका जयन्तरचिता, न्यायकुसुमाञ्जलितर्कश्च ॥३२॥

§ १३३. अथ तन्मतमुपसंहरन्नुत्तरं[7] च मतमुपक्षिपन्नाह ।

**नैयायिकमतस्यैष समासः कथितोऽञ्जसा ।**
**सांख्याभिमतभावानामिदानीमयमुच्यते ॥३३॥**

---

कारण ही शब्दोंसे अर्थकी प्रतीति होती है, शब्दोंमें स्वाभाविक वाचक शक्ति नहीं है। धर्म और धर्मीमें अत्यन्त भेद है। सामान्य नित्य और एक होकर अनेक विशेषोंमें रहता है। कर्म-पुण्य-पाप आत्माके विशेषगुणरूप हैं। शरीर, विषय, इन्द्रिय, बुद्धि, सुख, दुःख आदिका उच्छेद करके आत्मस्वरूपमें स्थिति होना मुक्ति है। न्यायसारमें तो आत्यन्तिक दुःख निवृत्ति करके नित्य अनुभवमें आनेवाले विशिष्ट सुखकी प्राप्तिको भी मुक्ति माना है।

§ १३२. इनके अक्षपादकृत, वात्स्यायनकृत, उद्योतकरकृत, न्यायसूत्र, न्यायभाष्य, न्यायवार्तिक, वाचस्पतिकृत न्यायवार्तिकतात्पर्यटीका, उदयनकृत तात्पर्यपरिशुद्धि तथा श्रीकण्ठ अभयतिलकोपाध्याय विरचित न्यायालंकार-वृत्ति आदि प्रमुख तर्कग्रन्थ हैं। इनका प्रमाण ५४००० श्लोक प्रमाण है। भासर्वज्ञकृत न्यायसारकी अठारह टीकाएँ हैं। इनमें न्यायभूषण नामकी टीका सर्वप्रमुख है। जयन्त विरचित न्यायकलिका तथा न्यायकुसुमांजलितर्क भी न्यायशास्त्रके खास ग्रन्थ हैं।

§ १३३. अब न्यायमतका उपसंहार करके आगे सांख्यमतके प्रतिपादनकी प्रतिज्ञा करते हैं—

**इस प्रकार नैयायिक मतका संक्षेपसे वास्तविक निरूपण किया है। अब सांख्यके द्वारा माने गये पदार्थोंका विवेचन करते हैं ॥३३॥**

---

१. "स्वविषयसर्वगतमभिन्नात्मकमनेकवृत्ति....."—प्रश. भा., व्यो. पृ. ६७७। २. "धर्मः पुरुषगुणः।" प्रश. भा. व्यो. पृ. ६३७। ३. -मुच्छेदात्मसं—प. १, २, भ. २। ४. "नवानामात्मविशेषगुणानामत्यन्तोच्छित्तिर्मोक्षः।" —प्रश. व्यो. पृ. ६३८। "यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः। तावदात्यन्तिकी दुःखव्यावृत्तिर्नावकल्पते॥ ननु तस्यामवस्थायां कीदृगात्मावशिष्यते? स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः।"—न्यायमा. पृ. ५०८। "समस्तात्मविशेषगुणोच्छेदोपलक्षिता स्वरूपस्थितिरेव।"—प्रश. कन्द. पृ. १८७। "निःश्रेयसं पुनर्दुःखनिवृत्तिरात्यन्तिकी।" —प्रश. किर. पृ. ६। ५. "कुतो मुक्तस्य सुखोपभोग इति चेत्। आगमात्। उक्तं हि—'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्। तं च मोक्षं विजानीयात् दुष्प्रापमकृतात्मभिः॥ यथा, आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते। विज्ञानमानन्दं ब्रह्मेति।'......तत्सिद्धमेतत् नित्यसंवेद्यम्। अनेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति।" —न्यायसा. पृ. ४०, ४१। ६. 'प्रमिताः' नास्ति आ. क., प. १, २, भ. २। ७. -मुपसंहरन्नाह भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १३४. व्याख्या—एषोऽनन्तरोदितो नैयायिकमतस्य समासः संक्षेपः कथित उक्तोऽञ्जसा [1]द्राग् सांख्याभिमतभावानां सांख्याः कापिलास्तेषामभिमता अभीष्टा भावा ये पञ्चविंशतितत्त्वादयः पदार्थास्तेषामयं समास इदानीमुच्यते ॥

[2]इति श्रीतपोगणनभोऽङ्गणदिनमणिश्रीदेवसुन्दरसूरिपादपद्मोपजीविश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकाभिधानायां षड्दर्शनसमुच्चयवृत्तौ नैयायिकमतस्वरूपप्रकटनो नाम द्वितीयोऽधिकारः ॥

---

§ १३४. यह पहले कहा गया नैयायिक मतका वास्तविक विवेचन है। अब कापिलोंके पचीस तत्त्व एवं उनके मतके अन्य पदार्थोंका निरूपण किया जाता है।

इति तपोगण-रूपी आकाशके सूर्य श्री देवसुन्दर सूरिके चरणकमलोंके परम उपासक श्री गुणरत्नसूरिके द्वारा रची गयी यह षड्दर्शन समुच्चयकी तर्करहस्य दीपिका नामकी टीकामें नैयायिकमतके स्वरूपको प्रकट करनेवाला द्वितीय अधिकार पूर्ण हुआ।

---

१. प्राग् क.। २. इति तर्करहस्यदीपिकायां गुणरत्नसूरिविरचितायां नैयायिकमतस्वरूपप्रकटनो नाम द्वितीयोऽधिकारः ॥२॥ इह कलुषकराले दुःखमानामकाले निजनिजगुणगुर्वाम्नायमास्ते प्रचारः। तदपि जिनपवाचां यः पुरस्कारकारी भवभयहृतिहेतोः स्वस्ति तस्मै तवोऽस्मिन्। ॐ नमः पार्श्वाय त्रिजगज्जीवराजीवजीवातवे स्वयं अथ सांख्य म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ॐ

# अथ तृतीयोऽधिकारः

§ १. अथादौ सांख्यमतप्रपन्नानां परिज्ञानाय लिङ्गादिकं निगद्यते। त्रिदण्डा एकदण्डा वा कौपीनवसना धातुरक्ताम्बराः शिखावन्तो जटिनः क्षुरमुण्डा मृगचर्मासना द्विजगृहाशनाः पञ्चग्रासीपरा[1] वा द्वादशाक्षरजापिनः परिव्राजकादयः। [2]तद्भक्ता वन्दमाना ॐनमो नारायणायेति वदन्ति, ते तु नारायणाय नम इति प्राहुः। तेषां च महाभारते बीटेति ख्याता दारवी मुखवस्त्रिका मुखनिःश्वासनिरोधिका भूतानां दयानिमित्तं भवति। यदाहुस्ते "घ्राणादितोऽनुयातेन श्वासेनैकेन जन्तवः। हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरवादिनाम् ॥१॥"

§ २. ते च जलजीवदयार्थं स्वयं गलनकं धारयन्ति, भक्तानां चोपदिशन्ति। "षट्त्रिंशदङ्गुलायामं विंशत्यङ्गुलविस्तृतम्। दृढं गलनकं कुर्याद्भूयो जीवान्विशोधयेत् ॥१॥ म्रियन्ते मिष्टतोयेन पूतराः क्षारसंभवाः। क्षारतोयेन तु[3] परे न कुर्यात्संकरं ततः ॥२॥ लूतास्यतन्तुगलिते ये बिन्दौ सन्ति जन्तवः। सूक्ष्मा भ्रमरमानास्ते नैव मान्ति त्रिविष्टपे ॥३॥" इति गलनकविचारो मीमांसायाम्।

---

§ १. अब सांख्य मतका परिज्ञान करनेके लिए सांख्योंके लिंग, वेष आदिका निरूपण करते हैं। सांख्योंके परिव्राजक तीन दण्डोंके धारक या एक दण्डके धारी होते हैं। लँगोटी मात्रके पहननेवाले या गेरुसे रंगे हुए लाल वस्त्रोंको पहननेवाले होते हैं। सिरपर शिखा—चोटी रखनेवाले या जटाधारी होते हैं। छुरासे भी सिर मुड़ानेवाले होते हैं। मृगचर्मका आसन रखनेवाले, द्विजोंके घर भोजन करनेवाले, पाँच ग्रास प्रमाण आहार करनेवाले, तथा द्वादशाक्षर मन्त्रको जपनेवाले होते हैं। भक्तलोग इन परिव्राजकोंकी वन्दना करते समय 'ओं नमो नारायणाय' कहते हैं। परिव्राजक 'नमो नारायणाय' कहकर आशीर्वाद देते हैं। ये दयालु परिव्राजक मुखकी उष्ण श्वाससे जीवोंकी रक्षा करनेके लिए एक दारवी—लकड़ीकी मुखवस्त्रिका रखते हैं। महाभारतमें इस मुखवस्त्रिकाको 'बीटा' कहा है। वे लोग कहते हैं कि—"हे ब्रह्मन्, एक ह्रस्व अक्षरको उच्चारण करनेके समय भी नाक आदिसे निकली हुई एक श्वाससे ही सैकड़ों जन्तुओं की हिंसा होती है।"

§ २. वे जलमें रहनेवाले जीवोंकी दया पालनके लिए स्वयं पानी छाननेका गलना—छन्ना रखते हैं तथा अपने भक्तोंको भी पानी छाननेका उपदेश देते हैं। कहा भी है—"छत्तीस अंगुल लम्बा, बाईस अंगुल चौड़ा दृढ़-मोटे गाढ़ेके गलने—छन्नेसे पानी छानना चाहिए। छाननेके बाद भी जीवोंकी दयाकी ओर विशेष ध्यान रखना चाहिए।" मीठे कुँएके जलसे खारे कुँएके तथा खारे कुँएके जलसे मीठे कुँएके जलजीव मर जाते हैं अतः मीठे कुँएके पानीमें खारे कुँएका पानी तथा खारे कुँएके पानीमें मीठे कुँएका पानी नहीं मिलाना चाहिए ॥२॥ मकड़ीके मुँहसे निकले हुए सूक्ष्म लारबिन्दुके समान अत्यन्त सूक्ष्म जलकणमें इतने सूक्ष्मजीव रहते हैं कि यदि वे भौंरेके समान स्थूल हो जायें तो वे तीनों लोकोंमें भी नहीं समा सकते ॥" इस तरहके विचारसे पानी छाननेका विधान किया गया है।

---

१. -ग्रामीपरा भ. २। २. तद्भक्ता ॐ नमो नारायणायेति वदन्ति वन्दमानाः ते तु भ. १, २, प. १, २। ३. तु ( चा ) परे आ.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३. सांख्याः केचिदीश्वरदेवाः, अपरे च निरीश्वराः। ये च निरीश्वरास्तेषां नारायणो देवः। तेषामाचार्या विष्णुप्रतिष्ठाकारकाश्चैतन्यप्रभृतिशब्दैरभिधीयन्ते। तेषां मतवक्तारः कपिलासुरिपञ्चशिखभार्गवोलूकादयः, ततः सांख्याः कापिला इत्यादिनामभिरभिधीयन्ते। तथा कपिलस्य परमर्षिरिति द्वितीयं नाम, तेन तेषां पारमर्षा इत्यपि नाम ज्ञातव्यम्[1]।

§ ४. वाराणस्यां तेषां प्राचुर्यम्। [2]बहवो मासोपवासिका ब्राह्मणा अर्चिमार्गविरुद्धधूममार्गानुगामिनः। सांख्यास्त्वर्चिर्मार्गानुगाः। तत एव ब्राह्मणा वेदप्रिया यज्ञमार्गानुगाः। सांख्यास्तु हिंसाढ्यवेदविरता अध्यात्मवादिनः। ते च स्वमतस्य महिमानमेवमामनन्ति। तदुक्तं माठरप्रान्ते[3]-

"हस पिब लल खाद मोद नित्यं भुङ्क्ष्व च भोगान् यथाभिकामम्।
यदि विदितं ते कपिलमतं तत्प्राप्स्यसि मोक्षसौख्यमचिरेण ॥१॥"

शास्त्रान्तरेऽप्युक्तम्[4]—

"पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः।
शिखी मुण्डी जटी वापि मुच्यते नात्र संशयः ॥२"॥३२॥

§ ५. अथ शास्त्रकारः सांख्यमतमुपदर्शयति।

---

§ ३. कुछ सांख्य तो ईश्वरको देव मानते हैं तथा कुछ निरीश्वरवादी हैं। जो निरीश्वर हैं उनके नारायण ही देवता हैं। इनके आचार्य विष्णु प्रतिष्ठाकारक चैतन्य आदि शब्दोंसे पुकारे जाते हैं। कपिल आसुरि पंचशिख भार्गव तथा उलूक आदि सांख्यमतके प्रख्यात वक्ता हैं। इसीलिए ये सांख्य तथा कपिल आदि शब्दोंसे व्यवहृत होते हैं। कपिलका 'परमर्षि' भी नाम है, अतः ये पारमर्ष भी कहे जाते हैं।

§ ४. सांख्य लोग वाराणसीमें प्रचुरतासे रहते हैं। बहुत-से मासोपवासी साधु एक-एक माहका उपवास करनेवाले हैं। ब्राह्मण लोग अर्चिमार्गसे विरुद्ध धूममार्गके अनुयायी होते हैं। सांख्यलोग अर्चिमार्गका ही अनुसरण करते हैं। इसीलिए ब्राह्मण वेदानुयायी तथा याज्ञिक अनुष्ठान करनेवाले होते हैं। सांख्य वैदिकी हिंसासे विरक्त रहकर आध्यात्मिक साधना करते हैं। ये लोग अपने मतकी महिमाका इस प्रकार वर्णन करते हैं। माठरवृत्तिमें कहा है कि—"खूब हँसो, मजेसे पीओ, लाड़ आनन्द करो, खूब खाओ, खुशीसे मौज करो, हमेशा रोज-ब-रोज इच्छानुसार भोगोंको भोगो। इस तरह जो तबियतमें आवे बेखटके करो, इतना सब करके भी यदि तुम कपिलमतको अच्छी तरह समझ लोगे तो विश्वास रखो कि तुम्हारी मुक्ति समीप है। तुम शीघ्र ही कपिल मतके परिज्ञानमात्रसे सबकुछ मजामौज करते हुए भी मुक्त हो जाओगे ॥१॥ दूसरे शास्त्रोंमें भी कहा है—"सांख्यके पचीस तत्त्वोंको यथावत् जाननेवाला चाहे जिस आश्रममें रहे, वह चाहे शिखा रखे, मुण्ड मुड़ावे या जटा धारण करे उसकी मुक्ति निश्चित है। सांख्य तत्त्वोंका ज्ञाता बिना शकके मोक्षलाभ करता है ॥२॥"

§ ५. अब शास्त्रकार सांख्यमतका निरूपण करते हैं—

---

१. पंचशंख भ. २। २. बाह्या मा—भ. १, २, प. १, २। ३. "हस पिब लल मोद नित्यं विषयानुपभुञ्ज कुरु च मा शङ्काम्। यदि विदितं ते कपिलमतं तत्प्राप्स्यसे मोक्षसौख्यं च ॥" —सां. का. माठर. पृ. ५३। ४.—उद्धृतोऽयम्—सा. का. माठर. पृ. ३८। शास्त्रवा. का. ३।१७। तत्त्वसं. प. पृ. १७। "तथा च उक्तं पञ्चशिखेन प्रमाणवाक्यम्—पञ्चविंशतितत्त्वज्ञः....।" —तत्त्वयाथा. पृ. ६१। सन्मति टी. पृ. २८२। न्यायाव. टी. पृ. १४। तत्त्वस. सू. वृ. १२४।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**सांख्या निरीश्वराः केचित्केचिदीश्वरदेवताः ।**
**सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः ॥३४॥**

§ ६. व्याख्या—केचित्सांख्या निर्गत ईश्वरो येभ्यस्ते निरीश्वराः, केवलाध्यात्मैकमानिनः, केचिदीश्वरदेवताः—ईश्वरो देवता येषां ते तथा । तेषां सर्वेषामपि निरीश्वराणां सेश्वराणां चोभयेषामपि तत्त्वानां पञ्चविंशतिः स्यात् । सांख्यमते किल दुःखत्रयाभिहतस्य पुरुषस्य तदुपघातहेतुस्तत्त्वजिज्ञासोत्पद्यते । आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति दुःखत्रयम् । अत्राध्यात्मिकं द्विविधम्, शारीरं मानसं च । तत्र वातपित्तश्लेष्मणां वैषम्यनिमित्तं यद्दुःखमात्मानं देहमधिकृत्य ज्वरातीसारादि समुत्पद्यते तच्छारीरम्, मानसं च कामक्रोधलोभमोहेर्ष्याविषयादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा—आधिभौतिकमाधिदैविकं चेति । तत्राधिभौतिकं मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तम्, आधिदैविकं यक्षराक्षसग्रहाद्यावेशहेतुकम् । अनेन दुःखत्रयेण रजःपरिणामभेदेन बुद्धिवर्तिनाभिहतस्य प्राणिनस्तैस्तत्त्वानां[2] जिज्ञासा भवति दुःखविघाताय । तत्त्वानि[3] च पञ्चविंशतिर्भवन्ति ॥३४॥

---

**सांख्य दो प्रकारके हैं-एक तो निरीश्वर अर्थात् ईश्वरको नहीं मानने वाले तथा दूसरे ईश्वरको देवता माननेवाले । ये सभी सांख्य ( प्रकृति आदि ) पचीस तत्त्वोंको स्वीकार करते हैं ॥३४॥**

§ ६. कुछ सांख्य ईश्वरको नहीं मानकर केवल अध्यात्मवादी हैं। कुछ सांख्य ईश्वरको ही देवता मानते हैं। सभी सेश्वरसांख्य तथा निरीश्वरसांख्य साधारणरूपसे पचीस तत्त्वोंको स्वीकार करते हैं। सांख्यमतमें कहा है कि—पुरुष जब तीन प्रकारके दुःखोंसे अत्यन्त सन्तप्त हो जाता है, वह दुःखोंके आघातसे तिलमिला उठता है तब उसे स्वभावतः दुःखोंके दूर करनेके उपायभूत तत्त्वोंके शरणकी इच्छा होती है। आध्यात्मिक, आधिदैविक तथा आधिभौतिक ये तीन प्रकारके दुःख हैं। आध्यात्मिक दुःखमें-से कुछ शरीरसे सम्बन्ध रखते हैं तथा कुछ मनसे। वात, पित्त और कफ इन तीन दोषोंकी विषमतासे देहमें ज्वर, अतीसार आदि व्याधियाँ उत्पन्न हो जाती हैं। ये दैहिक व्याधियाँ हैं। काम, क्रोध, लोभ, मोह, ईर्ष्या—इन व्याधियोंसे आत्माको जो दुःख—बेचैनी होती है वह मानस—आध्यात्मिक दुःख है। ये दोनों दुःख भीतरी कारणोंसे उत्पन्न होनेके कारण आध्यात्मिक कहे जाते हैं। अर्थात् वात-पित्तादिकी विषमता तथा मनके काम-क्रोधादि विकार बाहरसे दिखाई नहीं देते, भीतर ही भीतर उत्पन्न हो जाते हैं अतः ये आध्यात्मिक दुःख हैं। बाह्य कारणोंसे होनेवाला दुःख आधिभौतिक तथा आधिदैविकके भेदसे दो प्रकारका है। मनुष्य, पशु, पक्षी, मृग, सर्प तथा वृक्षादि स्थावर—स्थितिशील प्राणियोंके निमित्तसे होनेवाला दुःख आधिभौतिक है। यक्ष, राक्षस तथा भूतादिके आवेशसे होनेवाला दुःख आधिदैविक कहलाता है। ये तीनों दुःख रजोगुणके परिणाम हैं। बुद्धिमें होनेवाले इन दुःखोंसे जब प्राणी अच्छी तरह सताया जाता है वह इनके आघात को सहते-सहते घबड़ा जाता है तब उसे दुःखविघातके कारण भूत तत्त्वोंकी जिज्ञासा होती है। तत्त्व पचीस होते हैं।

---

१. "दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ।" —सां. का.। —किं पुनस्तद्दुःखत्रयम् ? तदाह—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकम् । तत्र प्रथमं द्विविधं शारीरं मानसं च । तत्र शारीरं वातपित्तश्लेष्मणां देहधातूनां वैषम्यात् यद् दुःखमात्मानं देहमधिकृत्य ज्वरातीसारादि प्रवर्तते । मानसं प्रियवियोगादप्रियसंयोगाच्च द्विविधम् । एतदाध्यात्मिकं दुःखमभिहितम् । आधिभौतिकं तु भूतान्यधिकृत्य यत्प्रवर्तते मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं तु दिवमधिकृत्य यत्प्रवर्तते शीतोष्णवातवर्षादिकम् । एवमेतैस्त्रिभिर्दुःखैरभिहतस्यासुरिसगोत्रस्य ब्राह्मणस्य जिज्ञासा समुत्पन्ना ।" —सां. का. माठर. पृ. ३ । २. तत्त्वजिज्ञा—भ. २ । ३. -नि पंच भ. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ७. अथ तत्त्वपञ्चविंशतिमेव विवक्षुरादौ सत्त्वादिगुणस्वरूपमाह।

सत्त्वं रजस्तमश्चेति ज्ञेयं तावद्गुणत्रयम्[1]।
प्रसादतापदैन्यादिकार्यलिङ्गं क्रमेण तत् ॥३५॥

§ ८. [2]तावच्छब्दः प्रक्रमे तच्चैवं ज्ञातव्यं (व्यः)। तेषु पञ्चविंशतौ[3] तत्त्वेषु सत्त्वं सुखलक्षणम्, रजो दुःखलक्षणम्, तमश्च मोहलक्षणमित्येवं प्रथमं तावद्गुणत्रयं[4] ज्ञेयम्। तस्य गुणत्रयस्य कानि लिङ्गानीत्याह—'प्रसाद' इत्यादि। तत्सत्त्वादिगुणत्रयं क्रमेण प्रसादतापदैन्यादिकार्यलिङ्गम्[5]। प्रसादः—प्रसन्नता, तापः—संतापः, दैन्यं—दीनवचनादिहेतुर्विषण्णता, द्वन्द्वे प्रसादतापदैन्यानि, तानि आदिः प्रकारो येषां कार्याणां तानि प्रसादतापदैन्यादीनि, प्रसादतापदैन्यादीनि कार्याणि लिङ्गं—गमकं—चिह्नं यस्य तत्प्रसादतापदैन्यादिकार्यलिङ्गम्। अयं भावः। प्रसादबुद्धिपाटवलाघवप्रसवानभिष्वङ्गाद्वेषप्रीत्यादयः कार्यं सत्त्वस्य लिङ्गम्। तापशोषभेदचलचित्ततास्तम्भोद्वेगाः कार्यं रजसो लिङ्गम्। दैन्यमोहमरणसादनबीभत्साज्ञानागौरवादीनि कार्यं तमसो लिङ्गम्। एभिः

---

§ ७. इन पचीस तत्त्वोंके कहनेकी इच्छासे सर्वप्रथम सत्त्व आदि गुणोंका स्वरूप कहते हैं—

**सत्त्व, रज और तम ये तीन गुण हैं। प्रसाद, ताप तथा दीनता आदि कार्योंसे उनका क्रमशः अनुमान होता है ॥३५॥**

§ ८. श्लोकमें 'तावत्' शब्द प्रक्रमार्थक है। वह इस प्रकारका है—उन पचीस तत्त्वोंमें सर्वप्रथम सुखलक्षणवाला सत्त्व, दुःखात्मक रज, तथा मोहस्वरूप तम इन तीन गुणोंका स्वरूप समझ लेना चाहिए। ये सत्त्वादि तीनों गुणोंका क्रमशः प्रसन्नता, ताप तथा दीनता आदि कार्यों द्वारा अनुमान होता है। प्रसाद—प्रसन्नता खुशतबियती, ताप—सन्ताप, जलन, डाह, दैन्य—दीनताके वचन कहनेसे होनेवाली चेहरेकी विषण्णता, विषाद आदि नानाप्रकारके कार्य ही सत्त्व आदि गुणोंके लिंग अर्थात् पहचान करानेवाले चिह्न होते हैं। तात्पर्य यह कि प्रसन्नता, बुद्धिकी पटुता—चतुराई, लाघव—निरभिमानता—चित्तमें घमण्ड न होनेसे हलकापन, प्रसव-प्रजनन, अनभिष्वंग—अनासक्ति, द्वेषरहितता, प्रीति आदि कार्य सत्त्वगुणके चिह्न हैं—अर्थात् इनसे सत्त्वगुणकी पहचान होती है। ताप—जलन, शोष—डाहके कारण हृदय तथा शरीरका सूख जाना, भेद—कूटबुद्धि, चित्तकी चंचलता, स्तम्भ—किसीकी सम्पत्ति देखकर भौंचक्का हो जाना, उद्वेग-रोष आदि रजोगुणके कार्य हैं अर्थात् इनसे रजोगुणका अनुमान होता है। दैन्य—दीनता, मोह—मूढता, अज्ञान, मरण, सादन—दूसरेको बाधा पहुँचाना, बीभत्स—भयानकता, डरावनापन, अज्ञान—मूर्खता या विपरीतज्ञान, अगौरव—स्वाभिमानशून्य होना आदि तमोगुणके कार्य हैं। अर्थात् इनके द्वारा तमोगुणका परिचय होता है। इन कार्योंसे सत्त्वादिगुणोंका अनुमान किया जाता है। जैसे—संसारमें जो सुखी होता है वह आर्जव—सरलता, मार्दव—निरभिमानवृत्ति, कोमलचित्तता, सत्य, शौच—निर्लोभवृत्ति या

---

१. "सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरु वरणकमेव तमः…॥"—सां. का. १३। "त्रैगुण्यम्॥सत्त्वं रजस्तम इति गुणाः भावे ष्यञ्स्त्रैगुण्यम्। प्रसादो लाघवं सङ्गः प्रसङ्गात् प्रीतिरार्जवम्॥ तुष्टिस्तितिक्षा सत्त्वस्य रूपं साक्षात् सुखावहम्। शोकस्तम्भद्वेषतापखेदभोगाभिमानिता॥ रजोरूपाण्यनेकानि बहुदुःखप्रदानि वै। तमो नामाच्छादनादि बीभत्सावरणादि च॥ दैन्यगौरवनिद्रादिप्रमादालस्यलक्षणम्। मोहात्मकमनन्तं तदेवं त्रैगुण्यमीरितम्। सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्तकम्॥ विनाशकं तमो विद्यात् त्रैगुण्यं नाम संज्ञितम्।"—सांख्यसं. पृ. १४। भगवद्गी. १४।६-८। २. तावच्छब्दः अवधारणे (प्रक्रमे) आ.। तावच्छब्दोऽपक्रमे भ. २। ३. -शतितत्त्वेषु भ. २। ४. त्रयमेव ज्ञेयम् आ.। ५. "प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तम इति।"—योगद. व्यासभा. २।१८।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कार्यैः सत्त्वादीनि ज्ञायन्ते। तथाहि—लोके[1] यः कश्चित्सुखमुपलभते स आर्जवमार्दवसत्यशौचह्री[2]-बुद्धिक्षमानुकम्पाप्रसादादिस्थानं भवति, तत्सत्त्वम्। यः कश्चिद्दुःखमुपलभते, स तदा द्वेषद्रोह-मत्सरनिन्दावञ्चनबन्धनतापादिस्थानं भवति, तद्रजः। यः कश्चित्कदापि मोहं लभते, सोऽज्ञानम-दालस्यभयदैन्याकर्मण्यतानास्तिकताविषादोन्मादस्वप्नादिस्थानं भवति, तत्तम इति।

§ ९. सत्त्वादिभिश्च परस्परोपकारिभिस्त्रिभिरपि गुणैः सर्वं जगद्व्याप्तं विद्यते, परमूर्ध्वं-लोके प्रायो देवेषु सत्त्वस्य बहुलता, अधोलोके तिर्यक्षु नारकेषु च तमोबहुलता[3], मध्यलोके मनुष्येषु रजोबहुलता, यद्दुःखप्राया मनुष्या भवन्ति। तदुक्तम्

"ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥१॥ [ सांख्यका. ५४ ]

अत्र ब्रह्मादिस्तम्बपर्यन्त इति ब्रह्मादिपिशाचान्तोऽष्टविधः सर्ग इति ॥३५॥

---

साफ-सुथरा पवित्र रहना, लोकलाज, बुद्धि—हेयोपादेय विवेक, क्षमा, अनुकम्पा—दूसरेको दुःखी देखकर हृदयका कँप जाना—दयालुता, और प्रसन्नता आदिका स्थान होता है। यही तो सात्त्विक अर्थात् सत्त्व गुणप्रधान पुरुषकी पहचान है। लोकमें जो दुःखी होता है उसके मनमें सदा द्वेष, वैर, मत्सर—ईर्षा, निन्दा, ठगना, दूसरेको बन्धन-झगड़ेमें फँसाना, दूसरेके अभ्युदयमें जलना आदि विकार उत्पन्न होते रहते हैं। इन्हीं सब बातोंसे रजोगुणप्रधान राजस पुरुषका परिचय मिलता है। जो व्यक्ति मोही—अज्ञानी होता है वह अज्ञान, घमण्ड, आलस्य, भय, दीनता, अकर्मण्यता, नास्तिकता, धर्म-कर्मसे विमुख होना, विषाद, उन्माद, भीषण स्वप्न आना आदि तामस भावोंका आधार होता है। तामस पुरुष इन्हीं कारणोंसे पहचाना जाता है।

§ ९. एक दूसरेका उपकार करनेवाले परस्पर सापेक्ष इन सत्त्वादि तीन गुणोंसे समस्त जगत् व्याप्त है। परन्तु इतनी विशेषता है कि कहीं सत्त्वगुणकी प्रधानता है तो कहीं रजोगुणको तथा कहीं तमोगुणकी। एककी प्रधानतामें दूसरे गुण गौणरूपसे रहते हैं यही इनकी परस्परोप-कारिता है। ऊर्ध्वलोकमें देवोंमें प्रायः सत्त्वगुणकी बहुलता रहती है। अधोलोकमें तिर्यंच, तथा नारकी जीवोंमें तमोगुणकी प्रचुरता पायी जाती है। मध्यलोकमें मनुष्योंमें रजोगुणकी प्रधानता देखी जाती है। इसीसे मनुष्य प्रायः दुःखी ही अधिक होते हैं। कहा भी है—"ब्रह्मसे लेकर स्तम्ब—स्थावर पर्यन्त यह समस्त सृष्टि ऊर्ध्वलोकमें उत्कृष्ट चैतन्य देवोंमें सत्त्वगुण प्रधान, मूल—अधो-लोकमें अपकृष्ट चैतन्य वाले पशु आदिमें तमोबहुल तथा मध्यलोकमें मध्यम चैतन्ययुक्त मनुष्यादि में रजःप्रधान है। ब्रह्मसे स्तम्भ—स्थावर पर्यन्त समस्त सृष्टिमें ब्राह्म, प्राजापत्य, ऐन्द्र, पैत्र, गान्धर्व, यक्ष, राक्षस तथा पैशाच यह आठ प्रकारकी दैवी सृष्टि है।

---

१. यो हि कश्चित् क्वचित् प्रीतिं लभते तत्र आर्जवमार्दवसत्यशौचह्रीबुद्धिक्षमानुकम्पाज्ञानादि च। तत्सत्त्वं प्रत्येतव्यम्। अप्रीत्यात्मकं रजः। कस्मात्। दुःखलक्षणत्वात्। यो हि कश्चित्कदाचित् क्वचित् अप्रीति-मुपलभते तत्र द्वेषद्रोहमत्सरनिन्दास्तम्भोत्कण्ठानिकृतिवञ्चनाबन्धवधच्छेदनानि च। तद्रजः प्रत्येतव्यम्। विषादात्मकं तमः। कस्मात्। मोहलक्षणत्वात्। यो हि कश्चित् कदाचित् क्वचित् मोहमुपलभते तत्र अज्ञानमदालस्यभयदैन्याकर्मण्यतानास्तिक्यविषादस्वप्नादि च तत्तमः प्रत्येतव्यम्।" —सां. का. माठर. पृ. २१। सांख्यसं. ११। २. –च भी बु—म. १। ३. –ता नरेषु रजो आ., क., प. १, २, म. १।

एतेषां या समावस्था सा प्रकृतिः[1] किलोच्यते ।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥३६॥

§ १०. व्याख्या—एतेषां—सत्त्वादिगुणानां या समा—तुल्यप्रमाणा अवस्था—अवस्थानं, सा सत्त्वादीनां समावस्थैव प्रकृतिरुच्यते। किलेति पूर्ववार्तायाम्। सत्त्वरजस्तमसां गुणानां क्वचिद्देवादौ कस्यचिदाधिक्येऽपि मिश्रः प्रमाणापेक्षया त्रयाणामपि समानावस्था प्रकृतिः कीर्त्यंत इत्यर्थः। प्रधानाव्यक्तशब्दाभ्यां वाच्या। सा च प्रकृतिः प्रधानमव्यक्तं चोच्यते नामान्तराभ्याम्। नित्यम्—अप्रच्युतानुत्पन्नस्थिरैकस्वभावं कूटस्थं स्वरूपं यस्याः सा नित्यस्वरूपिकाविचलितस्वरूपेत्यर्थः। अत एव सानवयवा [2]साधारण्यशब्दास्पर्शारसारूपागन्धाव्यया चोच्यते।

मौलिक्यसांख्या ह्यात्मानमात्मानं प्रति पृथक् पृथक् प्रधानं वदन्ति, उत्तरे तु सांख्याः सर्वात्मस्वप्येकं नित्यं प्रधानमिति प्रतिपन्नाः ॥३६॥

§ ११. प्रकृत्यात्मसंयोगात्सृष्टिर्जायते। अतः सृष्टिक्रममेवाह।

ततः[3] संजायते बुद्धिर्महानिति यकोच्यते ।
अहंकारस्ततोऽपि स्यात्तस्मात्षोडशको गणः ॥३७॥

---

इन गुणोंकी साम्यावस्थाका ही नाम प्रकृतितत्त्व है। इसे प्रधान तथा अव्यक्त शब्दसे भी कहते हैं। प्रकृति नित्य है ॥३६॥

§ १०. इन सत्त्वादि गुणोंकी सम—न्यूनाधिकतासे रहित तुल्य स्थिति ही प्रकृति कही जाती है। 'किल' शब्द पहले कही हुई बातकी ओर संकेत करता है। यद्यपि देव आदिमें सत्त्व, रज और तम इन तीन गुणोंमें-से किसी एक गुणकी अधिकता अर्थात् प्रधानता बतायी है फिर भी प्रमाण अर्थात् मिकदारकी अपेक्षा जब ये तीनों गुण परस्पर समान अवस्थाको प्राप्त होते हैं तब उनकी वह साम्यावस्था प्रकृति कही जाती है। प्रधान और अव्यक्त शब्द प्रकृतिके पर्यायवाची हैं। यह नित्य है। इसके किसी रूपका नाश नहीं होता, इसमें कोई नया स्वभाव उत्पन्न नहीं होता, इसीलिए यह स्थिर एकरूप कूटस्थ नित्य है। नित्यस्वरूपका सीधा अर्थ है अविचलितस्वरूप। नित्य होनेके कारण ही यह निरवयव है, साधारण है, शब्दशून्य है, स्पर्शरहित है, रस, गन्ध तथा रूपसे भी शून्य है। बिलकुल अव्यय—अविनाशिनी है।

मूल सांख्य तो हरएक आत्माके साथ सम्बन्ध रखनेवाले प्रधानको भी जुदा-जुदा मानते हैं। इनके मतसे अनन्त पुरुषोंकी तरह प्रधान-प्रकृति भी अनन्त हैं। पर उत्तरकालीन सांख्य सभी आत्माओंसे सम्बन्ध रखनेवाला एक नित्य ही प्रधान मानते हैं ॥३६॥

§ ११. प्रकृति और आत्माके संयोगसे ही सृष्टि उत्पन्न होती है, अतः सृष्टिक्रमका निरूपण करते हैं—

---

१. "प्रधानं प्रकृतिः अव्यक्तमव्याकृतं चेत्यनर्थान्तरम्।" —सांख्यसू. वि. पृ. १०५। "सा च साम्यावस्थयोपलक्षितसत्त्वादित्रयरूपा।" —सांख्यसं. पृ. २। "प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरजस्तमसां साम्यावस्था।" —सांख्यतत्त्वकौ. का. ३। तत्त्वमी. पृ. १८५। सांख्यसं. पृ. १४। सां. तत्त्वप्र. १५२। २. साधारणा शब्दा म. २। ३. "प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥" "प्रकृतिः प्रधानमधिकुरुते। ब्रह्म अव्यक्तं बहुधानकं मायेति पर्यायाः। तस्याः प्रकृतेर्महानुत्पद्यते प्रथमः कश्चित्। महान्, बुद्धिः, मतिः, प्रज्ञा, संवित्तिः, ख्यातिः, चितिः, स्मृतिरासुरी, हरिः, हरः, हिरण्यगर्भ इति पर्यायाः। ततोऽहंकारः। तस्मान्महतोऽहंकार उत्पद्यते। तस्य इमे पर्यायाः वैकृतस्तैजसो भूतादिरभिमानोऽस्मिता इति।" —सां. का. माठर. पृ. १६।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १२. व्याख्या—ततः प्रकृतेर्बुद्धिः संजायत उत्पद्यते। सा च गवादौ पुरो दृश्यमाने गौरेवायं नाश्वः, स्थाणुरेवायं न पुरुष इति विषयनिश्चयाध्यवसायरूपा महानिति यका प्रोच्यते महदाख्यया याभिधीयते। बुद्धेश्च तस्या अष्टौ रूपाणि[1]। धर्मज्ञानवैराग्यैश्वर्यरूपाणि चत्वारि सात्त्विकानि, अधर्मादीनि तु तत्प्रतिपक्षभूतानि चत्वारि तामसानीति। ततोऽपि—बुद्धेरप्यहंकारः स्यात्—उत्पद्यते। स च—'अहं सुभगः, अहं दर्शनीयः' इत्याद्यभिमानरूपः। तस्मात्—अहङ्कारात्षोडशको गण[2] उत्पद्यते। षोडशसंख्यामानमस्य षोडशको गणः—समुदायः ॥३७॥

§ १३. अथ षोडशसंख्यं गणं श्लोकद्वयेनाह—

[3]स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम्।
पञ्च बुद्धीन्द्रियाण्यत्र तथा कर्मेन्द्रियाणि च ॥३८॥
पायूपस्थवचःपाणिपादाख्यानि मनस्तथा।
अन्यानि पञ्च रूपादितन्मात्राणीति षोडश ॥३९॥युग्मम्॥

§ १४. व्याख्या—स्पर्शनं—त्वक्, रसनं—जिह्वा, घ्राणं—नासिका, चक्षुः—लोचनं, श्रोत्रं च श्रवणं पञ्चमम्—एतानि पञ्च बुद्धीन्द्रियाण्यत्र-षोडशके गणे भवन्ति। स्वं स्वं विषयं बुध्यन्त इति कृत्वेन्द्रियाण्येव बुद्धीन्द्रियाणि प्रोच्यन्ते। तथाहि—स्पर्शनं स्पर्शविषयं बुध्यते, एवं रसनं रसं, घ्राणं गन्धं, चक्षू रूपं, श्रोत्रं च शब्दमिति। तथाशब्दः पञ्चेतिपदस्यानुकर्षणार्थः। पञ्चसंख्यानि

**इस प्रकृतिसे महान्—बुद्धि उत्पन्न होती है। बुद्धिसे अहंकार तथा अहंकारसे सोलह-गणोंकी उत्पत्ति होती है ॥३७॥**

§ १२. इस प्रकृतिसे बुद्धि उत्पन्न होती है। सामने दीखनेवाली गौमें 'यह गौ ही है घोड़ा नहीं है' ठूँठमें 'यह ठूँठ ही है पुरुष नहीं है' इस प्रकारके पदार्थोंका निश्चय करनेवाली बुद्धि ही महान् कही जाती है। 'महान्' यह बुद्धिका ही पर्यायवाची नाम है। इस बुद्धिके आठ रूप होते हैं। धर्म, ज्ञान, वैराग्य और ऐश्वर्य ये चार सात्त्विक रूप हैं तथा अधर्म, अज्ञान, विषयाभिलाष और अनैश्वर्य ये चार तामस रूप हैं। इस बुद्धि—महत्तत्त्वसे 'मैं सुन्दर हूँ मुझे लोग बड़े चावसे देखते हैं—मैं दर्शनीय हूँ' इत्यादि अभिमान रूप अहंकार उत्पन्न होता है। अहंकारसे सोलह गण सोलह पदार्थोंका समुदाय उत्पन्न होता है ॥३७॥

§ १३. इन सोलह गणोंका दो श्लोकोंमें वर्णन करते हैं—

**स्पर्शन, रसन, घ्राण, चक्षु और श्रोत्र ये बुद्धीन्द्रियाँ, मलस्थान, मूत्रस्थान, वचनके उच्चारण करनेके स्थान, हाथ और पैर ये पाँच कर्मेन्द्रियाँ, मन तथा रूप, रस, गन्ध, स्पर्श और शब्द ये पाँच तन्मात्राएँ ये सब मिलकर सोलह गण हैं ॥३८-३९॥**

§ १४. सोलह गणमें स्पर्शन—त्वचा सारा शरीर, रसन—जीभ, घ्राण—नाक, चक्षु—नेत्र, श्रोत्र—कान, ये पाँच ज्ञानेन्द्रियाँ हैं। इनके द्वारा अपने-अपने स्पर्श आदि विषयोंका बोध होता है अतः इन्हें बुद्धीन्द्रिय या ज्ञानेन्द्रिय कहते हैं। जैसे—स्पर्शनेन्द्रियसे स्पर्शका, रसनेन्द्रियसे रसका, नाकसे गन्धका, नेत्रसे रूपका तथा कानसे शब्दका परिज्ञान होता है। 'तथा' शब्द 'पंच'

---

१. "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्। सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥"—सां. का. २३। २. "अभिमानोऽहंकारस्तस्माद् द्विविधः प्रवर्तते सर्गः। ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चैव ॥"—सां. का. २४। ३. "बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुरसननासिकाख्यानि। वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥ उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात्। गुणपरिणामविशेषान्नानात्वं बाह्यभेदाच्च।"—सां. का. २६।२७।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कर्मकारणत्वात्कर्मेन्द्रियाणि च । कानि तानीत्याह—पायूपस्थवचःपाणिपादाख्यानि । तत्र पायुर्गुदं, उपस्थः—स्त्रीपुंश्चिह्नद्वयं, वच्यतेऽनेनेति वचः, उरःकण्ठादिस्थानाष्टतया वचनमुच्चारयति, पाणी पादौ च प्रसिद्धौ, एतैर्मलोत्सर्गसंभोगवचनादानचलनादीनि कर्माणि सिध्यन्तीति कर्मेन्द्रियाण्युच्यन्ते । तथाशब्दः समुच्चये । एकादशं मनश्च, मनो हि बुद्धीन्द्रियमध्ये बुद्धीन्द्रियं भवति, कर्मेन्द्रियमध्ये कर्मेन्द्रियम्, तच्च तत्त्वार्थमन्तरेणापि संकल्पवृत्ति । तद्यथा—कश्चिद्वटुः शृणोति "ग्रामान्तरे भोजनमस्ति" इति, तत्र तस्य संकल्पः स्यात् "तत्र यास्यामि तत्र चाहं किं गुडदधिरूपं भोजनं लप्स्य उतश्विद्दधि किं वा किमपि न" इत्येवंरूपं मन इति । तथाहंकारादन्यान्यपराणि रूपादि[2] तन्मात्राणि सूक्ष्मसंज्ञानि पञ्चोत्पद्यन्ते । तत्र रूपतन्मात्रं शुक्लकृष्णादिरूपविशेषः, रसतन्मात्रं तिक्तादिरसविशेषः, गन्धतन्मात्रं सुरभ्यादिगन्धविशेषः, शब्दतन्मात्रं मधुरादिशब्दविशेषः, स्पर्शतन्मात्रं मृदुकठिनादिस्पर्शविशेषः, इति षोडश । अयं षोडशको गण इत्यर्थः ॥३८-३९॥

§ १५. अथ तन्मात्रेभ्यः पञ्चभूतान्युत्पद्यन्त इत्याह—

[3]रूपात्तेजो रसादापो गन्धाद् भूमिः स्वरान्नभः ।
स्पर्शाद्वायुस्तथैवं च पञ्चभ्यो भूतपञ्चकम् ॥४०॥

§ १६. व्याख्या—रूपतन्मात्रात्सूक्ष्मसंज्ञात्तेजोऽग्निरुत्पद्यते, रसतन्मात्रादापो जलानि जायन्ते,

---

पदके आकर्षणके लिए है । ज्ञानेन्द्रियोंकी तरह कर्मेन्द्रियाँ भी पाँच हैं । पायु–गुदा, उपस्थ–स्त्री और पुरुषके चिह्न अर्थात् योनि और लिङ्ग, वचन अर्थात् जिनके द्वारा वचनोंका उच्चारण होता है ऐसे हृदय कण्ठ आदि आठ स्थान, पाणि—हाथ और पाद—पैर ये पाँच कर्मेन्द्रियाँ हैं । इनसे मलोत्सर्ग, मूत्रोत्सर्ग और सम्भोग, वचन, वस्तुओंका रखना-उठाना, तथा चलना आदि क्रियाएँ होती हैं, इसी लिए इन्हें कर्मेन्द्रियाँ कहते हैं । 'तथा' शब्द समुच्चयार्थक है । ग्यारहवाँ मन है । मन बुद्धीन्द्रियोंके साथ बुद्धीन्द्रियरूप तथा कर्मेन्द्रियोंके साथ कर्मेन्द्रिय रूप हो जाता है । यह मन वास्तविक अर्थकी स्थितिके बिना भी मात्र संकल्पात्मक होता है । जैसे—किसी बटुक—ब्राह्मण शिष्यने सुना कि—'आज दूसरे गाँवमें भोजनके लिए निमन्त्रण आया है' वह विचारता है कि—उस गाँवमें जायेंगे, तो वहाँ गुड़ और दही दोनों मिलेंगे, या केवल दही, अथवा दही और गुड़ दोनों ही न मिलेंगे, ऐसे संकल्प भी मन कहलाता है । अहंकारसे रूपादि पाँच सूक्ष्म संज्ञक तन्मात्राएँ उत्पन्न होती हैं । सफेद-काला आदि रूप विशेषको रूपतन्मात्रा कहते हैं, तीता-मीठा आदि रसको रसतन्मात्रा, सुगन्ध तथा दुर्गन्धको गन्धतन्मात्रा, मधुर आदि शब्दोंको शब्दतन्मात्रा तथा कोमल-कठिन आदि स्पर्शोंको स्पर्शतन्मात्रा कहते हैं । इस तरह पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, मन तथा पाँच तन्मात्राएँ ये सोलहगण कहलाते हैं ॥३८-३९॥

§ १५. तन्मात्राओंसे पाँच भूतोंकी उत्पत्तिका वर्णन करते हैं—

**रूपसे अग्नि, रससे जल, गन्धसे पृथिवी, शब्दसे आकाश तथा स्पर्शसे वायु इस प्रकार पाँच तन्मात्राओंसे पाँच भूतोंकी उत्पत्ति होती है ॥४०॥**

§ १६. सूक्ष्म संज्ञक रूप तन्मात्रासे अग्नि उत्पन्न होती है । रस तन्मात्रासे जलका आविर्भाव

---

१. –श्चयी वचन—आ. क. । २. –रूपाणि तन्मा—प. १, २, म. १, २, क. । ३. "तत्र शब्दतन्मात्रादाकाशं, स्पर्शतन्मात्राद् वायुः, रूपतन्मात्रात्तेजः, रसतन्मात्रादापः, गन्धतन्मात्रात्पृथिवी इत्यादिक्रमेण पूर्वपूर्वानुप्रवेशेनैकद्वित्रिचतुष्पञ्चगुणानि आकाशादिपृथ्वीपर्यन्तानि महाभूतानीति सृष्टिक्रमः ।" —सां. का. माठर. पृ. ३० ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

गन्धतन्मात्रात्पृथिवी समुत्पद्यते, स्वराच्छब्दतन्मात्रादाकाशमुद्भवति, तथा स्पर्शतन्मात्राद्वायुः प्रादुर्भवति, एवं च पञ्चभ्यस्तन्मात्रेभ्यो भूतपञ्चकं भवतीति ॥४०॥

एवं चतुर्विंशतितत्त्वरूपं निवेदितं सांख्यमते प्रधानम् ।
अन्यस्त्वकर्ता विगुणश्च भोक्ता तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥४१॥

§ १७. व्याख्या—एवममुनोक्तप्रकारेण सांख्यमते चतुर्विंशतितत्त्वरूपं प्रधानम् । प्रकृतिर्महानहंकारश्चेति त्रयं पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, मनश्चैकं, पञ्च तन्मात्राणि, पञ्च भूतानि चेति चतुर्विंशतितत्त्वानि रूपं स्वरूपं यस्य तच्चतुर्विंशतितत्त्वरूपं प्रधानं प्रकृतिर्निवेदितम् । तथा चोक्तम् "प्रकृतेर्महांस्ततोऽहंकारस्तस्माद् गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥" [ सांख्यका. ३३ ] इति ।

§ १८. अत्र प्रकृतिर्न विकारः, अनुत्पन्नत्वात् । बुद्ध्यादयश्च सप्त परेषां कारणतया प्रकृतयः, कार्यतया च[2] विकृतय उच्यन्ते । षोडशकश्च गणो विकृतिरेव कार्यत्वात् । पुरुषस्तु न प्रकृतिर्न विकृतिः, अनुत्पादकत्वादनुत्पन्नत्वाच्च । तथा चेश्वरकृष्णः सांख्यसप्तत्तौ—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥१॥ [ सांख्यका. ३ ] इति ।

§ १९. तथा महदादयः प्रकृतेर्विकारास्ते च व्यक्ताः सन्तः पुनरव्यक्ता अपि भवन्तीति

---

होता है । गन्धतन्मात्रासे पृथिवीकी समुत्पत्ति होती है । स्वरशब्दतन्मात्रासे आकाशका प्रादुर्भाव होता है । स्पर्शतन्मात्रासे वायुका जन्म होता है । इस प्रकार पाँच सूक्ष्म संज्ञक-तन्मात्राओंसे पाँच स्थूल भूतोंकी उत्पत्ति होती है ॥४०॥

**इस प्रकार सांख्यमतमें चौबीस तत्त्वरूप प्रधान नामके मूलतत्त्वके स्वरूपका निरूपण किया गया है । प्रधानसे भिन्न पुरुषतत्त्व है । यह अकर्ता, निर्गुण, भोक्ता तथा नित्य चेतन है ॥४१॥**

§ १७. इस तरह सांख्यमतमें प्रकृति आदि चौबीस तत्त्वरूपमें परिणत होनेवाला प्रधान तत्त्व है । स्वयं प्रकृति, महान् और अहंकार ये तीन, पाँच बुद्धीन्द्रियाँ, पाँच कर्मेन्द्रियाँ, मन, पाँच तन्मात्राएँ तथा पाँच भूत ये चौबीस तत्त्व हैं, जिन रूपोंमें प्रधान अपना विस्तार दिखाता है । कहा भी है—"प्रकृतिसे महान्, महान्से अहंकार, अहंकारसे सोलहगण तथा सोलहगणके अन्तर्गत पाँच तन्मात्राओंसे पाँच महाभूत उत्पन्न होते हैं ।"

§ १८. इनमें प्रकृति किसीका विकार अर्थात् कार्य नहीं है, क्योंकि वह किसीसे उत्पन्न नहीं होती । महान् अहंकार और पाँच तन्मात्राएँ ये सात कार्योंके उत्पादक होनेसे प्रकृति अर्थात् कारणरूप हैं तथा कारणोंसे उत्पन्न कार्यरूप होनेसे विकृति भी है । सोलह गण मात्र विकृति-रूप ही हैं क्योंकि वे कार्य हैं । पुरुष तो न किसीको उत्पन्न करता है और न किसीसे उत्पन्न ही होता है अतः वह न प्रकृति—कारण है और न विकृति—कार्यरूप ही है । ईश्वरकृष्णने सांख्यसप्ततिमें कहा है—"मूलप्रकृति अविकृति अर्थात् अकार्य है, किसीसे उत्पन्न नहीं होती । महान् आदि सात कार्यरूप होनेसे विकृति हैं तथा उत्पादक होनेसे प्रकृतिरूप भी हैं । सोलह गण मात्र विकाररूप ही हैं । पर पुरुष न प्रकृति—कारण ही है और न विकृति—कार्यरूप ही ।" इति ।

§ १९. महान् आदि व्यक्त होकर भी अव्यक्त हो जाते हैं । इस तरह अपने स्वरूपसे च्युत

---

१. "तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ —सां. का. १९ । २. —या वि—म. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्वरूपाद्भ्रश्यन्त्यनित्यत्वात्[1]। प्रकृतिस्त्वविकृता नित्याभ्युपगम्यते। ततो न कदाचिदपि सा[2] स्वस्वरूपाद् भ्रश्यति। तथा च महदादिकस्य प्रकृतेश्च[3] स्वरूपं सांख्यैरित्थमूचे।

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं, व्यक्तं विपरीतमव्यक्तम् ॥२॥" [ सांख्यका. २० ] इति।

§ २०, तत्र हेतुमत्कारणवन्महदादिकम्, अनित्यमित्युत्पत्तिधर्मकत्वाद्बुद्धयादेः,[4] अव्यापीति प्रतिनियतं न सर्वगं, सक्रियमिति सह क्रियाभिरध्यवसायादिभिर्वर्तत इति सक्रियं—सव्यापारं संचरणक्रियावदिति यावत्, अनेकमिति त्रयोविंशतिभेदात्मकं, आश्रितमित्यात्मोपकारकत्वेन प्रधानमवलम्ब्य स्थितं, लिङ्गमिति यद्यस्मादुत्पन्नं तत्तस्मिन्नेव[5] लयं क्षयं गच्छतीति लिङ्गम्। तत्र भूतानि तन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि मनश्चाहंकारे, स च बुद्धौ, सा चाव्यक्ते, तच्चानुत्पाद्यत्वान्न क्वचित्प्रलीयते। सावयवमिति शब्दस्पर्शरूपरसगन्धात्मकैरवयवैर्युक्तत्वात्, परतन्त्रमिति कारणायत्तत्वादित्येवंरूपं व्यक्तं महदादिकम्। अव्यक्तं तु प्रकृत्याख्यम्, एतद्विपरीतमिति। तत्र विपरीतता सुयोज्यैव। नवरं प्रधानं दिवि भुव्यन्तरिक्षे च सर्वत्र व्यापितया वर्तत इति व्यापित्वं तस्य, तथाव्यक्तस्य व्यापकत्वेन संचरणरूपायाः क्रियाया अभावान्निष्क्रियत्वं च द्रष्टव्यमिति दिङ्मात्रमिदं दर्शितम्। विशेषव्याख्यानं तु सांख्यसप्तत्यादेस्तच्छास्त्रादवसेयमिति।

---

होनेके कारण ये अनित्य हैं। प्रकृति तो कभी भी विकार—कार्यरूप नहीं होती, प्रकृति तो सदा प्रकृति अर्थात् कारण ही बनी रहती है अतः यह नित्य है। वह कभी भी अपने प्रकृति स्वरूपसे च्युत नहीं होती। महदादिक व्यक्त तथा प्रकृतिका स्वरूप सांख्योंने इस प्रकार कहा है—"व्यक्त-कार्य हेतुमत्—सकारण, अनित्य, अव्यापि, सक्रिय, अनेक, आश्रित—कारणाश्रित, लिङ्ग—कारणमें लीन होनेवाला, सावयव तथा परतन्त्र होता है। अव्यक्त कारण इससे विपरीत होता है।"

§ २०. महदादि व्यक्त सकारण हैं कारणोंसे उत्पन्न होते हैं, उत्पन्न होनेके कारण ही अनित्य हैं, अव्यापि—प्रतिनियत देशवर्ती हैं, सर्वगत नहीं हैं, सक्रिय—अध्यवसाय आदि क्रियाओंको करनेके कारण सव्यापार संचरण हैं, आदि क्रियाएँ करते हैं। तेईस भेदरूप होनेसे अनेक हैं, आश्रित भोगमें निमित्त होनेके कारण आत्माके उपकारक होनेसे प्रधानरूप कारणके आधीन हैं। लिङ्ग—जो जिससे उत्पन्न होता है वह प्रलयकालमें उसीमें लीन हो जाता है अतः ये लयं गच्छति—कारण-में लीन होनेके कारण लिंग रूप हैं। लयका क्रम इस प्रकार है—महाभूत अपने कारणरूप तन्मा-त्राओंमें लीन होते हैं। तन्मात्राएँ, दस इन्द्रियां और मन ये सोलहगण अपने कारण अहंकारमें लीन हो जाते हैं। अहंकार महान्—बुद्धिमें तथा बुद्धि अव्यक्त—प्रकृतिमें लीन हो जाती है। प्रकृति स्वयं किसीसे उत्पन्न नहीं हुई अतः उसका कहीं भी लय नहीं होता। व्यक्त सावयव—शब्द, स्पर्श, रूप, रस, गन्धादि अवयवोंसे युक्त होता है, परतन्त्र कारणोंके आधीन रहता है। महदादि व्यक्त—पूर्वोक्त हेतुमत्त्व आदि धर्मोंवाला है। अव्यक्त—प्रकृति ठीक इससे उलटी है, वह किसीसे उत्पन्न नहीं होती है, नित्य हैं, व्यापी है, निष्क्रिय है, एक है, अनाश्रित है, किसीमें लीन नहीं होनेसे अलिंग है, निरवयव है, तथा स्वतन्त्र है। प्रधान स्वर्ग आकाश पृथिवी आदि सभी स्थानोंमें व्यापीरूपसे रहता है इसलिए वह सर्वगत अव्यक्त—प्रधान सर्वव्यापी होनेसे उसमें कोई संचरण आदि क्रियाएँ भी नहीं हो सकतीं इसीलिए वह निष्क्रिय है। यहाँ तो इनका संक्षिप्त स्वरूप ही दिखाया गया मात्र दिशासूचन किया है। इनका विशेष व्याख्यान तो सांख्यसप्तति आदि सांख्यशास्त्रोंसे जान लेना चाहिए।

---

१. -ति स्वस्वरू—आ.। २. सा स्वरूपा—मा. २, प. २। ३. -तेः स्वस्व—म. २। ४. -द् बुद्धया-दिवत् अव्या—म. २। ५. विलयं म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २१. अथ पञ्चविंशतितमं पुरुषतत्त्वमाह—"अन्यस्त्वकर्ता" इत्यादि। प्रकृतेश्चतुर्विंशतितत्त्वरूपाया अन्यस्तु पृथग्भूतः, पुनरकर्ता विगुणो भोक्ता नित्यचिदभ्युपेतश्च पुमान्पुरुषस्तत्त्वम्। तत्रात्मा विषयसुखादिकं तत्कारणं पुण्यादिकर्म च न करोतीत्यकर्ता, आत्मनस्तृणमात्रकुब्जीकरणेऽप्यसमर्थत्वात्। कर्त्री तु प्रकृतिरेव, तस्याः प्रवृत्तिस्वभावत्वात्। तथा विगुणः सत्त्वादिगुणरहितः, सत्त्वादीनां प्रकृतिधर्मत्वादात्मनश्च तदभावात्।

§ २२. तथा भोक्ता अनुभविता। भोक्तापि साक्षान्न भोक्ता, किं तु प्रकृतिविकारभूतायां द्व्युभयमुखदर्पणाकारायां बुद्धौ संक्रान्तानां सुखदुःखादीनां पुरुषः स्वात्मनि निर्मले प्रतिबिम्बोदयमात्रेण भोक्ता[3] व्यपदिश्यते, "बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते [ ] इति वचनात्[4]।

§ २१. अब पचीसवें पुरुषतत्त्वका निरूपण करते हैं—पुरुष—आत्मा प्रकृति आदि चौबीस तत्त्वोंसे भिन्न है, अकर्ता है, निर्गुण है, भोक्ता है तथा नित्य चैतन्यशाली है। आत्मा विषय सुख आदिको तथा इनके कारण पुण्य आदि कर्मोंको नहीं करता इसलिए वह अकर्ता है। आत्मामें एक तिनकेको भी टेढ़ा करनेकी सामर्थ्य नहीं है। करने-धरनेवाली तो प्रकृति है। क्योंकि प्रकृतिका ही प्रवृत्ति करना यह स्वभाव है। पुरुष सत्त्वादिगुणोंसे सर्वथा रहित है। क्योंकि सत्त्वादि तो प्रकृतिके धर्म हैं वे आत्माके धर्म नहीं हो सकते।

§ २२. आत्मा भोक्ता—भोगनेवाला है, वह अनुभव करता है। किन्तु विषयोंको साक्षात् नहीं भोगता किन्तु प्रकृतिके विकाररूप बुद्धिदर्पणमें सुख-दुःखादि विषय प्रतिबिम्बित होते हैं। यह बुद्धिदर्पण दुतरफा पारदर्शी दर्पण है इसमें दोनों ओर प्रतिबिम्ब झलकता है। अतः बुद्धिदर्पणमें प्रतिबिम्बित सुख-दुःखादिकी छाया अत्यन्त निर्मल पुरुषमें पड़ती है। पुरुषके स्वच्छ स्वरूपमें बुद्धिप्रतिबिम्बित सुख-दुःखादिकी छाया पड़ना ही पुरुषका भोग है और ऐसे ही भोगके कारण पुरुष भोक्ता कहा जाता है। "बुद्धिके द्वारा अध्यवसित अर्थोंका पुरुष अनुभव करता है" यह पुरातन आचार्योंका कथन है। जैसे जपाकुसुम आदि रंगीली वस्तुके सन्निधानसे स्वच्छ स्फटिक भी लाल आदि रंगवाला कहा जाता है ठीक उसी तरह प्रकृतिके संसर्गके कारण स्वच्छ पुरुषमें भी सुख-दुःखादिके भोक्तृत्वका व्यपदेश हो जाता है। वादमहार्णवका भी मत है कि—बुद्धिरूपी दर्पणमें

१. -कर्त्तेति प्र—भ. २। २. -दिरहि—भ २। ३. "सते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥३६॥····बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च संकल्प्य अहंकारस्य अहंकारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्। सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः। सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम्॥३७॥ बुद्धिर्हि पुरुषसन्निधानात् तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति···॥" सांख्यका. ॥३६,३७॥ "इन्द्रियप्रणालिकया अर्थसंनिकर्षेण लिङ्गज्ञानादिना वा आदौ बुद्धेरर्थाकारा वृत्तिर्जायते···।" स्मृतिरपि—"तस्मिंश्चिद् दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥"—सांख्यप्र. भा. २।८७। "बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः तथा च दृशिच्छायापन्ना बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः। योगसू. तत्त्ववैशा. २।२०। "भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्तासंकीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते।"—योगसू. व्यासभा. २।१। "यच्च तत्रैव विन्ध्यवासिनो भाष्यम्—भोक्तृभोग्यशक्त्यो····।—न्यायवि. वि. प्र. पृ. २३१। "अमेव च तस्य भोगो यत्तत्र छायासंक्रमणसामर्थ्यम् इति च तन्निबन्धनकारस्य।"—न्यायवि. वि. प्र. पृ. २३४। "तस्मिंश्चिद्दर्पणे स्फारे समस्ताः वस्तुदृष्टयः। इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ यथा संलक्ष्यते रक्तः केवलस्फटिको जनैः। रञ्जकाद्युपधानेन तद्वत्परमपूरुषः—इत्यादिस्मृतिशतैरपीति।" —यो. वा. पृ. २२। ४. उद्धृतमिदम्—त. श्लो. पृ. ५०। प्रमेयक. पृ.। न्यायकु. पृ. १९०। न्यायवि. वि. प्र. पृ. २३५। स्या. रत्ना. पृ. २३३।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

यथा जपाकुसुमादिसंनिधानवशात्स्फटिके रक्ततावि व्यपदिश्यते, तथा [1]प्रकृत्युपधानवत्त्वात्सुख-दुःखाद्यात्मकानामर्थानां पुरुषस्य भोजकत्वं युक्तमेव व्यपदिश्यते ।

वादमहार्णवोऽप्याह–"बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंस्यध्यारोहति, तदेव भोक्तृत्वमस्य, न[2] त्वात्मनो विकारापत्तिः ।" [ ] इति

तथा चासुरिः–

"विविक्तेदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥१॥"

व (वि)न्ध्यवासी त्वेवं भोगमाचष्टे–

"पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् ।
मनः करोति सांनिध्यादुपाधिः (धेः) स्फटिकं यथा ॥२॥" इति ।

§ २३. तथा नित्या या चिच्चेतना तयाभ्युपेतः, एतेन पुरुषस्य चैतन्यमेव स्वरूपं, न तु ज्ञानं, ज्ञानस्य बुद्धिधर्मत्वादित्यावेदितं द्रष्टव्यम् । केवलमात्मा स्वं बुद्धेरव्यतिरिक्तमभिमन्यते, सुखदुःखादयश्च विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति, बुद्धिश्चोभयमुखदर्पणाकारा, ततस्तस्यां चैतन्यशक्तिः [3]प्रतिबिम्बते, ततः सुख्यहं दुःख्यहं ज्ञाताहमित्युपचर्यते । आह च पतञ्जलिः[4]–

"शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासते" [ योगभा. २।२० ] इति ।

आये हुए पदार्थोंके प्रतिबिम्बका स्वच्छपुरुषरूपी द्वितीय दर्पणमें प्रतिफलित होना–झलकना ही सुख-दुःखादिका भोग है तथा उस प्रतिबिम्बका पड़ना ही पुरुषका भोक्तृत्व है । इस प्रतिबिम्बप्रतिफलनरूप भोगको छोड़कर आत्मामें कोई दूसरे प्रकारका भोक्तृत्व नहीं है । आत्मामें किसी भी तरह इसके कारण विकार नहीं होता ।" आसुरि आचार्यने भी कहा है कि–"जिस प्रकार स्वच्छ जलमें चन्द्रमाके प्रतिबिम्बका उदय होता है उसी तरह बुद्धिसे भिन्न चैतन्यका बुद्धिमें प्रतिबिम्ब पड़ना ही भोग है । चन्द्रका प्रतिबिम्ब जैसे जलका ही विकार है चन्द्रमाका नहीं है उसी प्रकार बुद्धिमें पड़ा हुआ पुरुषका प्रतिबिम्ब भी बुद्धिका ही विकार है आत्माका नहीं । यही आत्मा का भोग है ।"

विन्ध्यवासीने तो भोगका स्वरूप इस प्रकार बताया है–"पुरुष तो स्वरूपसे सर्वथा अविकारी है, परन्तु अचेतन मन संसर्गके कारण पुरुषके स्वच्छस्वरूपमें प्रतिफलित होकर उसे अपने आकारवाला बना देता है । जैसे कि–जपाकुसुम आदि उपाधियाँ स्वच्छस्फटिकको अपने समान लाल, नीला या पीला बना देती हैं ।"

§ २३. नित्य चेतनत्व ही पुरुषका यथार्थ स्वरूप है । इस विशेषणसे यह स्पष्ट सूचित होता है कि–चैतन्य ही पुरुषका स्वरूप है, ज्ञान नहीं । ज्ञान तो बुद्धिका धर्म है । हाँ, आत्मा अपनेसे सर्वथा भिन्नकी भी बुद्धिको अभिन्न अवश्य मान बैठता है । सुख-दुःख आदि विषय इन्द्रियोंके द्वारा बुद्धि तक आते हैं, बुद्धि उभयतः पारदर्शी दर्पणके समान है । अतः उसमें जिस प्रकार एक ओर सुख-दुःखादिका प्रतिबिम्ब पड़ता है उसी तरह उसमें दूसरी ओर पुरुषके चैतन्यका भी प्रतिबिम्ब पड़ता है । बस, बुद्धिरूपी माध्यममें चैतन्य और विषयका युगपत् प्रतिबिम्ब पड़नेसे ही पुरुष अपनेको 'मैं ज्ञाता हूँ, मैं भोक्ता हूँ' आदि मानने लगता है । पतंजलिने भी कहा है कि–"पुरुष तो सर्वतः शुद्ध है, वह बौद्ध–बुद्धि सम्बन्धी प्रत्यय अर्थात् ज्ञानवृत्तिको देखता है । उस बुद्धि सम्बन्धी

१. प्रकृतिप्रधा–म. २ । २. न ह्यात्म–भ. २ । ३. प्रतिबिम्बति–भ. २ । ४. "शुद्धोऽप्यसौ प्रत्ययानुपश्यो यतः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्मापि–तदात्मक इव प्रत्यवभासते ।" –यो. भा. २।२० ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"बुद्धिश्चाचेतनापि चिच्छक्तिसंनिधानाच्चेतनावतीवावभासते" इति ।

§ २४. पुमानित्यत्र जात्यपेक्षयैकवचनम्, तेनात्माऽनेकोऽभ्युपगन्तव्यः, जन्ममरणकरणानां नियमदर्शनाद्धर्मादिप्रवृत्तिनानात्वाच्च । ते च[1] सर्वेऽप्यात्मनः सर्वगता नित्याश्चावसेयाः । उक्तं च—

"अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः ।
अकर्ता निर्गुणः सूक्ष्म आत्मा कापिलदर्शने ॥१॥" इति ॥४१॥

§ २५. तत्त्वान्युपसंहरन्नाह—

पञ्चविंशतितत्त्वानि संख्ययैवं भवन्ति च ।
प्रधाननरयोश्चात्र वृत्तिः पङ्ग्वन्धयोरिव[2] ॥४२॥

§ २६. व्याख्या—चकारो भिन्नक्रमः, एवं च संख्यया पञ्चविंशतितत्त्वानि भवन्ति । ननु प्रकृतिपुरुषावुभावपि सर्वगतौ मिथःसंयुक्तौ कथं वर्त्तेते इत्याशङ्क्याह—'प्रधानेत्यादि' । प्रधानपुरुषयोश्चात्र विश्वे पङ्ग्वन्धयोरिव वृत्तिर्वर्तनम् । यथा कश्चिदन्धः सार्थेन समं पाटलिपुत्रनगरं प्रस्थितः, स सार्थश्चौरैरभिहतः । अन्धस्तत्रैव रहित इतश्चेतश्च धावन् वनान्तरपङ्गुना दृष्टोऽभिहितश्च 'भो भो अन्ध मा भैषीः, अहं पङ्गुर्गमनादिक्रियाविकलत्वेनाक्रियश्चक्षुर्भ्यां सर्वं पश्यन्नस्मि,

---

प्रत्ययको देखनेके कारण ही वह अतदात्मक अर्थात् ज्ञातृत्वादि धर्मोंसे शून्य होकर भी तदात्मक अर्थात् बुद्ध्यात्मक ज्ञाता आदि रूपसे प्रतिभासित होने लगता है ।" बुद्धि स्वयं अचेतन है, परन्तु पुरुषकी चैतन्यशक्तिका सन्निधान होनेसे चेतनावाली मालूम होने लगती है ।"

§ २४. श्लोकमें 'पुमान्' इस एकवचनका प्रयोग पुरुषत्व जातिकी अपेक्षासे है । व्यक्तिरूपसे तो पुरुष अनेक हैं । एक पुरुष उत्पन्न होता है उसी समय दूसरा मरता है, हरएककी बुद्धि आदि जुदी-जुदी हैं, एक सुखी है तो दूसरा दुःखी देखा जाता है, इत्यादि प्रतिनियत पुण्य-पाप आदि की व्यवस्थासे स्पष्ट मालूम होता है कि पुरुष अनेक हैं, एक नहीं । ये सभी आत्मा सर्वगत तथा नित्य हैं । कहा भी है—"सांख्य दर्शनमें आत्मा अमूर्त है, चेतन, भोक्ता, नित्य, सर्वगत, निष्क्रिय, अकर्ता, निर्गुण तथा सूक्ष्म है ।" इति ॥४१॥

§ २५. अब तत्त्वनिरूपणका उपसंहार करते हैं—

**इस प्रकार गिनती करनेपर कुल पचीस तत्त्व होते हैं । प्रधान और पुरुष दोनोंका सम्बन्ध तो अन्धे और लँगड़े जैसा है ॥४२॥**

चकार भिन्नक्रम है । अतः 'एवं' के बाद उसका अन्वय होता है । इस तरह संख्यासे अर्थात् गिनती करनेपर पचीस तत्त्व होते हैं ।

शंका—प्रकृति और पुरुष दोनों ही सर्वगत हैं अतः वे परस्पर संयुक्त होकर किस ढंगसे रहते हैं ?

समाधान—इस विश्वमें प्रधान और पुरुषका संयोग तो अन्धे और लँगड़ेके समान है । जैसे—एक अन्धा सार्थ—व्यापारी यात्रीके साथ पाटलिपुत्र—पटनेकी ओर रवाना हुआ । मार्ग बीहड़ था । लुटेरोंने सार्थको मार डाला । बेचारा अन्धा अपने साथीके वियोगसे तथा मार्ग नहीं सूझनेके कारण विकल हो उस भयानक जंगलमें इधर-उधर भटकने लगा । वहीं एक लँगड़ा दृष्टिसम्पन्न होकर भी चलनेकी शक्ति न होनेके कारण पड़ा हुआ था । उसने उस भटकते हुए अन्धेको देखकर कहा—'हे भाई अन्धे, मत डरो, मैं कहता हूँ सो सुनो, मैं लँगड़ा हूँ सब कुछ देखता हूँ

---

१. ते सर्वे—म. २ । २. "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥"—सांख्य. का. २१ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

त्वं तु गमनादिक्रियावान्न [1]पश्यसि'। ततो अन्धेनोचे—'रुचिरमिदम्, अहं भवन्तं स्कन्धे करिष्यामि, एवमावयोर्वर्तनमस्तु' इति। ततोऽन्धेन पङ्गुर्द्रष्टृत्वगुणेन स्वं स्कन्धमधिरोपितो नगरं प्राप्य नाटकादिकं पश्यन् गीतादिकं चेन्द्रियविषयमन्यमप्युपलभ्यमानो यथा मोदते, तथा पङ्गुकल्पः शुद्धचैतन्यस्वरूपः पुरुषोऽप्यन्धकल्पां जडां प्रकृतिं सक्रियामाश्रितो बुद्धचध्यवसितं शब्दादिकं स्वात्मनि प्रतिबिम्बितं चेतयमानो मोदते, मोदमानश्च प्रकृतिं सुखस्वभावां मोहान्मन्यमानः संसारमधिवसति ॥४२॥

§ २७. तर्हि तस्य कथं मुक्तिः स्यादित्याह—

**प्रकृतिवियोगो मोक्षः पुरुषस्य बतैतदन्तरज्ञानात् ।**
**मानत्रितयं चात्र प्रत्यक्षं लैङ्गिकं शाब्दम् ॥४३॥**

§ २८. व्याख्या—बतेति पृच्छकानामामन्त्रणे, एतयोः प्रकृतिपुरुषयोर्यदन्तरं विवेकस्तस्य ज्ञानात्पुरुषस्य यः प्रकृतेर्वियोगो भवति, स मोक्षः। तथाहि—

"शुद्धचैतन्यरूपोऽयं पुरुषः परमार्थतः।
प्रकृत्यन्तरमज्ञात्वा मोहात्संसारमाश्रितः ॥१॥"

ततः प्रकृतेः सुखदुःखमोहस्वभावाया यावन्न विवेकेन ग्रहणं तावन्न मोक्षः, प्रकृतेर्विवेकदर्शने तु प्रवृत्तेरुपरतायां प्रकृतौ पुरुषस्य स्वरूपेणावस्थानं मोक्ष इति। मोक्षश्च बन्धविच्छेदाद्भवति,

---

पर चलनेकी ताकत न होनेसे पड़ा हूँ, तुम चल तो सकते हो पर देख नहीं पाते' यह सुनते ही अन्धा खुशीके मारे उछल पड़ा और बोला—'अरे, बड़ा अच्छा हुआ, मैं अपने कन्धेपर तुम्हें बैठा लेता हूँ, बस हम-तुम दोनोंका काम चल जायगा।' इस तरह अन्धेने लँगड़ेको द्रष्टा होनेके कारण अपने कन्धेपर बिठाया और अन्धा उसे देश-देशमें घुमाने लगा। लँगड़ा नगरमें पहुँचा। वहाँ वह नाटक देखकर, गाना सुनकर तथा अन्य इन्द्रियोंके विषयों का यथेष्ट अनुभवन कर जिस प्रकार खुश होता है कि इसी तरह क्रियाशक्तिसे विकल-अकर्ता शुद्ध चैतन्य स्वरूपी यह लँगड़ा पुरुष अन्धेके समान सक्रिय सब कुछ करने-धरनेवाली जड़ प्रकृतिके कन्धेपर चढ़कर अर्थात् प्रकृतिका संसर्ग पाकर बुद्धिके द्वारा अध्यवसित शब्दादि विषयोंको, जो अपने स्वच्छ स्वरूपमें प्रतिबिम्बित हो रहे हैं, अनुभव करता हुआ खुश हो रहा है। और इस खुशीमें वह अज्ञानके कारण प्रकृतिको ही सुखरूप मान बैठता है और इसीलिए उस अन्धी प्रकृतिके कन्धेपर चढ़ा हुआ संसार-परिभ्रमण करता रहता है। जैसे कि लँगड़ा अन्धे पुरुषके संसर्गको सुखरूप मान उसे कभी भी नहीं छोड़ना चाहता उसी तरह पुरुष भी प्रकृतिसंसर्ग को ही सब कुछ मानकर मोहके कारण उसे छोड़ना नहीं चाहता और संसारमें रहता है ॥ ४२ ॥

§ २७. तब पुरुष की मुक्ति कैसे होगी ? इसका उत्तर देते हैं—

**प्रकृतिके वियोगका नाम मोक्ष है। यह प्रकृति तथा पुरुष में भेद विज्ञान रूप तत्त्वज्ञानसे होता है। सांख्यमतमें प्रत्यक्ष, अनुमान तथा आगम ये तीन प्रमाण हैं ॥ ४३ ॥**

§ २८. 'बत' शब्द पूछनेवालेका ध्यान खींचनेके लिए है। प्रकृति और पुरुष में भेदज्ञान होनेसे जो प्रकृतिका वियोग होता है वही मोक्ष है। जैसे—"यह पुरुष वस्तुतः शुद्ध चैतन्य रूप है।

---

१. पश्यन्नसि म. १, २, प. १, २।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

**बन्धश्च प्राकृतिकवैकारिकदाक्षिणभेदात् त्रिविधः। तथाहि—प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते, तेषां प्राकृतिको बन्धः। ये विकारानेव भूतेन्द्रियाहंकारबुद्धीः पुरुषबुद्धयोपासते, तेषां वैकारिकः। इष्टापूर्ते दाक्षिणः, पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति।**

"इष्टापूर्तं मन्यमाना वरिष्ठं, नान्यच्छ्रेयो येऽभिनन्दन्ति मूढाः।
नाकस्य पृष्ठे ते सुकृतेन भूत्वा, इमं लोकं हीनतरं वा विशन्ति ॥१॥" [मुण्डक, १।२।१०]

**इति। बन्धाच्च प्रेत्यसंसरणरूपः संसारः प्रवर्तते।**

**§ २९. सांख्यमते च पुरुषस्य प्रकृतिविकृत्यनात्मकस्य न बन्धमोक्षसंसाराः, किं तु प्रकृतेरेव। तथा च कापिलाः—**

**"तस्मान्न बध्यते नैव मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥१॥" [ सांख्यका. ६२। ] इति।**

---

प्रकृतिसे अपने स्वरूपको भिन्न न समझनेके कारण मोहसे संसरण—संसारमें परिभ्रमण करता रहता है।" इसलिए सुख-दुःख मोहस्वरूपवाली प्रकृतिको जबतक आत्मासे भिन्न नहीं समझा जाता तब तक मोक्ष नहीं हो सकता। प्रकृतिको आत्मासे भिन्न रूपमें देखनेपर तो प्रकृतिकी प्रवृत्ति अपने आप रुक जाती है और प्रकृतिका व्यापार रुक जानेपर पुरुषका अपने शुद्धचैतन्य स्वरूपमें स्थित हो जाना ही मोक्ष है। मोक्ष बन्धन के तोड़नेपर होता है। बन्धन तीन प्रकारका है—१. प्राकृतिक, २. वैकारिक, ३. दाक्षिण। प्रकृतिको आत्मा मानकर जो प्रकृतिकी उपासना करते हैं, उसे ही अपना सर्वस्व समझते हैं उन मूढ़ प्रकृतिदर्शियोंको प्राकृतिक बन्ध होता है। जो विकार अर्थात् पृथिव्यादि भूत, इन्द्रियाँ, अहंकार तथा बुद्धिको पुरुष समझकर इन विकारोंकी ही उपासना करते हैं उन व्यक्तियोंको वैकारिक बन्ध होता है। श्रुतिविहित यज्ञादिको तथा स्मृति प्रतिपादित बावड़ी-कुआँ आदि बनवानेको ही उत्कृष्ट कर्तव्य मानना दाक्षिण बन्ध है। पुरुष तत्त्वको नहीं समझकर आत्मज्ञानके बिना स्वर्ग आदि सांसारिक कामनाओंसे श्रुतिविहित यज्ञ-दान आदि कर्म करनेसे तथा स्मार्त कुआँ बनवाने आदिसे दाक्षिणबन्ध होता है। कहा भी है—"जो मूढ़ जन इष्टापूर्त—श्रुति प्रतिपादित यज्ञ आदि इष्ट, तथा स्मृति विहित कुआँ-बावड़ी आदि बनाने रूप पूर्त कर्मोंको ही वरिष्ठ—सर्वश्रेष्ठ मानकर अन्य किसी भी शुभकर्म या ध्यान आदिको कल्याणकारी नहीं समझते वे पहले यज्ञादिके फलसे स्वर्गमें उत्पन्न होकर भी अन्तमें इसी मनुष्य लोक में अथवा इससे भी हीन तिर्यग्लोक आदिमें जन्म लेते हैं।"

बन्धसे परलोकमें जन्म लेना आदि संसारका जन्म-मरण चक्र चलने लगता है।

§ २९. सांख्य मतमें पुरुष न तो प्रकृति—कारणरूप है और न कार्यरूप ही अतः उसको न बन्ध होता है न मोक्ष और न संसार ही। ये सब बन्ध आदि तो प्रकृतिको ही होते हैं। कापिलोंने कहा है—"चूँकि पुरुष साक्षी आदि स्वरूपवाला है अतः न तो पुरुषको बन्ध होता है न वह

---

१. दाक्षिणकभे–म. १। २. "स च बन्धस्त्रिविधः प्रकृतिबन्धो वैकारिकबन्धो दाक्षिणबन्धश्च। तत्र प्रकृतिबन्धो नाम अष्टासु ( प्रकृतिबुद्धयहङ्कारतन्मात्रेषु ) प्रकृतिषु परत्वेनाभिमानः। वैकारिकबन्धो नाम ब्रह्मा(बुद्धया)दिस्थानेषु श्रेयोबुद्धिः। दाक्षिणबन्धो नाम गवादिदानेज्यानिमित्तः।" —सां. माठरवृ. पृ. ६२। "प्रकृतिलयः प्रकृतिबन्ध इत्युच्यते, यज्ञादिभिः दाक्षिणबन्ध इत्युच्यते, ऐश्वर्यादिनिमित्तो भोगो वैकारिक इत्युच्यते।"—सां. माठरवृ. पृ. ६३। योगसू. तत्त्ववैशा. १।२४। सांख्यसं. पृ. २४। स्या. मं. पृ. १९१। "प्रकृतिबन्धः प्रकृतिलयः परत्वेनाभिमन्यतः। संन्यासिनामिन्द्रियेषु लयो वैकारिकोऽपरः॥ गृहिणां दक्षिणाबन्धो वदान्यत्वाभिमानिनाम्। इत्येषस्त्रिविधो बन्धस्त्रिविधो मोक्ष उच्यते॥" —सांख्यसं. पृ. २४। ३. –नाद्यैः प्र–म. २। ४. –तत्त्वाभि –म २.। ५. बाध्यते म. २। ६. –तेऽपि च यतो हि नाना–म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नवरममी बन्धमोक्षसंसाराः पुरुषे उपचर्यन्ते[1]। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते तत्फलस्य कोशलाभादेः स्वामिनि संबन्धात्, तथा भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषे संबन्ध इति ॥

§ ३०. अत्र प्रमाणस्य सामान्यलक्षणमुच्यते—'अर्थोपलब्धिहेतुः प्रमाणम्' इति। अथोत्तरार्धे मानत्रितयं च–प्रमाणत्रितयं च, अत्र—सांख्यमते। किं तदित्याह—प्रत्यक्षं–प्रतीतं, लैङ्गं–अनुमानं, शाब्दं–चागमः। चकारोऽत्रापि संबन्धनीयः। तत्र प्रत्यक्षलक्षणमाख्यायते–'श्रोत्रादिवृत्तिरविकल्पिका प्रत्यक्षम्' इति। 'श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी' इति। श्रोत्रादीनीन्द्रियाणि; तेषां वृत्तिर्वर्तनं परिणाम इति यावत्, इन्द्रियाण्येव विषयाकारपरिणतानि प्रत्यक्षमिति हि तेषां सिद्धान्तः[2]। अविकल्पिका नामजात्यादिकल्पनारहिता शाक्यमताध्यक्षवद्व्याख्येयेति[3]।

§ ३१. ईश्वरकृष्णस्तु[4] "प्रतिनियताध्यवसायः श्रोत्रादिसमुत्थोऽध्यक्षम्" इति प्राह।[5]

---

मुक्त होता है और न उसे संसार ही होता है। यह सब स्वांग तो बहुरूपिणी प्रकृति ही भरा करती है। वही बँधती है, छूटती है तथा संसारमें परिभ्रमण करती है॥" इतना अवश्य है कि प्रकृतिमें होनेवाले ये बन्धादि पुरुषमें उपचरित होते हैं। जैसे सैनिकोंका जय या पराजय स्वामीका ही जय और पराजय माना जाता है क्योंकि जय-पराजयके फलस्वरूप धनादिकी प्राप्ति आदि राजाको ही होती है उसी तरह भोग और अपवर्ग दोनों ही यद्यपि प्रकृतिगत हैं परन्तु विवेक अर्थात् भेदज्ञान न होने से भोक्ता पुरुषके कहे जाते हैं और इसीलिए पुरुषमें संसारी तथा मुक्त ये व्यपदेश होते हैं।

§ ३०. अब सांख्योंकी प्रमाणचर्चा प्रारम्भ करते हैं। अर्थोपलब्धिमें जो साधकतम कारण होता है उसे प्रमाण कहते हैं। श्लोकके उत्तरार्धमें सांख्योंके तीन प्रमाणोंका निर्देश किया है। १ प्रत्यक्ष, २ लैङ्ग—लिङ्गसे होनेवाला अनुमान, ३ आगम। निर्विकल्पक श्रोत्रादिकी वृत्तिको प्रत्यक्ष कहते हैं। श्रोत्र, स्पर्शन, आँखें, जीभ तथा नाक ये पाँच इन्द्रियाँ हैं। श्रोत्रादि इन्द्रियोंकी वृत्ति-परिणमन व्यापारको श्रोत्रादिवृत्ति कहते हैं। सांख्य विषयाकार परिणत इन्द्रियोंको ही प्रत्यक्ष प्रमाण मानते हैं। नाम-जाति आदिकी कल्पनासे रहित वृत्ति निर्विकल्पक है। इस निर्विकल्पकका व्याख्यान बौद्ध-दर्शनमें किये गये प्रत्यक्षके व्याख्यानकी तरह समझ लेना चाहिए।

§ ३१. ईश्वरकृष्णने प्रत्यक्षका लक्षण इस प्रकार किया है—"प्रत्येक विषयके प्रति इन्द्रियोंके अध्यवसाय व्यापारको दृष्ट–प्रत्यक्ष प्रमाण कहते हैं।"

---

१. "तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ कथं पुरुषे व्यपदिश्येते इति। यथा विजयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते स हि तस्य फलस्य भोक्तेति, एवं बन्धमोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते।"—यो. भा. २।१८। २. "इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्।"—योगसू. व्यासभा. पृ. २७। "कापिलास्तु श्रोत्रादिवृत्तेः प्रत्यक्षत्वमिच्छन्ति।..."—प्रमाणसमु. पृ. ६४। न्यायवा. पृ. ४३। "वार्षगण्यस्यापि लक्षणमयुक्तमित्याह—श्रोत्रादिवृत्तिरिति।" —न्यायवा. ता. टी. पृ. १५५। न्यायमं. पृ. १००। तत्त्वोप. ६१। ३. –क्षमतिवद्व्याख्येयेति ईश्व–म. १, प. १, २। –क्षमितिवद्व्याख्येयेति ईश्व– म. २। ४. प्रतिबिम्बकताध्यव –भ. २। ५. "प्रतिविषयाध्यवसायो दृष्टम्"—सांख्यका. ५।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

§ ३२. अनुमानस्य त्विदं लक्षणम्[1]—पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति त्रिविधमनुमानमिति। तत्र नद्युन्नतिदर्शनादुपरि वृष्टो देव[2] इत्यनुमीयते यत्तत्पूर्ववत्। तथा समुद्रोदकबिन्दुप्राशनाच्छेषं जलं क्षारमनुमानेन ज्ञायते, तथा स्थाल्यां सिक्थैकचम्पनाच्छेषमन्नं पक्वमपक्वं वा ज्ञायते तत्-शेषवत्। यत्सामान्यतो दृष्टं तल्लिङ्गलिङ्गिपूर्वकम्, यथा त्रिदण्डदर्शनादवृष्टोऽपि लिङ्गी परिव्राजकोऽस्तीत्यवगम्यते, इति त्रिविधम्। अथवा तल्लिङ्गलिङ्गिपूर्वकमित्येवानुमानलक्षणं सांख्यैः समाख्यायते।[3]

§ ३३. शाब्दं त्वाप्तश्रुतिवचनम्, आप्ता रागद्वेषादिविरहिता ब्रह्मसनत्कुमारादयः, श्रुतिर्वेदः तेषां वचनं शाब्दम्।

§ ३४. अत्रानुक्तमपि किंचिदुच्यते। चिच्छक्तिर्विषयपरिच्छेदशून्या नार्थं जानाति, बुद्धिश्च जडा न चेतयते, सन्निधानात्तयोरन्यथा प्रतिभासनम्, प्रकृत्यात्मसंयोगात्सृष्टिरुपजायते, प्रकृतिविकारस्वरूपं कर्म, तथा त्रैगुण्यरूपं सामान्यम्, प्रमाणविषयस्तात्त्विक इति। अत्र त्रयो गुणाः

---

§ ३२. पूर्ववत्, शेषवत् तथा सामान्यतोदृष्टके भेदसे तीन प्रकारका अनुमान है। नदीमें बाढ़ देखकर ऊपरी प्रदेशमें मेघकी वृष्टि होनेका अनुमान करना पूर्ववत् है। समुद्रके एक बूँद जलको खारा पाकर शेष समुद्रको खारा समझना, तथा बटलोईमें पकते हुए अन्नके एक दानेको हाथसे मसलकर शेष अन्नको पका हुआ या कच्चा समझना शेषवत् अनुमान है। जो सामान्य रूपसे लिङ्गको देखकर लिङ्गीका अनुमान किया जाता है वह सामान्यतोदृष्ट है। जैसे बाहर तीन दण्डोंको देखकर भीतर परिव्राजक है यह ज्ञान करना। अथवा लिंग और लिंगीके सम्बन्धको ग्रहण कर लिंगसे लिंगीका अनुमान करना अनुमान प्रमाण है। यही सांख्योंका अनुमानका सामान्य लक्षण है।

§ ३३. आप्त और वेदोंके वचन शाब्द प्रमाण हैं। राग-द्वेष आदिसे रहित वीतराग ब्रह्म सनत्कुमार आदि आप्त हैं। और श्रुति अर्थात् वेद इन्हींके वचन-आगम शब्द हैं।

§ ३४. मूलमें नहीं कही हुई कुछ विशेष बातें इस प्रकार हैं–"चैतन्यशक्ति शब्दादि विषयोंका परिच्छेद नहीं करती, वह अर्थको नहीं जानती। पदार्थोंको जाननेवाली तो बुद्धि है। बुद्धि जड़ है, वह संचेतन नहीं कर सकती। बुद्धि और पुरुषके सन्निधानसे यह मालूम होने लगता है कि—बुद्धि चेतनावाली है तथा पुरुष विषयोंको जाननेवाला है। प्रकृति और पुरुषके संयोगसे ही यह सृष्टि उत्पन्न होती है। कर्म—पुण्य-पाप आदि सब प्रकृतिके ही विकार हैं।" त्रिगुणवाला प्रधान

---

१. "....त्रिविधमनुमानमाख्यातम्। तल्लिङ्गलिङ्गिपूर्वकम्।" —सांख्यका. ५। "तच्च त्रिविधम्। पूर्ववत् शेषवत् सामान्यतोदृष्टं च। तत्र विशिष्टमेघोन्नतिदर्शनाद् भविष्यं वृष्टिं सम्भावयति। पूर्वमियं दृष्टेति पूर्ववत्। नदीपूरदर्शनादुपरि वृष्टो देव इति वा प्रतीतिः। शेषवद्यथा समुद्रोदकबिन्दुं प्राश्य शेषस्य लवणभावोऽनुमीयते इति शेषवत्। सामान्यतोदृष्टम्—पुष्पिताम्रदर्शनात् अन्यत्र पुष्पिता आम्रा इति। पुनर्यथा बहिरुद्योत इति केनाप्युक्तं, तत्रापरेणाप्युक्तम्। चन्द्र उदितो भविष्यतीत्यर्थसङ्गतिः। तल्लिङ्गलिङ्गिपूर्वकमिति। लिङ्गेन त्रिदण्डादिदर्शनेनादृष्टोऽपि लिङ्गी साध्यते नूनमसौ परिव्राडस्ति यस्येदं त्रिदण्डमिति।"—सांख्यका. मा. वृ. पृ. १३। २. मेघ– भ. २। ३. "आप्ता रागद्वेषादिरहिता ब्रह्मसनत्कुमारादयः, श्रुतिर्वेदः ताभ्यां उपदिष्टं तथेति श्रद्धेयमाप्तवचनम्।"'आप्ता ब्रह्मादय आचार्याः, श्रुतिर्वेदस्तदेतदुभयमाप्तवचनम्। आप्तिः साक्षादर्थप्राप्तिर्यथार्थोपलम्भः तया वर्तत इत्याप्तः साक्षात्कृतधर्मा यथार्थप्त्या श्रुतार्थग्राही तदुक्तमाप्तवचनम्।"—सांख्यका. मा. वृ. का. ३।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सत्त्वरजस्तमांसि। ततः स्वार्थे "ष्यो नन्दादेः" इति ष्यः, यथा त्रयो लोकास्त्रैलोक्यं, षड्गुणाः षाड्गुण्यम्, ततस्त्रैगुण्यं रूपं स्वभावो यस्य सामान्यस्य तत् त्रैगुण्यरूपमिति। प्रमाणस्य च फलमित्थम्। पूर्वं पूर्वं प्रमाणमुत्तरं[2] तु फलमिति।

§ ३५. तथा कारणे कार्यं सदेवोत्पद्यतेऽसदका(क)रणादिभ्यो हेतुभ्यः।[3] तदुक्तम्—"असदका(क)रणादुपादानग्रहणात्सर्वसंभवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥१॥" [ सांख्यकारिका ९ ] इति॥ अत्र सर्वसंभवाभावादिति, यद्यसत्कार्यं स्यात्तदा सर्वं सर्वत्र भवेत्। ततश्च तृणादिभ्योऽपि सुवर्णादीनि भवेयुः, न च भवन्ति, तस्मात्कारणे कार्यं सदेव। तथा

सामान्य रूप है—सर्वत्र अन्वित है, सबका समान रूपसे भोग्य है। प्रमाणका विषयभूत बाह्य अर्थ वास्तविक है काल्पनिक नहीं।" ( स्वार्थमें 'ष्यो नन्दादेः' सूत्रसे ष्य प्रत्यय करनेपर ) त्रिगुण ही त्रैगुण्य कहे जाते हैं, जैसे कि त्रिलोक ही त्रैलोक्य, षड्गुण ही षाड्गुण्य कहा जाता है। त्रैगुण्यरूप सामान्य है। पूर्व-पूर्व प्रमाण हैं तथा उत्तर उत्तर फल रूप हैं अर्थात् सन्निकर्षकी प्रमाणतामें निर्विकल्प फल निर्विकल्पको प्रमाण माननेपर सविकल्पकज्ञान फल कहा जाता है।

§ ३५. कारणमें कार्यकी सत्ता रहती है अतः कारणमें विद्यमान ही कार्य उत्पन्न होता है। सत्कार्यवादकी सिद्धिके लिए सांख्यकारिकामें कहा है—"असत् वस्तु खर विषाणकी तरह उत्पन्न नहीं की जा सकती, कार्यकी उत्पत्तिके लिए लोग उपादान कारणको ही ग्रहण करते हैं, सब कारणोंसे सब कार्योंकी उत्पत्ति नहीं होती, समर्थ भी कारण अपने करने योग्य ही कार्यको उत्पन्न करता है, तथा संसारमें कार्य-कारण भाव देखा जाता है इसलिए यह मानना ही चाहिए कि—'कारणमें कार्य सत् है।' सर्वसम्भवाभावात्—यदि कारणमें कार्य असत् होकर भी उससे उत्पन्न हो जाये तो सबसे सबकी उत्पत्ति होनी चाहिए, तृणसे भी सुवर्ण को उत्पन्न होना चाहिए। पर संसारमें प्रतिनियत कारणोंसे प्रतिनियत ही कार्योंकी उत्पत्ति देखी जाती है अतः यह सहज ही कहा जा सकता है कि—'जिस कारणमें जिस कार्यका सद्भाव है उससे वही उत्पन्न होता है

१. -नन्तादेः क., म. १, २, प. १, २। २. -त्तरं ( उत्तरं ) तु आ.। ३. "इह लोके सदेव सद्भवति। असतः का(क)रणं नास्ति। यदि स्यात्तदा सिकताभ्यस्तैलं, कूर्मरोमभ्यः पटप्रावरणम्, बन्ध्यादुहितृभ्रूविलासः, शशविषाणं, खपुष्पं च स्यात्। न चास्ति तस्मादनुमीयते प्रधाने प्रागुत्पत्तेर्महदादिकमस्त्येव। उपादानग्रहणात्। इह लोके यो येनार्थी स तदुपादानग्रहणं करोति। तन्निमित्तमुपादत्ते। तद्यथा दध्यर्थी क्षीरस्योपादानं कुरुते। यदि चासत्कार्यं स्यात्तदा दध्यर्थी उदकस्याप्युपादानं कुर्यात्, न च कुरुते, तस्मात् महदादि कार्यमस्तीति। किं च सर्वसम्भवाभावात्। इह लोके यद् यस्मिन् विद्यते तस्मादेव तदुत्पद्यते। यथा तिलेभ्यस्तैलं, दध्नो घृतम्। यदि चासत्कार्यं स्यात्तदा सर्वं सर्वतः सम्भवेत्ततश्च तृणपांसुवालुकादिभ्यो रजतसुवर्णमणिमुक्ताप्रवालादयो जायेरन्। न च जायन्ते तस्मात्पश्यामः सर्वसम्भवाभावादपि महदादि कार्यं प्रधाने सदेव सद्भवतीति। अतश्चास्ति—शक्तस्य शक्यकरणात्। इह लोके शक्तः शिल्पी करणादिकारणोपादानकालोपायसंपन्नः शक्यादेव शक्यं कर्म आरभते नाशक्यमशक्यात्। तद्यथा—शक्तः कुम्भकारः शक्यादेव मृत्पिण्डात् शक्यदण्डचक्रसूत्रोदकविदलतलादिभिः संपन्नो घटशरावोदञ्चनादीन्यारभमाणो दृष्टः। न च मणिकादि, अशक्यत्वात्तावता पिण्डेन तस्य। यदि पुनः करणनियमो न स्यात् अशक्यादप्यशक्यमारभ्येत। तस्मात् सत्कार्यं स्यान्नासत्। किं च—कारणभावाच्च। कार्यं सदेव स्यात्। इह लोके यल्लक्षणं कारणं तल्लक्षणं कार्यं स्यात्। यथा कोद्रवेभ्यः कोद्रवाः, व्रीहिभ्यो व्रीहयः स्युः। यदि चासत्कार्यं स्यात् तदा कोद्रवेभ्यः शालीनामपि निष्पत्तिः स्यात्। न च भवति। तस्मात्कारणभावादपि पश्यामः प्रधाने महदादि कार्यमस्तीति। साधितमेवमेतैः पञ्चभिर्हेतुभिः सत् कार्यम्।" —सांख्यका. मा. वृ. ९।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

द्रव्याण्येव केवलानि सन्ति, न पुनरुत्पत्तिविपत्तिधर्माणः पर्यायाः[1] केऽपि, आविर्भावतिरोभावमात्रत्वात्तेषामिति।

§ ३६. सांख्यानां तर्कग्रन्थाः षष्टितन्त्रोद्धाररूपं[2] माठरभाष्यं सांख्यसप्ततिनामकं,[3] [4]तत्त्वकौमुदी, गौडपादं,[5] आत्रेयतन्त्रं चेत्यादयः ॥४३॥

§ ३७. सांख्यमतमुपसंजिहीर्षन्नुत्तरत्र जैनमतमभिधित्सन्नाह—

एवं सांख्यमतस्यापि समासो गदितोऽधुना।
जैनदर्शनसंक्षेपः कथ्यते सुविचारवान् ॥४४॥

§ ३८. व्याख्या—एवमुक्तविधिना सांख्यमतस्यापि न केवलं बौद्धनैयायिकयोरित्यपिशब्दार्थः। समासः-संक्षेपोऽधुना गदितः। जैनदर्शनसंक्षेपः कथ्यते। कथंभूतः सुविचारवान्-सुष्ठु सर्वप्रमाणैरबाधितस्वरूपत्वेन शोभना विचाराः सुविचारास्ते विद्यन्ते यस्य स सुविचारवान्, न पुनरविचारितरमणीयविचारवानिति। अनेनापरदर्शनान्यविचारितरमणीयानीत्यावेदितं मन्तव्यम्। यदुक्तं परैरेव—

"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥१॥" [ मनु. १२।११० ]

परैर्हि दोषसंभावनयैव स्वमतविचारणा नाद्रियते। यत उक्तम्—

"अस्ति वक्तव्यता काचित्तेनेदं न विचार्यते।
निर्दोषं काञ्चनं चेत्स्यात्परीक्षाया बिभेति किम् ॥१॥" इति।

---

अन्य नहीं'। मात्र द्रव्यकी ही सत्ता है, वह नित्य है। उत्पन्न और विनष्ट होनेवाली कोई भी पर्यायें नहीं हैं। पर्यायें तो केवल आविर्भूत तथा तिरोहित होती हैं।

§ ३६. सांख्योंके षष्टितन्त्रका पुनः संस्करण रूप माठरभाष्य सांख्यसप्तति, तत्त्वकौमुदी, गौड़पादभाष्य, आत्रेयतन्त्र इत्यादि ग्रन्थ हैं ॥४३॥

§ ३७. सांख्य मतका उपसंहार करके जैनमतके निरूपण करनेकी प्रतिज्ञा करते हैं—

**इस तरह सांख्य मतका संक्षेपसे कथन किया गया। अब प्रमाणसिद्ध जैन दर्शनका संक्षेपसे कथन करते हैं ॥४४॥**

§ ३८, इस तरह सांख्यमतका भी संक्षेपसे कथन किया गया। अब समस्त प्रमाणोंसे अबाधित होनेके कारण जिसमें बहुत सुन्दर युक्तिसंगत विचार हैं उस सुविचारशाली जैनदर्शनका कथन करते हैं। अर्थात् इस जैनदर्शनके विचार अविचारित रमणीय-बिना विचारे सुन्दर मालूम होनेवाले नहीं हैं। इस विशेषणसे यह सूचित होता है कि अन्य दर्शनोंका जब तक विचार नहीं किया तभी तक वे सुन्दर मालूम होते हैं, तर्ककी कसौटीपर चढ़ते ही उनकी सुन्दरता उड़ जाती है। परदर्शनवालोंने स्वयं ही कहा है कि—"पुराण, मानवधर्म-मनुस्मृति आदि अंग-उपांग सहित वेद, तथा आयुर्वेदशास्त्र इन चारको आज्ञा सिद्ध जैसेके तैसे बाबा वाक्यके रूपमें ही मानना चाहिए, इनमें तर्क नहीं करना चाहिए।" और न तर्कके द्वारा इनका खण्डन ही करना चाहिए। परमतवाले अपने मतमें दोषोंकी स्वयं सम्भावना करते हैं, और यही कारण है कि विचारसे—तर्कसे डरते हैं, तर्कका आदर नहीं करते। कहा भी है—"जब अन्यमतवाले अपने दर्शनोंका विचार करनेसे डरते हैं तो मालूम होता है कि कुछ दालमें काला अवश्य है, उनमें कहने-सुननेकी बहुत कुछ

---

१. पर्ययाः म. २। २. माठराचार्यकृता सांख्यकारिकावृत्तिः। ३. सांख्यकारिका ईश्वरकृष्णकृता। ४. वाचस्पतिमिश्रकृता सांख्यतत्त्वकौमुदी। ५. गौडपादकृतं सांख्यकारिकाभाष्यम्।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अत एव जैना जिनमतस्य निर्दूषणतया परीक्षातो निर्भीका एवमुपदिशन्ति । सर्वथा स्वदर्शनपक्षपातं परित्यज्य माध्यस्थ्येनैव युक्तिशतैः सर्वदर्शनानि पुनः पुनर्विचारणीयानि, तेषु च यदेव दर्शनं युक्तियुक्ततयावभासते, यत्र च पूर्वापरविरोधगन्धोऽपि नेक्ष्यते, तदेव विशारदैरादरणीयं नापरमिति । तथा चोक्तम्—

"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥१॥" [ लोकतत्त्वनि. श्लो. ३८ ]

इति श्री[1] तपोगणनभोङ्गणदिनमणिश्रीदेवसुन्दरसूरिपादपद्मोपजीविश्रीगुणरत्नसूरि-
विरचितायां तर्करहस्यदीपिकाभिधानायां षड्दर्शनसमुच्चयवृत्तौ
सांख्यमतरहस्यप्रकाशनो नाम तृतीयोऽधिकारः[5] ॥

गुंजाइश है, वे पूर्ण नहीं हैं। यदि सोना खरा सौटंचका है तो कसौटीपर कसे जानेसे क्यों डरते हैं। उसकी परीक्षा होने दो, निर्दोषमें तो दोष निकल नहीं सकते ॥" इति। इसीलिए जैन लोग अपने जिनमतको निर्दोष होनेके कारण डंकेकी चोट कहते हैं कि "आओ, खूब परीक्षा करो' वे निर्भीक होकर परीक्षाके लिए सबका आह्वान करते हुए साफ-साफ कहते हैं कि—अपने मतका पक्षपात छोड़कर तटस्थ भावसे सभी दर्शनोंका बार-बार खूब विचार करो, विचार करनेपर जो दर्शन तर्ककी कसौटीपर सौटंचका निकले, युक्तिसंगत हो, जिसमें पूर्वापर विरोधकी गन्ध भी न हो उसीका विशारद–समझदारोंको आदर करना चाहिए अन्यका नहीं।' जैनियोंकी तो खुली घोषणा है कि—"हमारा महावीरसे कोई राग नहीं है जिससे उनके पक्षमें आँख मूँदकर गिरा जाय और न कपिलसे कोई द्वेष ही है। हमारा तो स्पष्ट विचार है कि–जिसके वचन युक्तियुक्त हों उसीका अनुसरण करो।"

इति तपोगणरूपी आकाशके प्रतापी सूर्य श्री देवसुन्दर सूरिके चरणसेवक श्री गुणरत्नसूरि
द्वारा रची गयी षड्दर्शन समुच्चयकी तर्करहस्यदीपिका नामक टीकामें सांख्यमत-
के रहस्यको प्रकट करनेवाला तीसरा अधिकार पूर्ण हुआ।

१. श्रीमत्तपोगणगगनाङ्गणतरणिश्री–भ. २। श्रीतपागच्छगगनाङ्गणनभोमणिश्री–म. १, प. १, २। श्रीतपागण– क.। २. सूरिक्रमकमलोपजीवि– भ, १, २, क., प. १, २। ३. –रत्नाचार्यवि–म. २। ४. –कायाम्–भ. १, २, क., प. १, २। ५. तृतीयः प्रकाशः– भ. १, २, क., प. १, २। ६. परवचनविकल्पान् कूपमण्डूककल्पान्, विषमसदसि तांस्तान् सीदतोऽनन्तसंख्यान्। हसति यदतिमात्रं सर्वनीमद्वचस्तत्, जयति जयति जैनं विश्वतत्त्वैकबीजम् :–म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ॐ

# अथ चतुर्थोऽधिकारः

§ १. अथादौ जैनमते लिङ्गवेषाचारादि प्रोच्यते। जैना द्विविधाः श्वेताम्बरा दिगम्बराश्च। तत्र श्वेताम्बराणां रजोहरणमुखवस्त्रिकालोचादि लिङ्गम्, चोलपट्टकल्पादिको वेषः, [1]पञ्च समितयस्तिस्रश्च[2] गुप्तयस्तेषामाचारः।

"ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञिकाः।
पञ्चाहुः समितीस्तिस्रो गुप्तीस्त्रियोगनिग्रहात् ॥१॥"

इति वचनात्। अहिंसासत्यास्तेयब्रह्माकिञ्चन्यवान् क्रोधादिविजयी दान्तेन्द्रियो निर्ग्रन्थो गुरुः, माधुकर्या वृत्त्या [3]नवकोटीविशुद्धस्तेषां नित्यमाहारः, संयमनिर्वाहार्थमेव वस्त्रपात्रादिधारणम्, वन्द्यमाना धर्मलाभमाचक्षते।

§ १. सर्व प्रथम जैनमतवालोंके वेष, आचार आदिका वर्णन करते हैं। जैनदर्शनको माननेवाले दो सम्प्रदाय हैं—१ श्वेताम्बर, २ दिगम्बर। श्वेताम्बर मुनिके रजोहरण, मुखपट्टी और बालोंका लुंचन आदि लिंग—चिह्न हैं। उनका वेश चोलपट्टक तथा कल्प—एक चादर आदि होता है। वे पांच प्रकारकी समिति (देख शोधकर सावधानी पूर्वक प्रवृत्ति) तथा तीन गुप्ति (मन-वचन-कायकी रक्षा) का आचरण करते हैं। उनके नाम हैं—"ईर्या—चलते-उठते-बैठते, भाषा—बोलते, एषणा–भिक्षाचर्यामें भाषा एषणा, किसी चीजको आदान–लेनेमें तथा निक्षेप–रखनेमें, उत्सर्ग–मल-मूत्र आदिका उत्सर्ग करनेमें, समिति—बड़ी सावधानी है। कहा भी है—"ईर्या चार हाथ आगेकी जमीन देखकर चलना, भाषा–हित-मित प्रिय वचन कहना, एषणा-शुद्ध अन्तराय आदि टालकर भोजन लेना, आदान निक्षेप–देखभालकर किसी भी वस्तुका लेना और रखना तथा उत्सर्ग-निर्जीव भूमिपर मल-मूत्रादिका उत्सर्ग करना ये पाँच समितियाँ अर्थात् सम्यक् प्रवृत्तियाँ हैं। मनोगुप्ति, वचनगुप्ति तथा कायगुप्ति ये योग विग्रहरूप तीन गुप्ति हैं। अर्थात् मन, वचन तथा कायकी प्रवृत्तियों पर संयम रखना—इनके व्यापारोंको रोक देना गुप्ति है।" गुरु निर्ग्रन्थ होते हैं जो अहिंसा, सत्य, अस्तेय–आवश्यकता होनेपर भी किसीकी वस्तुको बिना दिये न लेना, ब्रह्मचर्य तथा आकिंचन्य–'मेरा कुछ भी नहीं है' इस प्रकारसे किसी भी वस्तुमें ममत्वबुद्धि नहीं रखना, इन पांच महाव्रतों-का पालन करते हैं। क्रोध मान माया छल कपट लोभ आदि अन्तरंग शत्रुओंको जीतते हैं, इन्द्रियों-का दमन करते हैं, इन्द्रियोंको विषयोंकी ओर नहीं जाने देते। जिस तरह भौंरा फूलोंको हानि पहुँचाये बिना ही उनसे रस ले लेता है उसी तरह साधु मधुकरीवृत्तिसे गृहस्थोंको कष्ट नहीं पहुँचा-कर ही नित्य आहार ग्रहण करते हैं जो मन, वचन, कायको कृतकारित एवं अनुमोदनासे गुणा करनेपर फलित होनेवाली नव कोटियोंसे विशुद्ध होता है। शुद्धसंयमके पालनके अभिप्रायसे संयमको निबाहनेके लिए ही वस्त्र और पात्र ग्रहण करते हैं। जब उन्हें कोई नमस्कार करता है तब वे आशीर्वादके रूपमें 'धर्मलाभ' शब्द कहते हैं।

---

१. "ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः।" —तत्त्वार्थसू. ९।५। २. "सम्यग्योगनिग्रहो गुप्तिः" —तत्त्वार्थसू. ९।४। ३. मनोवचनकायानां कृतकारितानुमतैः नव कोटयः।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २. दिगम्बराः पुनर्नाग्न्यलिङ्गाः पाणिपात्राश्च। ते चतुर्धा काष्ठासङ्घ-मूलसङ्घ-माथुरसङ्घ-गोप्यसङ्घ-भेदात्[1]।[2] काष्ठासङ्घे चमरीबालैः पिच्छिका, मूलसङ्घे मायूरपिच्छैः पिच्छिका, माथुरसङ्घे मूलतोऽपि पिच्छिका नादृता, गोप्या मायूरपिच्छिकाः। आद्यास्त्रयोऽपि सङ्घा वन्द्यमाना धर्मवृद्धिं भणन्ति, स्त्रीणां मुक्तिं केवलिनां भुक्तिं सद्व्रतस्यापि सचीवरस्य मुक्तिं च न मन्वते, गोप्यास्तु वन्द्यमाना धर्मलाभं भणन्ति, स्त्रीणां मुक्तिं केवलिनां भुक्तिं च मन्यन्ते। गोप्या यापनीया इत्यप्युच्यन्ते। सर्वेषां[3] च भिक्षाटने भोजने च द्वात्रिंशदन्तरायाः[4] मलाश्च चतुर्दश[5] वर्जनीयाः। शेषमाचारे गुरौ च देवे च सर्वं श्वेताम्बरैस्तुल्यम्, नास्ति तेषां मिथः[6] शास्त्रेषु[7] तर्केष्वपरो भेदः ॥४४॥

§ २. दिगम्बर ( दिशाएँ ही जिनके वस्त्र हैं ) नग्न रहते हैं तथा अपने कर-पात्रसे ही आहार-पानी लेते हैं, खाने-पीनेके लिए कोई पात्र नहीं रखते। दिगम्बरोंके चार भेद हैं—१ काष्ठासंघ, २ मूलसंघ, ३ माथुरसंघ, ४ गोप्यसंघ। काष्ठासंघमें चमरी गायके बालोंकी पिच्छिका—पीछी रखी जाती है। मूलसंघमें तथा गोप्यसंघमें मोरके पंखोंकी पीछी रखते हैं। पर माथुरसंघमें किसी भी प्रकारकी पीछी नहीं रखी जाती। काष्ठासंघ, मूलसंघ तथा माथुरसंघके साधु नमस्कार करनेपर आशीर्वादके रूपमें 'धर्मवृद्धि' शब्द कहते हैं। ये स्त्रियोंको तद्भव मुक्ति, केवलियोंको कवलाहार तथा वस्त्रधारी सद्व्रतीकी भी मुक्ति नहीं मानते। गोप्यसंघ के साधु नमस्कार करनेवालोंको 'धर्मलाभ' शब्द कहकर आशीर्वाद देते हैं तथा स्त्री मुक्ति एवं केवलीको कवलाहारी मानते हैं। गोप्यसंघवाले यापनीय भी कहे जाते हैं। ये सभी दिगम्बर साधु भिक्षाके लिए जाते समय तथा भोजन करते समय बत्तीस अन्तराय और चौदह मल-दोषोंको टालते हैं। इन थोड़े-से मामूली मतभेदोंके सिवाय दिगम्बरोंका आचार, गुरुका स्वरूप, देवका स्वरूप आदि श्वेताम्बरोंके ही समान हैं। इनके शास्त्रों और दर्शनग्रन्थोंमें अन्य कुछ विशेष भेद नहीं है ॥ ४४ ॥

१. गोपसंघ-म. २। २. तुलना—"उक्तं च—गोपुच्छिकः श्वेतवासा द्राविडो यापनीयकः। निष्पिच्छश्चेति पञ्चैते जैनाभासाः प्रकीर्तिताः॥ ते जैनाभासा आहारदानादिकेऽपि योग्या न भवन्ति कथं मोक्षस्य योग्या भवन्ति। गोपुच्छिकानां मतं यथा, उक्तं च—इत्थीणं पुण दिक्खा खुल्लयलोयस्स वीरचरियत्तं। कक्कसकेसग्गहणं छट्ठं च गुणव्वदं नाम॥ श्वेतवाससः सर्वत्र भोजनं गृह्णन्ति प्रासुकं—मांसभक्षिणां गृहे दोषो नास्तीति वर्णलोपः कृतः। तन्मध्ये श्वेताम्बराभासा उत्पन्नास्ते त्वतीव पापिष्ठाः देवपूजादिकं किल पापकर्मेदमिति कथयन्ति, मण्डलवत्सर्वत्र भाण्डप्रक्षालनोदकं पिबन्ति इत्यादि बहुदोषवन्तः। द्राविडाः सावद्यं प्रासुकं च न मन्यन्ते उद्भोजनं निराकुर्वन्ति। यापनीयास्तु, वेसरा इवोभयं मन्यन्ते, रत्नत्रयं पूजयन्ति, कल्पं च वाचयन्ति, स्त्रीणां तद्भवे मोक्षं, केवलिजिनानां कवलाहारं, परशासने सग्रन्थानां मोक्षं च कथयन्ति। निष्पिच्छिका मयूरपिच्छादिकं न मन्यते।" —षट्प्रा. टी.—दर्शनप्रा. पृ. ११। ३. -षां भोजने भिक्षाटने द्वा-म. २। ४. "कागा मेज्झा छद्दी रोहण रुहिरं च अस्सुवादं च। जण्हूहिट्ठामरिसं जण्हूवरि वदिक्कमो चेव॥ णाभिअधोणिग्गमणं पच्चक्खियसेवणा य जंतुवहो। कागादिपिंडहरणं पाणीदो पिंडपडणं च॥ पाणीए जंतुवहो मंसादीदंसणे य उवसग्गो। पादंतरम्मि जीवो संपादोभायणाणं च॥ उच्चारं पस्सवणं अभोजगिहपवेसणं तहा पडणं। उववेसणं सदंसः। भूमिसंस्पर्शः निष्ठीवनं॥ उदरक्किमिणिग्गमणं अदत्तगहणं पहारगामडाहो। पादेण किंचि गहणं करेण वा जं च भूमीए॥"—मूलाचा. पिण्ड. गा. ७६–८०। ५. "णहरोमजंतुअट्ठी—कणकुंडयपूयिचम्मरुहिरमंसाणि। बीयफलकन्दमूला छिण्णाणि मला चउद्दसा होंति॥" —मूलाचा. पिण्ड. गा. ६५। ६. शास्त्रे तर्केषु चापरो-म. २। ७. तर्केषु परो क.।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३. अथ देवस्य लक्षणमाह—

जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः ।
हतमोह महामल्लः केवलज्ञानदर्शनः ।।४५।।
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थप्रकाशकः ।
कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ।।४६।।

§ ४ व्याख्या—तत्र–जैनमते जयन्ति रागादीनिति जिनाः–सामान्यकेवलिनः तेषामिन्द्रस्ताहशासहशचतुस्त्रिंशदतिशयसनाथपरमैश्वर्यसमन्वितः स्वामी जिनेन्द्रो देवता–देवः कृत्स्नकर्मक्षयं कृत्वा परमं पदं संप्राप्त इति संबन्धः । कीदृशः स इत्याह—'रागद्वेषविवर्जितः' मायालोभौ रागः,

§ ३. अब देवका लक्षण कहते हैं—

**जैन दर्शनमें राग-द्वेषसे रहित—वीतराग, महामोहका नाश करनेवाले, केवलज्ञान और केवलदर्शनवाले, देवेन्द्र और दानवेन्द्रोंसे संपूजित, पदार्थोंका यथावत् सत्य रूपमें प्रकाश करनेवाले तथा समस्त कर्मोंको नाश कर परम पद–मोक्षको पानेवाले जिनेन्द्रको ही देव माना है ।।४५-४६।।**

§ ४. जैनमतमें रागादिको जीतनेवाले सामान्य केवली जिन कहलाते हैं । इन जिनों के इन्द्र अर्थात् स्वामी, तीर्थंकर जिनेन्द्र जैनमतमें देवता हैं । ये सामान्य केवलियोंमें नहीं पाये जानेवाले चौंतोस असाधारण अतिशय रूप ऐश्वर्यके धारी होते हैं । ये समस्त कर्मोंका क्षय कर परमपदको प्राप्त हुए हैं । माया और लोभ राग रूप हैं तथा क्रोध और मान द्वेष रूप हैं । वे इन दोनों राग

१. "चोत्तीसं बुद्धाइसेसा पण्णत्ता तं जहा अवट्ठियकेसमंसुरोमनहे १ निरामया निरुवलेवा गायलट्ठी २ गोक्खीरपंडुरे मंससोणिए ३ पउमुप्पलगंधिए उस्सासनिस्सासे ४ पच्छन्ने आहारनीहारे अदिस्से मंसचक्खुणा ५ आगासगयं चक्कं ६ आगासगयं छत्तं ७ आगासगयाओ सेयवरचामराओ ८ आगासफालियामयं सपायपीढं सीहासणं ९ आगासगओ कुडभीसहस्सपरिमं डियाभिरामो इंदज्झओ पुरओ गच्छइ १० जत्थ जत्थ वि य णं अरहंता भगवंता चिट्ठंति वा निसीयंति वा तत्थ तत्थ वि य णं तक्खणादेव सच्छन्नपत्तपुप्फपल्लवसमाउलो सच्छत्तो सज्झओ संघटो सपभागो असोगवरपायवे अभिसंजायइ ११ ईसिं पिट्ठओ मउ डुाणम्मि तेयमंडलं अभिसंजायइ अंधकारे वि य णं दस दिसाओ पभासेइ १२ बहुसमरमणिज्जे भूमिभागे १३ अहोसिरा कंटया जायंति १४ उऊविवरीया सुहफासा भवंति १५ सीयलेणं सुहफासेणं सुरभिणा मारुएणं जोयणपरिमंडलं सव्वओ समंता संपमज्जिज्जइ १६ जुत्तफुसिएणं मेहेण य निहयरयरेणू पकिज्जइ १७ जलथलयभासुरपभूतेणं विंटट्ठाविदसद्धवन्नणंकुसुमेणं जाणुस्सेहप्पमाणमित्ते पुप्फोवयारे किज्जइ १८ अमणुन्नाणं सद्दफरिसरसरूवगंधाणं अवकरिसो भवइ मणुन्नाणं सद्दफरिसरूवरसगंधाणं पाउब्भाओ भवइ १९ उभओ पासि च णं अरहंताणं भगवंताणं दुवे जक्खा कडगतुडियथंभियभुया चामरुक्खेवणं करंति २० पव्वाहरओ वि य णं हियगमणीयो जोयणनीहारो सरो २१ भगवं च णं अद्धमागहीए भासाए धम्ममाइक्खइ २२ सा वि य णं अद्धमागही भासा भासिज्जमाणी तेसिं सव्वेसिं आरियमणारियाणं दुपयचउप्पयमियपसुपक्खिसरीसिवाणं अप्पप्पणो हियसिवसुह दाए भासत्ताए परिणमइ २३ पुव्वबद्धवेरा वि य णं देवासुरनागसुवणजक्खरक्खसकिंनरकिंपुरिसगरुगंधव्वमहोरगा अरहओ पायमूले पसंतचित्तमाणसा धम्मं निसामंति २४ अन्नतित्थियपावयणिया वि य समागया वदंति २५ आगया समाणा अरहओ पायमूले निप्पडिवयणा हवंति २६ जओ जओ वि य णं अरहंतो भगवंतो विहरंति तओ तओ वि य णं जोयणपणवीसाएणं ईति न भवइ २७ मारी न भवइ २८ सचक्कं न भवइ २९ परचक्कं न भवइ ३० अइवुट्ठी न भवइ ३१ अणावुट्ठी न भवइ ३२ दुब्भिक्खं न भवइ ३३ पुव्वुपन्ना वि य णं उप्पाइया वाहीखिप्पा मेव उवसमंति ३४ ।" सम. ३५ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

क्रोधमानौ द्वेषः, रागद्वेषाभ्यां विशेषेण पुनः पुनर्भावेन वर्जितो रहितो रागद्वेषविवर्जितो वीतराग इत्यर्थः। रागद्वेषौ हि दुर्जयौ दुरन्तभवसंपातहेतुतया च मुक्तिप्रतिरोधकौ समये प्रसिद्धौ। यदाह[1]—

"को दुक्खं पाविज्जा कस्स य सुक्खेहि विम्हओ हुज्जा।
को य न लभिज्ज [2]मुक्खं रागद्दोसा जइ न हुज्जा ॥ १ ॥" इति।

ततस्तयोर्विच्छेद उक्तः।

§ ५. तथा 'हतमोहमहामल्लः' मोहनीयकर्मोदयाद्धिंसाद्यात्मकशास्त्रेभ्योऽपि मुक्ति-काङ्क्षणादि-व्यामोहो मोहः, स एव सकलजगद्दुर्जयत्वेन महामल्ल इव महामल्लः हतो मोहमहा-मल्लो येन स तथा। एतेन विशेषणद्वयेन देवस्यापायापगमातिशयो व्यञ्जितो द्रष्टव्यः, तथा रागद्वेषमहामोहरहितोऽर्हन्नेव देव इति ज्ञापितं च। यदुक्तम्—

"रागोऽङ्गनासङ्गमतोऽनुमेयो द्वेषो द्विषद्[3]दारणहेतिगम्यः।
मोहः कुवृत्तागमदोषसाध्यो नो यस्य देवः स स[4] चैवमर्हन् ॥ १ ॥" इति।

---

द्वेषसे विशेष रूपसे रहित अर्थात् सर्वथा वीतराग हैं। ये राग-द्वेष ही अनन्त संसारमें पटकनेवाले हैं और इसीलिए ये मुक्तिके प्रतिबन्धक हैं। शास्त्रमें इन्हें मोक्षके किवाड़ोंमें अर्गला–बेंड़ाके समान कहा है। इनको जीतना बहुत कठिन है। कहा भी है—"यदि संसारमें राग और द्वेष नहीं होते तो क्यों कोई दुःखी होता, क्यों कोई थोड़ा-सा सुख मिलने पर विस्मित होकर अपने आपको भूल जाता तथा क्यों न हर एक प्राणी मोक्षको प्राप्त कर लेता? यह दुःख-सुख मिलनेपर स्वरूप विभ्रम होना तथा मोक्षकी प्राप्ति न होना इन्हीं राग-द्वेषकी कृपाका फल है।" अतः जिनेन्द्र राग-द्वेषके परित्यागी होते हैं।

§ ५. ये महामोहमल्लको नाश करनेवाले हैं। मोहनीयकर्मके उदयसे होनेवाला आत्मविकार व्यामोह–स्वरूपविस्मृति ही मोह है। यह मोह समस्त विकारोंका जनक है, यह दोषरूपी सेनाका सेनापति है तथा सकल जगत्के द्वारा इसका जीतना अत्यन्त कठिन है अतः यह महामल्ल है। इसी मोहके कारण हिंसाका समर्थन करनेवाले, हिंसामें धर्म माननेवाले शास्त्रोंमें सुशास्त्रका भ्रम होकर उनमें प्रतिपादित उपायोंसे मुक्ति प्राप्त करनेका व्यामोह–मिथ्या अभिनिवेश होता है। इस महामोहने सकल जगत्पर अपना अमिट प्रभाव जमा रखा है। इसको जीतना महा दुष्कर है। पर इस मोहरूपी महाभटको जिनेन्द्रने अपनी वीतरागतासे पछाड़ दिया है–उसका समूल उच्छेद कर दिया है।

इन दोनों विशेषणोंसे जिनेन्द्रका अपायापगम–पापरहितता-रूप अतिशय सूचित होता है। इनसे 'राग-द्वेष तथा मोह—इस दोषत्रिपुटीका नाश करनेवाले अर्हन्त ही सच्चे देव हैं' यह भी सूचित होता है। कहा भी है—"स्त्रीसंगमसे रागका तथा शत्रुओंको मारनेवाले शस्त्रोंके द्वारा द्वेषका अनुमान होता है, कुचारित्र तथा कुशास्त्रोंमें प्रीति या उनका प्रतिपादन करनेसे मोहका अनुमान होता है। परन्तु जिनेन्द्रमें इन तीनों चिह्नोंमें-से एक भी चिह्न नहीं दीख पड़ता अतः जिनेन्द्र ही राग-द्वेष-मोहसे रहित हैं, अर्हन् हैं।"

---

१. कः दुःखं प्राप्नुयात् कस्य च सुखैः विस्मयो भवेत्। कश्च न लभेत् मोक्षं रागद्वेषौ यदि न भवेताम्।
२. मुक्खं क.। ३. –षन्मारणहेति–भ. २। ४. सदैवमर्हन्–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ६. तथा केवले—अन्यज्ञानानपेक्षत्वेनासहाये संपूर्णे वा ज्ञानदर्शने यस्य स तथा केवलज्ञान-केवलदर्शनात्मको हि भगवान्, करतलकलितामलकफलवद्द्रव्यपर्यायात्मकं निखिलमनवरतं जगत्स्वरूपं जानाति पश्यति चेति। केवलज्ञानदर्शन[1] इति पदं साभिप्रायम्, छद्मस्थस्य हि प्रथमं दर्शनमुत्पद्यते ततो ज्ञानं केवलिनस्त्वादौ ज्ञानं ततो दर्शनमिति। तत्र सामान्यविशेषात्मके सर्वस्मिन्प्रमेये वस्तुनि सामान्यस्योपसर्जनीभावेन विशेषाणां च प्रधानभावेन यद्ग्राहकं तज्ज्ञानम्, विशेषाणामुपसर्जनीभावेन सामान्यस्य च प्राधान्येन यद्ग्राहकं तद्दर्शनम्, एतेन विशेषणेन ज्ञानातिशयः साक्षादुक्तोऽवगन्तव्यः।

§ ७. तथा सुराः सर्वे देवाः, असुराश्च दैत्याः सुरशब्देनासुराणां संग्रहणे[2]ऽपि पृथगुपादानं लोकरूढ्या ज्ञातव्यम्। लोको[3] हि देवेभ्यो दानवांस्तद्विपक्षत्वेन पृथग्निर्दिशतीति। तेषामिन्द्राः स्वामिनस्तेषां तैर्वा संपूज्योऽभ्यर्चनीयः। तादृशैरपि पूज्यस्य मानवतिर्यक्खेचर[4]किन्नरादिनिकर-सेव्यत्वमानुषङ्गिकमिति। अनेन पूजातिशय उक्तः।

§ ८. तथा सद्भूताः—यथावस्थिता येऽर्थाः—जीवादयः पदार्थास्तेषां प्रकाशकः—उपदेशकः। अनेन वचनातिशय ऊचानः।

---

§ ६. जिनेन्द्रके केवलज्ञान और केवलदर्शन प्रकट हो गये हैं अर्थात् जिनेन्द्रके केवल–अन्य ज्ञानकी अपेक्षा न रखनेवाले असहाय अतएव अपने आपमें परिपूर्ण ज्ञान और दर्शन होते हैं। भगवान्को हथेलीपर रखे हुए आँवलेकी तरह या स्फटिककी तरह समस्त द्रव्यकी सर्व पर्यायोंका युगपत् सामान्यावलोकन रूप दर्शन तथा विशेषग्राही ज्ञान होता है। वे समस्त जगत्का सामान्य रूपसे आलोचन तथा विशेषरूपसे परिज्ञान करते हैं। छद्मस्थ–अल्पज्ञानियोंके जबतक केवलज्ञान नहीं होता तबतक पहले दर्शन और बादमें ज्ञान होते हैं परन्तु केवलज्ञानीके पहले ज्ञान तथा बादमें दर्शन होता है। इसी अभिप्रायसे पहले केवलज्ञान तथा बादमें दर्शन पद रखा गया है। संसारकी समस्त वस्तुओंमें कुछ सामान्य तथा कुछ विशेष धर्म पाये जाते हैं। ज्ञान उस सामान्य विशेषात्मक प्रमेयके सामान्यधर्मको गौण कर विशेषांशको मुख्य रूपसे ग्रहण करता है। दर्शन विशेषांशको गौण कर सामान्यधर्मको ही प्रधान रूपसे ग्रहण करता है। इस विशेषणसे भगवान्के ज्ञानातिशयका साक्षात् वर्णन किया गया है।

§ ७. जिनेन्द्रदेव सुरासुरेन्द्रोंसे संपूजित हैं। यद्यपि जैनमतमें जितने सुर-देव हैं तथा जितने असुर–दैत्य हैं वे सब सामान्य रूपसे 'सुर' शब्दसे ही गृहीत हो जाते हैं क्योंकि सभी सामान्यरूपसे देवगतिमें समुत्पन्न हैं; फिर भी संसारमें देव और दानव ये दो अलग-अलग ही प्रसिद्ध हैं, अतः उस लोकरूढ़िके कारण ही 'सुरासुरेन्द्र संपूजित' विशेषणमें सुर और असुर दोनोंका जुदा-जुदा निर्देश किया है। लोग तो असुरोंको सुरोंका प्रतिपक्षी—शत्रु मानते हैं। उन सुर तथा असुरोंके स्वामी इन्द्रों-द्वारा वे संपूजित हैं। जब सुरेन्द्र और असुरेन्द्र भी भगवान्को पूजते हैं तब मनुष्य, तिर्यंच, विद्याधर तथा किन्नर आदिके द्वारा तो उनका पूजा जाना अपने आप ही सिद्ध हो जाता है। इस विशेषणसे भगवान्का पूजातिशय सूचित किया गया है।

§ ८. जिनेन्द्र सद्भूतार्थप्रकाशक हैं। जिनेन्द्र जीवादि पदार्थोंका जैसा स्वाभाविक स्वरूप है उसका ठीक वैसा ही यथार्थ निरूपण करनेवाले हैं। उनके वचन वस्तुके स्वरूपको प्रकाशित करते हैं। इस विशेषणसे जिनेन्द्रका वचनातिशय प्रकट किया गया है।

---

१. इति सा—म. २। २. –णे पृथ–भ. २। ३. लोका–म. २। –शन्तोति–म. २। ४–खचर–भ. १, २, प. १, २; क.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ९. तथा कृत्स्नानि-संपूर्णानि घात्यघातीनि कर्माणि-ज्ञानावरणादीनि, तेषां क्षयः-सर्वथा प्रलयः । तं कृत्वा परमं पदं-सिद्धि संप्राप्तः । एतेन कृत्स्नकर्मक्षयलक्षणा सिद्धावस्थाभिदधे । अपरे सुगतादयो मोक्षमवाप्यापि तीर्थनिकारादिसंभवे भूयो भवमवतरन्ति । यदाहुरन्ये[1]—

"ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् ।
गत्वा गच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥ १ ॥" इति ।

न ते परमार्थतो मोक्षगतिभाजः कर्मक्षयाभावात् । न हि तत्त्वतः कर्मक्षये पुनर्भवावतारः । यदुक्तम्—

"दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥ १ ॥" [ तत्त्वार्थाधि० भा० १०।७ ]

उक्तं च श्रीसिद्धसेनदिवाकरपादैरपि भवाभिगामुकानां प्रबलमोहविजृम्भितम्—

"दग्धेन्धनः पुनरुपैति भवं प्रमथ्य निर्वाणमप्यनवधारितभीरनिष्ठम् ।
मुक्तः स्वयं कृततनुश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥ १ ॥"

[ सिद्ध० द्वा० ] इत्यलं विस्तरेण ।

---

§ ९. जिनेन्द्र सम्पूर्ण घातिया तथा अघातिया दोनों प्रकारके ज्ञानावरणादि आठों कर्मोंका समूल नाश करके परम-सिद्ध पदको प्राप्त करनेवाले हैं। अर्थात् ज्ञानावरण, दर्शनावरण, मोहनीय तथा अन्तराय ये कर्म जीवके निजस्वरूप ज्ञानादि गुणोंका घात करनेके कारण घातिया कहलाते हैं। वेदनीय, नाम, गोत्र तथा आयुष्य ये चार कर्म जीवके स्वरूपका साक्षात् घात नहीं करके घातिया कर्मोंकी सहायता करते हैं अतः ये अघातिया हैं। इस विशेषणसे सिद्धावस्थाका समस्तकर्ममलसे रहित होना सूचित किया गया है। सुगत आदि अन्य देव तो मोक्षावस्थाको प्राप्त करके भी अपने शासनका लोप या तिरस्कार देखकर उसके उद्धारार्थ फिर अवतार लेते हैं, जैसा कि वे स्वयं कहते हैं कि—"धर्मतीर्थके प्रवर्तक ज्ञानी तीर्थंकर परमपदको प्राप्त करके भी अपने तीर्थकी अवनति या तिरस्कार देखकर फिरसे संसारमें अवतार लेते हैं॥" वास्तवमें विचार किया जाय तो ऐसे पुनः अवतार लेनेवाले ज्ञानियोंको मोक्षगामी ही नहीं कहना चाहिए, क्योंकि उन्होंने कर्ममलका समूल नाश नहीं किया, अन्यथा पुनर्जन्म कैसे सम्भव हो सकता है। यदि वस्तुतः कर्मोंका अत्यन्त उच्छेद हो गया होता तो इनका पुनः अवतार लेना असम्भव ही था। कहा भी है—"जिस तरह बीजके अच्छी तरह जल जानेपर उससे अंकुरका उत्पन्न होना नितान्त असम्भव है उसी तरह कर्मरूपी बीजके भस्म हो जानेपर संसार रूप अंकुरका उगना, संसारमें पुनः जन्म ग्रहण करना अत्यन्त असम्भव है॥" श्रीसिद्धसेन दिवाकरने संसारमें पुनः अवतार लेनेवाले तीर्थंकरोंकी प्रबल मोह वृत्तिको प्रकट करते हुए लिखा है कि—"हे भगवन्, तुम्हारे शासनको नहीं समझनेवाले लोगोंमें इस प्रकारसे प्रबल मोहका राज्य फैला हुआ है—वे कहते हैं कि—जिन आत्माओंने कर्मरूपी ईंधनको जलाकर संसारका नाश कर दिया है वे भी मोक्षको छोड़कर फिरसे अवतार लेते हैं। मुक्त होकर भी निःशंक शरीर धारण करते हैं। तात्पर्य यह कि—वे अपनी आत्माका सुधार अर्थात् उसे पूर्णकर्मनिर्मुक्त करनेमें तो असफल रहे हैं पर परोपकारके लिए संसारमें अवतार लेनेकी शूरता दिखाते हैं। यही तो उनपर मोहनीय कर्मकी प्रबल छाप है—जो अपना कल्याण तो कर ही नहीं पाये पर परार्थ-परार्थकी रट लगाये हुए हैं।"

इस प्रकार इन चार अतिशयोंसे युक्त तथा अनन्तमुक्त—जिनकी मोक्ष अवस्था अनन्तकाल तक रहनेवाली है, जिनेन्द्र ही सच्चे देव हैं, उन्हें ही देव रूपसे समझना चाहिए। ये स्वयं कर्मोंका नाश करके पूर्णताको पहुँचे हैं। ये ही दूसरे भव्य जीवोंको सदुपदेश द्वारा मोक्षमार्गपर लगा सकते

---

१ -न्येऽपि ज्ञा- म. २ । उद्धृतोऽयम्-स्या. म. पृ. ४ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तदेवमेभिश्चतुर्भिरतिशयैः सनाथो[1] दोषमुक्तश्च यो देवो भवति, स एव देवत्वेनाश्रयणीयः, स एव च परान् सिद्धि प्रापयति, न पुनरितरः सरागो भवेऽवतारवांश्च देव इत्यावेदितं मन्तव्यम् ।

§ १०. ननु मा भूत्सुगतादिको देवः, जगत्स्रष्टृत्वादीश्वरः[2] किमिति नाङ्गीक्रियते । तत्साधकप्रमाणाभावादिति ब्रूमः । अथास्त्येव तत्साधकं प्रमाणम्—क्षित्यादिकं बुद्धिमत्कर्तृकं, कार्यत्वात्[3], घटादिवत् । न चायमसिद्धो हेतुः क्षित्यादेः सावयवत्वेन कार्यत्वप्रसिद्धेः । तथाहि—उर्वीपर्वततर्वादिकं सर्वं कार्यं, सावयवत्वात्, घटवत् । नापि विरुद्धः, निश्चितकर्तृके घटादौ कार्यत्वदर्शनात् । नाप्यनैकान्तिकः, निश्चिताकर्तृकेभ्यो व्योमादिभ्यो व्यावर्तमानत्वात् । नापि कालात्ययापदिष्टः, प्रत्यक्षागमाबाधितविषयत्वात् ।

---

हैं, अन्य सरागी तथा बार-बार अवतार लेनेवाले देव अपनी आत्माको ही जब कर्मबन्धसे मुक्त नहीं कर सके हैं तब वे परार्थ तो किस भरोसेपर करेंगे ?

§ १०. **ईश्वरवादी**—यह तो आपने ठीक ही कहा है कि सुगत आदि यथार्थ देव नहीं हो सकते इसे हम भी मानते हैं। परन्तु आप इस समस्त चराचर जगत्के सिरजनहार ( विधाता ) ईश्वरको देव क्यों नहीं मानते ? अर्थात् देवमें तो समस्त जगत्को रचनेकी शक्ति मानी ही जानी चाहिए। यह ठीक है कि—जो एक बार मुक्त होता है वही फिर संसारमें नहीं आ सकता । पर ईश्वर इन सादिमुक्त जीवोंसे विलक्षण है । वह अनादिमुक्त है, शिष्टानुग्रह तथा दुष्टनिग्रहके लिए उसका अवतार लेना केवल एक लीला है। केवल अवतार लेनेकी लीला दिखानेके कारण उसे सकर्मा नहीं कहना चाहिए । अतः सृष्टिकर्ता ईश्वरको देव मानना ही चाहिए ?

**जैन**—ईश्वरको जगत्का रचयिता सिद्ध करनेवाला कोई भी साधक प्रमाण नहीं है अतः ईश्वरको देव कैसे माना जाय ?

**ईश्वरवादी**—( पूर्वपक्ष ) आपने भी खूब कहा कि—'ईश्वरको कर्ता सिद्ध करनेवाला प्रमाण नहीं है। आप ध्यानसे सुनिए, हम ईश्वर साधक प्रमाणोंका वर्णन करते हैं—पृथिवी, पहाड़, वृक्ष आदि सभी वस्तुएँ किसी बुद्धिमान्के द्वारा बनायी गयी हैं क्योंकि ये सब कार्य हैं, जैसे घड़ा कार्य है तो वह बुद्धिमान् कुम्हारके द्वारा रचा गया है उसी तरह संसारके समस्त कार्य किसी न किसी बुद्धिमान्के द्वारा ही पैदा किये जाते हैं। पृथिव्यादि पदार्थ सावयव होनेके कारण कार्य हैं। जिनके अवयव होते हैं वे पदार्थ कार्य होते हैं। पृथिवी, पहाड़ आदि सभी पदार्थ कार्य हैं क्योंकि वे सावयव—अवयवोंवाले हैं जैसे कि घड़ा । अतः क्षित्यादि पक्षमें कार्यत्वहेतुकी वृत्ति होनेसे यह असिद्ध नहीं है । जिन पदार्थोंके कर्ता निश्चित हैं ऐसे घटादि सपक्षमें कार्यत्व हेतु रहता है अतः यह विरुद्ध भी नहीं है । जिनके उत्पन्न करनेवाले कर्ता नहीं हैं ऐसे नित्य आकाशादि विपक्षमें कार्यत्व हेतु नहीं पाया जाता अतः यह अनैकान्तिक भी नहीं हैं। प्रत्यक्ष तथा आगमसे पक्षमें बाधा नहीं आती अतः कार्यत्व हेतु कालात्ययापदिष्ट भी नहीं है।

---

१. -थो मुक्तश्च -म. १, प. १, २, क., आ. । २. ष्टानीश्वरः-म. २ । ३. "महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्यत्वात्" "सावयवत्वात्"—प्रशस्त. कन्द. पृ. ५४ । प्रश. व्यो. पृ. ३०१ । वैशे. उप. पृ. ६२ । "शरीरानपेक्षोत्पत्तिकं बुद्धिमत्पूर्वकम् कारणत्वात्" द्रव्येषु सावयवत्वेन तद्गुणेषु कार्यगुणत्वेन कर्मसु कर्मत्वेनैव तदनुमानात् ।" —प्रशस्त. किरणा. पृ. ९७ । न्यायली. पृ. २० । न्यायमुक्ता. दिन. पृ. ५२ । "विवादाध्यासिताः तनु-तरु-महीधरादयः उपादानाभिज्ञकर्तृका उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा" यथा प्रासादादि । न चैषामुत्पत्तिमत्त्वमसिद्धम्; सावयवत्वेन वा महत्त्वे सति क्रियावत्त्वेन वा वस्त्रादिवत्तत्सिद्धेः ।" न्यायवा. ता. टी. पृ. ५९८ । न्यायमं. पृ. १९४ । "कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यः विश्वविदव्ययः ॥१॥" —न्यायकुसु. पञ्चमस्त. । ४. वत्त्वे का-म. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रतिपादनपरत्वाद्वा पृथगुपादानस्यादुष्टता। यथा च संवरनिर्जरयोर्मोक्षहेतुता, आस्रवस्य [1]बन्धनिबन्धनत्वं, पुण्यापुण्यद्विभेदबन्धस्य च संसारहेतुत्वं तथागमात् प्रतिपत्तव्यम्।

§ ९१. तत्र पुण्यं शुभाः कर्मपुद्गलाः ३। त एव त्वशुभाः पापम् ४। आस्रवति कर्म यतः स आस्रवः [2] कायवाङ्मनोव्यापारः, पुण्यापुण्यहेतुतया [3] चासौ द्विविधः ५। आस्रवनिरोधः संवरः [4] गुप्तिसमितिधर्मानुप्रेक्षादीनां [5] चास्रवप्रतिबन्धकारित्वात्, स च द्विविधः सर्वदेशभेदाद् ६।

§ ९२. योगनिमित्तः सकषायस्यात्मनः कर्मवर्गणापुद्गलैः संश्लेशविशेषो बन्धः [6], स च सामान्येनैकविधोऽपि प्रकृतिस्थित्यनुभागप्रदेशभेदेन चतुर्धा [7], पुनरेकैको ज्ञानावरणादिमूलप्रकृतिभेदादष्टधा [8], पुनरपि मत्यावरणादिलदुत्तरप्रकृतिभेदादनेकविधः। अयं च कश्चित्तीर्थकरत्वादिफलनिर्वर्तकत्वात् प्रशस्तः, अपरश्च नारकादिफलनिर्वर्तकत्वादप्रशस्तः, प्रशस्ताप्रशस्तात्मपरि[9]-

समाधान—यद्यपि ये सब जीव और अजीव दोमें ही अन्तर्भूत हैं, फिर भी लोगोंको पुण्य-पाप आदिमें सन्देह रहता है, अतः उनके सन्देहको दूर करनेके लिए पुण्य और पापका स्पष्ट निर्देश कर दिया है। संसारके कारणोंका स्पष्ट कथन करनेके लिए आस्रव और बन्धका तथा मोक्ष और मोक्षके कारणोंका खुलासा करनेके निमित्त मोक्ष, संवर तथा निर्जराका स्वतन्त्र रूपसे कथन किया गया है। अतः विशेष प्रयोजनके कारण इनका पृथक्-पृथक् निरूपण करनेमें कोई दोष नहीं है। आगमोंमें जिस विस्तार तथा खूबीके साथ संवर और निर्जराको मोक्षका कारण कहा है, आस्रवको बन्धमें हेतु बताया है, पुण्य और पाप रूपसे बन्धके दो भेद बताये हैं तथा आस्रव और बन्ध दोनोंको ही संसारका मूल बताया है वह विस्तृत कथन आगमसे ही समझ लेना चाहिए।

§ ९१. शुभ—अच्छा फल देनेवाले कर्मपुद्गल पुण्य हैं, तथा बुरा फल देनेवाले कर्मपुद्गल पापरूप होते हैं। मन वचन तथा कायके जिन व्यापारोंसे, इनकी जिन हरकतोंसे कर्म आते हैं उन्हें आस्रव कहते हैं। मन वचन कायके अच्छे व्यापार पुण्यपुद्गलकर्मोंको लाते हैं अतः वे पुण्यास्रव कहे जाते हैं तथा मन वचन कायके जो दुष्ट व्यापार बुरे पाप कर्मोंको लाते हैं उन्हें पापास्रव कहते हैं। इस प्रकार आस्रव तत्त्वके दो भेद होते हैं। कर्मोंके आस्रवको रोकना संवर कहलाता है। गुप्ति—मन वचन और कायकी क्रियाओंको रोकना, समिति—सावधानी पूर्वक देखभाल कर चलना खाना बोलना रखना उठाना तथा मलमूत्रका उत्सर्ग करना, धर्म—क्षमा आदि, अनुप्रेक्षा—संसारकी अनित्यदशाका चिन्तवन करना आदिसे कर्मोंका आना बन्द हो जाता है अतः ये क्रियाएँ भी संवर कही जाती हैं। संवर आंशिक भी होता है तथा सम्पूर्ण भी। सर्वसंवरमें कर्मोंका आना बिलकुल रोक दिया जाता है तथा देशसंवरमें कुछ-कुछ कर्म रुकते हैं।

§ ९२. कषाययुक्त आत्मा अपनी मन वचन कायकी क्रियाओंसे जिन कर्मपुद्गलोंको खींचता है, उन कर्मपुद्गलोंसे आत्माके विशिष्ट संयोगको बन्ध कहते हैं। बन्धके चार भेद होते हैं—१. प्रकृतिबन्ध—कर्मपुद्गलोंमें ज्ञानको रोकनेका या दर्शनको रोकने आदिका स्वभाव पड़ना। २. स्थितिबन्ध—कर्मोंके आत्माके साथ बँधे रहनेके समयकी मर्यादा। ३. अनुभागबन्ध—तीव्र मध्यम या मृदु फल देनेकी शक्ति पड़ना। ४. प्रदेशबन्ध—कर्मोंका और आत्मप्रदेशोंका दूध और

१. बन्धनिनि—आ., क.। २. "कायवाङ्मनःकर्म योगः। स आस्रवः। शुभः पुण्यस्याशुभः पापस्य।" —त. सू. ६।१–३। ३. –हेतुत्वाच्चासौ म. २। ४. "आस्रवनिरोधः संवरः।" —त. सू. ९।१। ५. "स गुप्तिसमितिधर्मानुप्रेक्षापरिषहजयचारित्रैः।" —त. सू. ९।२। ६. "सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते स बन्धः।"—त. सू. ८।२। ७. "प्रकृतिस्थित्यनुभागप्रदेशास्तद्विधयः।" —त. सू. ८।३। ८. "आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायाः।"—त. सू. ८।४। ९. –णामसमुद्भूत–म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

णामोद्भूतस्य कर्मणः सुखदुःखसंवेदनीयफलनिर्वर्तकत्वात् ७। आत्मसंपृक्तकर्मनिर्जरणकारणं निर्जरा द्वादशविधतपोरूपा। सा चोत्कृष्टा शुक्लध्यानरूपा "तपसा निर्जरा च" [त. सू. ९।३] इति वचनात्, ध्यानस्य चान्तरतपोरूपत्वात् ८। विनिर्मुक्ताशेषबन्धनस्य प्राप्तनिजस्वरूपस्यात्मनो लोकान्तेऽवस्थानं मोक्षः, "बन्धविप्रयोगो मोक्षः" इति वचनात् ९। एतानि नवसंख्यानि तत्त्वानि तन्मते जैनमते ज्ञातव्यानि ॥४७॥

§ ९३. अथ शास्त्रकार एव तत्त्वानि क्रमेण व्याख्याति, तत्र यथोद्देशं[1] निर्देश इति न्यायात् प्रथमं जीवतत्त्वमाह—

तत्र ज्ञानादिधर्मेभ्यो भिन्नाभिन्नो विवृत्तिमान् ।
शुभाशुभकर्मकर्ता भोक्ता कर्मफलस्य च ॥४८॥
चैतन्यलक्षणो जीवो यश्चैतद्विपरीतवान् ।
अजीवः स समाख्यातः पुण्यं सत्कर्मपुद्गलाः ॥४९॥ युग्मम्[2]

पानीकी तरह एकमेक हो जाना। प्रकृतिबन्धके १. ज्ञानावरण–ज्ञानको रोकनेवाला, २. दर्शनावरण–दर्शनको रोकनेवाला, ३. वेदनीय—सुख-दुःखका अनुभव करानेवाला, ४. मोहनीय–आत्मामें राग-द्वेष, मोह आदि विकार पैदा करनेवाला, ५. आयु—उमर, ६ नाम—शरीरकी रचना आदि करनेवाला, ७. गोत्र—जिसके कारण ऊँच-नीच व्यवहार होता है, ८. अन्तराय—दान लाभ भोग उपभोग तथा शक्तिसंचयमें विघ्न करनेवाला, ये आठ भेद होते हैं। ये आठों मूल प्रकृतियाँ अपनी मतिज्ञानावरण, श्रुतज्ञानावरण आदि उत्तरप्रकृतियोंके भेदसे अनेक प्रकारकी होती हैं। इन्हींमें कुछ प्रकृतियाँ प्रशस्त—पुण्यरूप होती हैं तथा कुछ प्रकृतियाँ अप्रशस्त—पापरूप। जिनके उदयसे तीर्थंकर चक्रवर्ती आदि पद प्राप्त होते हैं वे पुण्यप्रकृतियाँ हैं। जिनसे नरक तिर्यंच आदि निन्द्य पर्याय प्राप्त होती हैं वे पापकर्म हैं। आत्माके सद्विचारोंसे सद्वचन तथा सत्कर्मोंसे सुख देनेवाले पुण्यकर्मोंका बन्ध होता है। तथा खोटे विचार, मिथ्या भाषण और दुष्कर्मोंसे दुःख देनेवाले पापकर्मोंका बन्ध होता है। आत्माके द्वारा पहले संचित किये हुए कर्मोंको झरानेवाले कारण निर्जरा कहे जाते हैं। यह निर्जरा उपवास आदि बाह्य तथा प्रायश्चित्त, ध्यान आदि आभ्यन्तर तपोंसे होती है। तप बारह होते हैं, इनके द्वारा कर्म बलात् झरा दिये जाते हैं। शुक्लध्यान सबसे बड़ा तप है। इससे अनन्तगुणी निर्जरा होती है। "तपसे संवरके साथ ही साथ निर्जरा भी होती है" यह तत्त्वार्थसूत्रमें कहा गया है। ध्यान आभ्यन्तर तप है। समस्त कर्मबन्धनोंके टूट जानेपर अपने शुद्ध स्वरूपमें लीन होना मोक्ष है। मुक्त जीव इस लोकके सबसे ऊपरी भागमें जा पहुँचते हैं। "बन्धका विप्र अर्थात् विशेष रूपसे तथा प्रकृष्ट रूपसे नष्ट होना मोक्ष है" ऐसा पुरातन आचार्योंका कथन है। इस प्रकार जैनमतके नव तत्त्वोंका यह संक्षिप्त कथन है ॥४७॥

§ ९३. अब शास्त्रकार स्वयं ही इन तत्त्वोंका विशेष व्याख्यान करते हैं। 'जिस क्रमसे नाम लिये हों उसी क्रमसे व्याख्यान होना चाहिए' इस नियमके अनुसार सर्व प्रथम जीवतत्त्वका स्वरूप कहा जाता है—

**जीव चैतन्य स्वरूप है। यह अपने ज्ञान दर्शन आदि गुणोंसे भिन्न भी है तथा अभिन्न भी है। कर्मोंके अनुसार अनेक मनुष्य पशु आदिकी पर्यायें धारण करता है। अपने अच्छे और बुरे विचारोंसे शुभ और अशुभ कर्मोंको बाँधता है तथा उनके सुख-दुःख रूप फलोंको भोगता है, जो चेतनासे शून्य है वह अजीव है। सत्कर्मोंके द्वारा लाये गये कर्मपुद्गल पुण्य कहलाते हैं ॥४८-४९॥**

१. यथोद्देशस्तथा निर्देश इति म. २। २. 'युग्मं' नास्ति आ.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ९४. व्याख्या—तत्रेति निर्धारणार्थः। ये ज्ञानदर्शनचारित्रसुखदुःखवीर्यभव्यत्वसत्त्वप्रमेयत्वद्रव्यत्वप्राणधारित्वक्रोधादिपरिणतत्वसंसारित्वसिद्धत्वपरवस्तुव्यावृत्तत्वादयः [1] [2] स्वपरपर्याया जीवस्य भवन्ति, ते ज्ञानादयो धर्मा उच्यन्ते। तेभ्यो जीवो न भिन्नो नाप्यभिन्नः किं तु जात्यन्तरतया भिन्नाभिन्नः। यदि हि ज्ञानादिधर्मेभ्यो जीवो भिन्नः स्यात्; तदा अहं जानामि, अहं पश्यामि, अहं ज्ञाता, अहं द्रष्टा, अहं सुखितः, अहं भव्यश्च' इत्याद्यभेदप्रतिभासो न स्यात्, अस्ति च सर्वप्राणिनां सोऽभेदप्रतिभासः। तथा यद्यभिन्नः स्यात् तदा "अयं धर्मी, एते धर्माः' इति भेदबुद्धिर्न स्यात्, अस्ति च सा। अथवा अभिन्नतायां ज्ञानादिसर्वधर्माणामैक्यं स्यात्, एकजीवाभिन्नत्वात्। तथा च 'मम ज्ञानं मम दर्शनं चास्ति' [3] इत्यादिज्ञानादिधर्माणां मिथोभेदप्रतीतिर्न स्यात्। अस्ति च सा। ततो ज्ञानादिधर्मेभ्यो भिन्नाभिन्न एवाभ्युपगन्तव्यः। अनेन धर्मधर्मिणोर्वैशेषिकाद्यभिमतं

§ ९४. श्लोकमें 'तत्र' शब्द निश्चयवाची है। ज्ञान, दर्शन, चारित्र, सुख, दुःख, वीर्य—शक्ति, भव्यत्व—मुक्ति पानेकी योग्यता, अभव्यत्व—मोक्ष जानेकी योग्यताका अभाव, सत्त्व—मौजूदगी, प्रमेयत्व, द्रव्यत्व, प्राणोंका धारण करना, क्रोध मान आदि रूपसे बिगड़ जाना, संसारी होना, मुक्त होना, अजीवादि पदार्थोंके स्वरूपमें नहीं मिलना, उनसे अपनी सत्ता पृथक् रखना इत्यादि अनेकों पर्यायें जीवकी होती हैं। ये पर्यायें कुछ तो स्वनिमित्तक हैं तथा कुछ परके निमित्तसे होती हैं। इन्हीं पर्यायोंको ज्ञानादि धर्म कहते हैं। ये ज्ञानादिधर्म जीवसे न तो अत्यन्त भिन्न ही हैं और न सर्वथा अभिन्न ही। किन्तु इनमें सर्वथा भिन्न तथा सर्वथा अभिन्नरूप दो अन्तिम प्रकारोंके बीचमें रहनेवाला कथंचिद् भिन्नाभिन्नरूप एक तीसरा ही विलक्षण प्रकार पाया जाता है। हम चाहें कि जीवको पृथक् तथा ज्ञानादिको पृथक् कर दें तो यह पृथक्करण असम्भव है इसलिए जीवसे ज्ञान आदि अभिन्न हैं, तथा जीव धर्मी है ज्ञान धर्म है, जीव नित्य हो सकता है पर ज्ञान अनित्य है, अमुक घट ज्ञानके नष्ट हो जाने पर भी जीव नष्ट नहीं होता, जीवको 'जीव' कहते हैं जब कि ज्ञानको जीवशब्दसे नहीं कहते इत्यादि कारणोंसे जीव एक पृथक् है ज्ञान पृथक् है। अतः जीव और ज्ञान आदिका एक विलक्षण ही सम्बन्ध है। यदि जीव भिन्न हो तथा ज्ञान आदि भिन्न हों, तो 'मैं जानता हूँ, मैं देखता हूँ, मैं ज्ञाता हूँ, मैं देखनेवाला हूँ, मैं सुखी हूँ, मैं भव्य हूँ' इत्यादि रूपसे ज्ञान आदिसे 'मैं' आत्माका अभिन्न भान नहीं हो सकेगा। परन्तु हर एक प्राणी 'मैं सुखी हूँ, दुःखी हूँ' आदि रूपसे अपने को ज्ञानादिसे अभिन्न अनुभव करता ही है। यदि ज्ञान आदिसे जीव सर्वथा अभिन्न हो; तब अभेदमें या तो जीव ही रहेगा या ज्ञानादि ही 'ये मेरे ज्ञानादि हैं, मैं ज्ञानादि गुणोंको धारनेवाला हूँ' इस तरह भेद प्रतिभास नहीं हो सकेगा। उक्त प्रयोगोंमें 'यह धर्मी है तथा ये धर्म हैं' इस प्रकार भेद प्रतिभास हो ही रहा है। जहाँ 'मेरा' प्रयोग होता है वहाँ दो वस्तुएँ होनी ही चाहिए। जहाँ अकेला अभिन्न है वहाँ 'मेरा' प्रयोग नहीं हो सकता। परन्तु 'मेरा ज्ञान, मेरा सुख' आदि ममकार सभी प्राणियोंको होते ही हैं। यदि ज्ञान आदि गुण जीवसे सर्वथा अभिन्न माने जायें, तो फिर एक आत्मासे अभिन्न होनेके कारण ज्ञान, दर्शन, सुख आदि गुणोंमें परस्पर कोई भेद ही नहीं रहेगा। परन्तु 'मेरा ज्ञान, मेरा दर्शन, मेरा सुख' इत्यादि प्रतिभासोंमें ज्ञान दर्शन आदि धर्म स्पष्ट रूपसे पृथक् ही पृथक् प्रतीत हो रहे हैं। अतः ज्ञान आदिका जीवसे कथंचिद् भेदाभेद मानना ही उचित है। वैशेषिक ज्ञान आदि गुणोंको एक स्वतन्त्र पदार्थ तथा आत्माको एक स्वतन्त्र ही पदार्थ मानते हैं, यह उनका एकान्त अतिवाद है। इसी तरह बौद्ध ज्ञान आदि क्षणरूप ही आत्मा मानते हैं, अर्थात् ज्ञानादि तथा आत्मामें सर्वथा अभेद मानकर ज्ञान प्रवाहको ही आत्मा कहते हैं। बौद्धोंका भी यह एकान्त अतिवाद है। इन दोनों अतिवादोंका

१. –भव्याभव्यत्व–म. १, २, प. १, २, क.। २. स्वपर्याया म. २। ३. इत्यादि ज्ञानादि मिथो म. १, प. १, २, क.। इत्यादि मिथो म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भेदैकान्तं सौगतस्वीकृतं चाभेदैकान्तं प्रतिक्षिपति, सौगतेनापि बुद्धिक्षणपरम्पराख्पस्यात्मनो धर्मित्वेन स्वीकारात् ।

§ ९५. [1]तथा विविधं वर्तनं विवृत्तिर्नरामरादिपर्यायान्तरानुसरणं तद्वान् विवृत्तिमान्। अनेन भवान्तरगामिनमात्मानं प्रति विप्रतिपन्नांश्चार्वाकान् कूटस्थनित्यात्मवादिनो नैयायिकादीन्निरस्यति ।

§ ९६. तथा शुभाशुभानि कर्माणि करोतीति शुभाशुभकर्मकर्त्ता। तथा स्वकृतस्य कर्मणो यत्फलं सुखादिकं तस्य साक्षाद्भोक्ता च । चकारो विशेषणानां समुच्चये । एतेन विशेषणद्वयेनाकर्त्तारमुपचरितवृत्त्या भोक्तारं चात्मानं मन्यमानानां सांख्यानां निरासः ।

§ ९७. तथा चैतन्यं साकारनिराकारोपयोगात्मकं लक्षणं स्वरूपं यस्य स चैतन्यलक्षणः । एतेन जडस्वरूपो नैयायिकादिसंमत आत्मा व्यवच्छिद्यते। एवंविशेषणो जीवः समाख्यात इत्यत्रापि संबन्धनीयमिति ॥

§ ९८. चार्वाकाश्चर्चयन्ति यथा—इह कायाकारपरिणतानि चेतनाकारणभूतानि भूतान्येवोपलभ्यन्ते, न पुनस्तेभ्यो व्यतिरिक्तो भवान्तरयायी यथोक्तलक्षणः कश्चनाप्यात्मा, तत्सद्भावे

निराकरण करके जीव और ज्ञान आदिमें कथंचित् भेदाभेद सिद्ध करनेके लिए 'भिन्नाभिन्न' विशेषण दिया है। बौद्ध ज्ञानक्षणोंके प्रवाहको आत्मा मानते हैं अतएव उनके मतसे भी ऐसा आत्मा धर्मी है।

§ ९५. विवृत्तिमान्—यह जीव अनेक प्रकारकी मनुष्य देव आदि पर्यायोंमें वर्तन—निवास करनेवाला, इन पर्यायों रूपसे अपने स्वरूपको बदलनेवाला होता है। इस विशेषणसे आत्माको इस जन्ममें ही देहके साथ भस्म करनेवाले, उसे परलोकगामी नहीं माननेवाले चार्वाकोंका निराकरण हो जाता है। इसी तरह आत्माको कूटस्थ—अपरिवर्तनशील सर्वथा नित्य माननेवाले नैयायिक आदि का भी खण्डन हो जाता है।

§ ९६. यह आत्मा अपनी अच्छी और बुरी भावनाओंसे शुभ और अशुभ दोनों प्रकारके कर्मोंका कर्त्ता है। और 'जैसी करनी तैसी भरनी' के अनुसार उन कर्मोंके अच्छे और बुरे सुख और दुःख रूपी फलोंका भी स्वयं ही भोक्ता है। 'च' शब्दसे कर्ता और भोक्ता दोनों विशेषणोंके समुच्चयका परिज्ञान होता है। अर्थात् इन कर्ता और भोक्ता विशेषणोंसे आत्माको अकर्ता कहनेवाले तथा प्रकृति या बुद्धिके द्वारा आत्मामें उपचरित भोग माननेवाले सांख्योंके मतका निराकरण हो जाता है।

§ ९७. आत्मा चैतन्य रूप है। चैतन्य दो प्रकारका होता है—एक साकार चैतन्य—ज्ञान और दूसरा निराकार चैतन्य—दर्शन। जब चैतन्य किसी बाह्य पदार्थको जानता है उस समय वह साकार—घटादिको विषय करनेके कारण ज्ञान कहलाता है। तथा जिस समय चैतन्य किसी बाह्य अर्थके आकार न होकर निराकार—केवल चैतन्याकार ही रहता है उस समय वह दर्शन कहा जाता है। ज्ञान और दर्शन दोनों रूप उपयोग जीवका असाधारण स्वरूप है। इस विशेषणसे आत्माको स्वरूपसे जड़ अर्थात् ज्ञानशून्य माननेवाले नैयायिक आदिका निराकरण हो जाता है। जैनमतमें उपरोक्त विशेषणोंवाला जीव माना गया है।

§ ९८. चार्वाकमतवाले जीवको स्वतन्त्र पदार्थ नहीं मानते अतः वे जीवके उपरोक्त विशेषणोंसे असहमत होकर इस प्रकार चर्चा करते हैं—

**चार्वाक**—( पूर्वपक्ष ) इस संसारमें आत्मा नामका कोई स्वतन्त्र पदार्थ नहीं है। पृथिवी जल आदिका एक विलक्षण रासायनिक मिश्रण होनेसे ही शरीरमें चेतना प्रकट हो जाती है। इन

१. तथाविधं वर्तनं भ. १, २, प. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रमाणाभावात् । तथाहि—भूतव्यतिरिक्तात्मसद्भावे किं प्रत्यक्षं प्रमाणं प्रवर्तेत उतानुमानम्[1]। न तावत्प्रत्यक्षम्; तस्य प्रतिनियतेन्द्रियसंबद्धरूपादिगोचरतया तद्विलक्षणे जीवे प्रवृत्त्यनुपपत्तेः। न च 'घटमहं वेद्मि' इत्यहंप्रत्यये ज्ञानकर्तृतयात्मा भूतव्यतिरिक्तः प्रतिभाति इत्यभिधातव्यम्; तस्य 'स्थूलोऽहं कृशोऽहम्' इत्यादिवच्छरीरविषयत्वस्यैवोपपत्तेः। न खलु तत्प्रत्ययस्यात्मालम्बनत्वमस्ति, आत्मनि स्थौल्यादिधर्मासंभवात्। तथा 'घटमहं वेद्मि' इत्यस्यापि प्रत्ययस्य न शरीरादन्यो भवत्परिकल्पितः कश्चनाप्यात्मा आलम्बनत्वेन स्वप्नेऽपि प्रतीयते। अप्रतीतस्यापि कल्पने कल्पनागौरवं प्रतिनियतवस्तुव्यवस्थाया अभावश्च स्यात्। न च जडरूपस्य शरीरस्य घटादेरिवाहंप्रत्ययोऽनुपपन्नः इति वाच्यम्; चेतनायोगेन तस्य सचेतनत्वात्। न च सा चेतना जीवकर्तृका इति वाच्यम्; तस्याप्रतीतत्वात् तत्कर्तृत्वमयुक्तम्, खपुष्पादेरपि तत्प्रसङ्गात्। ततः प्रसिद्धत्वाच्छरीरस्यैव चैतन्यं

चैतन्यके कारणभूत शरीराकार भूतोंको छोड़कर चैतन्य आदि विशेषणोंवाला, परलोक तक गमन करनेवाला कोई भी आत्मा नहीं है। आप जैसे आत्माका वर्णन करते हैं उसको सिद्ध करनेवाला कोई भी प्रमाण नहीं है। बताओ, इन पृथिवी आदिसे भिन्न आत्माको सिद्ध करनेवाला प्रत्यक्ष प्रमाण है या अनुमान प्रमाण ? प्रत्यक्ष तो भिन्न-भिन्न इन्द्रियोंसे उत्पन्न होकर अपनेसे सम्बन्ध रखनेवाले रूपादि स्थूल पदार्थोंको विषय करता है अतः आपके अमूर्त जीवमें तो उसकी प्रवृत्ति ही नहीं हो सकती।

**शंका**—इन्द्रिय प्रत्यक्षसे आत्माकी प्रतीति नहीं होती तो न हो, पर 'मैं घटको जानता हूँ' इस स्वसंवेदन प्रत्यक्षके द्वारा जानने रूप क्रियाका कर्ता आत्मा प्रतिभासित होता ही है। स्वसंवेदन प्रत्यक्ष पृथिवी आदि भूतोंका नहीं होता अतः वह आत्मा इन पृथिवी आदि भूतोंसे विलक्षण है। 'मैं हूँ' यह अहम्प्रत्यय ही आत्माका सबसे प्रबल साधक प्रमाण है ?

**समाधान**—आप अहम्प्रत्ययके चक्करमें न पड़िए। जिस प्रकार 'मैं मोटा हूँ, मैं दुबला हूँ' यह अहम्प्रत्यय मोटे और दुबले शरीरके कारण होता है अतः शरीरको ही विषय करता है उसी तरह 'मैं घटको जानता हूँ' यह अहम्प्रत्यय भी जाननेवाले शरीरको ही विषय करता है उससे विलक्षण किसी आत्माको नहीं। 'मैं मोटा हूँ, मैं दुबला हूँ' ये प्रत्यय आत्माको तो विषय कर ही नहीं सकते क्योंकि आत्मामें मुटापा या दुबलापन तो होता ही नहीं है। इस तरह 'मैं घटको जानता हूँ' यह अहम्प्रत्यय भी जब प्रत्यक्ष सिद्ध शरीरको ही विषय करके बन जाता है तब इसको एक काल्पनिक आत्माको विषय करनेवाला माननेमें कल्पना गौरव है। तुम्हारा आत्मा तो स्वप्नमें भी नहीं दिखाई देता, जागतेकी तो बात ही दूर है। यदि इस तरह सर्वथा अप्रतीत पदार्थोंकी कल्पना करने बैठ जांय; तो फिर कल्पनाराज ही हो जायेगा, संसारकी सारी वस्तु व्यवस्थाका लोप हो जायेगा। हम कह सकते हैं कि घटप्रत्यय घटको विषय नहीं करके उसमें बैठेहुए एक अमूर्तीक भूतको विषय करता है। यदि कहो कि जिस प्रकार अचेतन घड़ेमें 'मैं घड़ा हूँ' यह अहम्प्रत्यय नहीं होता उसी तरह जडशरीरमें भी 'मैं घटको जानता हूँ' यह अहम्प्रत्यय नहीं बन सकता; सो भी ठीक नहीं है; क्योंकि घट और शरीरमें बहुत अन्तर है। शरीर चेतनाके सम्बन्धसे सचेतन हो जाता है जब कि घड़ा सदा अचेतन ही रहता है। पृथिवी आदि भूतोंका वह विलक्षण मिश्रण शरीरमें ही हुआ है अतः चेतना शरीरमें ही प्रकट होती है और इसीलिए 'मैं जानता हूँ' यह अहम्प्रत्यय सचेतन शरीरमें ही हो सकता है। उस चेतनाका कर्ता जीव हरगिज नहीं हो सकता; क्योंकि वह अविद्यमान है, किसी भी प्रमाणसे सिद्ध नहीं है। असत् चीजको कर्ता बनाने पर तो आपको आकाशके फूलको भी चेतनाका कर्ता

१. –तानुमानं वा न म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रति कर्तृत्वं युक्तम् । तदन्वयव्यतिरेकानुविधायित्वाच्च । प्रयोगश्चात्र—यत् खलु यस्यान्वयव्यतिरेकावनुकरोति तत्तस्य कार्यं यथा घटो मृत्पिण्डस्य, शरीरस्यान्वयव्यतिरेकावनुकरोति च चैतन्यम्, तस्मात्तत्कर्तृत्वम् । अन्वयव्यतिरेकसमधिगम्यो हि सर्वत्र कार्यकारणभावः । तौ चात्र विद्येते, सति शरीरे चैतन्योपलब्धेः, असति चानुपलब्धेः । न च मृतशरीरे चैतन्यानुपलब्धेस्तदन्वयव्यतिरेकानुविधायित्वमसिद्धम्[1] इति वाच्यम्; मृतावस्थायां वायुतेजसोरभावेन शरीरस्यैवाभावात्, विशिष्टभूतसंयोगस्यैव शरीरत्वप्रतिपादनात् । न च शरीराकारमात्रे चैतन्योत्पत्तिर्युक्ता; चित्रलिखिततुरङ्गमादिष्वपि चैतन्योत्पत्तिप्रसङ्गात् । ततः सिद्धं शरीरकार्यमेव चैतन्यम् । ततश्च चैतन्यसहिते शरीर एवाहंप्रत्ययोत्पत्तिः सिद्धा । इति न प्रत्यक्षप्रमेय आत्मा, ततश्चाविद्यमान एव । प्रयोगश्चात्र—नास्त्यात्मा, अत्यन्ताप्रत्यक्षत्वात्, यदत्यन्ताप्रत्यक्षं तन्नास्ति, तथा खपुष्पम् । यच्चास्ति तत्प्रत्यक्षेण

मान लेना चाहिए। इसलिए प्रत्यक्षसिद्ध शरीरको ही जानना देखना आदि चेतनाका कर्ता मानना चाहिए। देखो, शरीरके होने पर इन्द्रियोंके द्वारा जो घट-पट आदि पदार्थ जाने जाते हैं जब शरीर नष्ट हो जाता है तब जानना आदि सब बन्द हो जाते हैं। अतः यह अनुमान करना बिलकुल सहज है कि—शरीर ही चैतन्य—जानने आदि क्रियाओंका कर्ता है क्योंकि चैतन्यका शरीरके साथ ही अन्वय ( होने पर होना ) तथा व्यतिरेक ( नहीं होने पर नहीं होना ) पाया जाता है। जैसे कि मिट्टीके पिण्डके होने पर उत्पन्न होनेवाले तथा मिट्टीके पिण्डके अभावमें नहीं होनेवाले घड़ेमें मिट्टीका पिण्ड कारण माना जाता है उसी तरह चैतन्य भी शरीरके होने पर ही होता है शरीरके अभावमें कभी नहीं होता अतः चैतन्यका कारण भी शरीरको ही मानना चाहिए। सब जगह कार्यकारणभावकी प्रतीति अन्वय और व्यतिरेकसे ही मानी जाती है। चैतन्य और शरीरमें अन्वय और व्यतिरेक नियमित पाये जाते हैं।

शंका—शरीरके मुर्दा हो जाने पर चैतन्य तो नहीं पाया जाता, अतः शरीर और चैतन्यका अन्वय-व्यतिरेक नियमित कैसे कहा जा सकता है ? मृत शरीरमें चैतन्यका अन्वय-व्यतिरेक असिद्ध है।

समाधान—आप शरीरका अर्थ ही नहीं समझते। शरीरके माने हैं—गरमीवाला तथा श्वास आदि लेनेवाला शरीर। जब वह मुर्दा हो जाता है तब उसमें न तो गरमी ही रहती है और न श्वासरूप हवा ही अतः हम उस वायु और गरमीसे शून्य मृत शरीरको शरीर ही नहीं कहते, वह तो केवल मिट्टीका पुतला ही रह गया है। जिसमें पृथिवी आदि भूतोंका विलक्षण रासायनिक मिश्रण होता है और जब तक वह मिश्रण अपने प्रकृत रूपमें बना रहता है तभी तक वह शरीर कहा जा सकता है, मुर्दा अवस्थामें नहीं। 'शरीरका आकार बना है अतः उसमें चैतन्यकी उत्पत्ति होनी चाहिए' यह नियम तो किसी भी तरह उचित नहीं कहा जा सकता; क्योंकि मनुष्य या घोड़े के चित्रमें भी मनुष्य और घोड़ेके शरीरका हूबहू जैसाका तैसा आकार मौजूद है, अतः आपके नियमानुसार तो उन चित्रोंको भी बोलना चाहिए तथा जानना चाहिए, उनमें भी चैतन्यकी जागृति होनी चहिए। अतः यही मानना उचित तथा युक्तिसंगत है—चैतन्य शरीरका कार्य है। 'पृथिवी आदि भूतोंका विशिष्ट मिश्रण होनेसे बननेवाले शरीरमें ही, जब तक वह मिश्रण अपने प्रकृत रूपमें रहकर उसे शरीर बनाये रखता है तब तक चैतन्य उसके कार्यरूपमें कायम रहता है।' अतः चैतन्यविशिष्ट शरीरमें ही 'मैं जानता हूँ' इस अहं प्रत्ययकी उत्पत्ति माननी चाहिए अतः आत्माको अहम्प्रत्ययका विषय मानकर प्रत्यक्षसिद्ध कहना अयुक्त है। और जब आत्मा प्रत्यक्षका विषय नहीं हो सकती तब उसका सद्भाव नहीं माना जा सकता। अतः हम कह सकते हैं कि—आत्मा नहीं है, क्योंकि वह सर्वथा अप्रत्यक्ष है, जो किसी भी तरह प्रत्यक्षको प्रतिभासित

१. –त्वं न सिद्धमिति भ. २ ।



Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

गृह्यत एव, यथा घटः। अणवोऽपि ह्यप्रत्यक्षाः, किं तु घटादिकार्यतया परिणतास्ते प्रत्यक्षत्वमुपयान्ति, न पुनरेवमात्मा कदाचिदपि प्रत्यक्षभावमुपगच्छति, अतोऽत्रात्यन्तेति विशेषणमिति न परमाणुभिर्व्यभिचार इति।

§ ९९. तथा नाप्यनुमानं भूतव्यतिरिक्तात्मसद्भावे प्रवर्तते, तस्याप्रमाणत्वात्, प्रमाणत्वे वा प्रत्यक्षबाधितपक्षप्रयोगानन्तरं प्रयुक्तत्वेन हेतोः कालात्ययापदिष्टत्वात्। शरीरव्यतिरिक्तात्मपक्षो हि प्रत्यक्षेणैव बाध्यते।

§ १००. किंच लिङ्गलिङ्गिसंबन्धस्मरणपूर्वकं ह्यनुमानम्। यथा—पूर्वं महानसादावग्निधूमयोर्लिङ्गिलिङ्गयोरन्वयव्यतिरेकवत्त्वमविनाभावमध्यक्षेण गृहीत्वा तत उत्तरकालं क्वचित्कान्तारपर्वतनितम्बादौ गगनावलम्बिनीं[1] धूमलेखामवलोक्य प्राग्गृहीतसंबन्धमनुस्मरति। तद्यथा—यत्र यत्र धूमस्तत्र तत्र वह्निमद्राक्षं यथा महानसादौ, धूमश्चात्र दृश्यते, तस्माद्वह्निनापीह भवितव्यमित्येवं लिङ्गग्रहणसंबन्धस्मरणाभ्यां तत्र प्रमाता हुतभुजमवगच्छति। न चैवमात्मना लिङ्गिना सार्धं कस्यापि लिङ्गस्य प्रत्यक्षेण संबन्धः सिद्धोऽस्ति, यतस्तत्संबन्धमनुस्मरतः पुनस्तल्लिङ्गदर्श-

---

नहीं होता वह है ही नहीं, जैसे कि आकाशका फूल। जिसका सद्भाव होता है वह प्रत्यक्षसे प्रतिभासित होता ही है जैसे कि घट। यद्यपि परमाणु प्रत्यक्षके विषय नहीं होते परन्तु जब वे मिलकर घट आदि स्थूल रूपको धारण कर लेते हैं तब उनका प्रत्यक्ष हो ही जाता है? पर आत्मा तो कभी भी किसी भी तरह प्रत्यक्षसे प्रतिभासित नहीं होता अतः कैसे इस नितान्त अप्रत्यक्ष पदार्थं की सत्ता मानी जाये। इसीलिए हमने 'अत्यन्त अप्रत्यक्ष' को हेतु बनाया है। परमाणु घट आदि की शकलमें आकर प्रत्यक्ष हो जाते हैं अतः उनसे हमारा हेतु व्यभिचारी नहीं हो सकता। आत्मा तो ऐसा विलक्षण है कि वह किसी भी तरह किसीको भी कभी भी प्रत्यक्ष नहीं होता, अतः वह है नहीं।

§ ९९. इसी तरह इन पृथिवी आदि भूतोंसे भिन्न आत्माकी अनुमानसे भी सिद्धि नहीं हो सकती; क्योंकि पहले तो अनुमान प्रमाण ही नहीं हो सकता। यदि प्रमाण हो भी; तो प्रत्यक्षसे बाधित आत्माको सिद्ध करनेमें हेतुकी प्रवृत्ति होनेसे वह बाधित विषय होकर कालात्ययापदिष्ट हो जायेगा। शरीरसे भिन्न स्वतन्त्र सत्ता रखनेवाला आत्मा तो प्रत्यक्षसे बाधित है अतः ऐसे आत्मा को पक्ष बनाकर उसकी सत्ता सिद्ध करना तो अग्निमें ठण्डक सिद्ध करने के समान बाधित है।

§ १००. दूसरी बात यह है कि—हेतु और साध्यके प्रत्यक्ष आदिसे गृहीत अविनाभाव सम्बन्धकी स्मृति होने पर ही अनुमानकी प्रवृत्ति होती है। देखो, जब पहले रसोईघर आदिमें अग्नि और धुआँका अन्वय व्यतिरेकमूलक अविनाभाव सम्बन्धको प्रत्यक्षसे ग्रहण कर लेते हैं तब बादमें किसी जंगल या पर्वतकी गुफामें आकाश तक फैलनेवाले धुएँको देखकर पहले ग्रहण किये गये अविनाभावका स्मरण आ जाता है। उस समय अनुमान करनेवाला विचारता है कि रसोईघर आदिमें हमने जहाँ-जहाँ धुआँ देखा था वहाँ बराबर अग्नि थी। यहाँ भी वैसा ही धुआँ दिखाई दे रहा है अतः यहाँ भी अवश्य अग्नि होनी चाहिए। इस प्रकारसे प्रमाता धूमहेतुको देखकर तथा पहले ग्रहण किये गये अविनाभावका स्मरण करके अग्निका अनुमान करता है। परन्तु आत्माके साथ किसी भी हेतुका न तो पहले अविनाभाव सम्बन्ध ही प्रत्यक्षसे ग्रहण किया गया है और न उस हेतुका दर्शन ही हो रहा है जिससे उस सम्बन्धका स्मरण करके हेतुसे आत्माका अनुमान किया जा सके। यदि जीव और उसके अनुमापक किसी हेतुका अविनाभाव सम्बन्ध प्रत्यक्षसे गृहीत हो सकता हो; तो उस अवस्थामें जीवका भी प्रत्यक्ष हो ही जायेगा, तब फिर

---

१. –नीं बहुलधूमले–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नाऽजीवे स[1] प्रत्ययः स्यात्। यदि पुनर्जीवलिङ्गयोः प्रत्यक्षतः संबन्धसिद्धिः स्यात्, तदा जीवस्यापि प्रत्यक्षत्वापत्त्यानुमानवैयर्थ्यं स्यात्' तत एव जीवसिद्धेरिति।

§ १०१. न च वक्तव्यं सामान्यतोदृष्टानुमानादादित्यगतिवज्जीवः सिध्यति, यथा गतिमानादित्यो देशान्तरप्राप्तिदर्शनात्, देवदत्तवत् इति। यतो हन्त देवदत्ते दृष्टान्तधर्मिणि सामान्येन देशान्तरप्राप्तिर्गतिपूर्विका प्रत्यक्षेणैव निश्चिता सूर्येऽपि तां तथैव प्रमाता साधयतीति युक्तम्। न चैवमत्र क्वचिदपि दृष्टान्ते जीवसत्त्वेनाविनाभूतः कोऽपि हेतुरध्यक्षेणोपलक्ष्यत इत्यतो न सामान्यतो दृष्टादप्यनुमानात्तद्गतिरिति।

§ १०२. तथा नाप्यागमगम्य आत्मा। अविसंवादिवचनाप्तप्रणीतत्वेन ह्यागमस्य प्रामाण्यम्। न चैवंभूतमविसंवादिवचनं कंचनाप्याप्तमुपलभामहे यस्यात्मा प्रत्यक्ष इति। अनुपलम्भ (लभ) मानाश्च[2] कथमात्मानं विप्रलभेमहि। किं च, आगमाश्च सर्वे परस्परविरुद्धप्ररूपिणः। ततश्च कः[3] प्रमाणं कश्चाप्रमाणमिति संदेहदावानलज्वालावलीढमेवागमस्य प्रामाण्यम्। ततश्च नागमप्रमाणादप्यात्मसिद्धिः ३।

---

अनुमानकी कोई आवश्यता ही नहीं रह जाती। क्योंकि जिस जीवकी सिद्धिके लिए अनुमान किया जायेगा वह जीव तो प्रत्यक्षसे ही सिद्ध हो गया है। किन्तु यह सब प्रत्यक्षकी सामर्थ्यके बाहरकी बात है।

§ १०१. शंका—किसी खास दृष्टान्तमें अविनाभावका ग्रहण न भी हो, तो भी सामान्यरूपसे अविनाभाव ग्रहण कर हेतुसे साध्यका अनुमान हो सकता है, जिस प्रकार कि सूर्यको एक स्थानसे दूसरे स्थानमें पहुँचा हुआ देखकर उसकी गतिका अनुमान किया जाता है—सूर्य गति करता है क्योंकि वह देवदत्तकी तरह एक देशसे दूसरे देशमें पहुँच जाता है। यहाँ यद्यपि सूर्यकी गति उसके प्रखर तेजके कारण पहले कभी भी गृहीत नहीं हुई फिर भी देवदत्तमें सामान्यतः अविनाभाव ग्रहण करके गतिका अनुमान किया ही जाता है, उसी तरह यद्यपि आत्माका प्रत्यक्ष नहीं होता फिर भी कहीं साधारण अविनाभाव ग्रहण करके किसी हेतुसे आत्माका अनुमान किया जा सकता है।

**समाधान**—खेद है आपके तर्क पर। अरे भाई, तुम्हारी समझमें इतनी मोटी बात नहीं आ रही है कि—देवदत्त नामके दृष्टान्तमें 'एक देशसे दूसरे देशमें पहुँचना गतिपूर्वक है' यह व्याप्ति प्रत्यक्षसे ही देवदत्तको चलता-फिरता देखकर ग्रहण की जाती है। और जब उक्त व्याप्ति प्रत्यक्षसे गृहीत हो जाती है तभी सूर्यको एक जगहसे दूसरी जगह पहुँचा देखकर उसकी गतिका अनुमान होता है। पर यहाँ तो जीवकी सत्तासे अविनाभाव सम्बन्ध रखनेवाला कोई भी हेतु कभी भी प्रत्यक्षसे उपलब्ध नहीं होता। अतः सामान्यतोदृष्ट (जिनका अविनाभाव सामान्यरूपसे देखा गया है) लिंगसे भी उसका अनुमान नहीं किया जा सकता है।

§ १०२. आगम प्रमाणसे भी आत्माकी सिद्धि नहीं होती, क्योंकि—अविसंवादी—निर्दोष सत्य बोलनेवाले आप्तके द्वारा कहा गया ही आगम प्रमाणभूत हो सकता है। पर संसारमें कोई ऐसा सर्वथा सत्यवादी आप्त ही नहीं दिखाई देता जिसने आत्माको हथेली पर रखे हुए आँवलेकी तरह आँखोंसे देखा हो, या अन्य किसी उपायसे उसका प्रत्यक्ष किया हो। जब ऐसा कोई आप्त ही नहीं हो रहा है तब उसके नामसे चलनेवाले आगमोंमें विश्वास कर क्यों अपनेको ठगा जाये? संसारमें सैकड़ों ही आगम हैं, और कोई किसीसे जरा भी नहीं मिलता, सब एक दूसरेके विरोधी हैं। एक पूरबकी कहता है तो दूसरा पच्छिम की। और जब 'कौन आगम प्रमाण है कौन अप्रमाण'

---

१. सत्प्रत्ययः भ. २। २. –ना कथ– भ. २। ३. कः प्रमाणमिति सन्देह–भ. २।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

§ १०३. तथा नोपमानप्रमाणोपमेयोऽप्यात्मा। तत्र हि यथा गौस्तथा गवय इत्यादाविव सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति। न चात्र त्रिभुवनेऽपि कश्चनात्मसदृशपदार्थोऽस्ति यद्दर्शनादात्मानमवगच्छामः। ननु[1] कालाकाशदिगादयो जीवतुल्या विद्यन्त एवेति चेत्; न; तेषामपि विवादास्पदीभूतत्वेन तदंह्रिबद्धत्वात् ४।

§ १०४. तथार्थापत्तिसाध्योऽपि नात्मा। नहि दृष्टः श्रुतो वा कोऽप्यर्थं आत्मानमन्तरेण नोपपद्यते, यद्बलात् तं साधयामः।

§ १०५. ततः सदुपलम्भकप्रमाणविषयातीतत्वात् तत्प्रतिषेधसाधकाभावाख्यप्रमाणविषयीकृत एव जीव इति स्थितम्।

§ १०६. अत्र प्रतिविधीयते। [2]यत्तावदुक्तम् "इह कायाकारपरिणतानि भूतान्येवोपलभ्यन्ते न पुनस्तद्व्यतिरिक्त आत्मा, तत्सद्भावे प्रमाणाभावात्" इत्यादि; तदसमीक्षिताभिधानम्; प्रत्यक्षस्यैव[3] तत्सद्भावे प्रमाणस्य सद्भावात्। तथाहि—'सुखमहमनुभवामि' इत्यन्योन्यविविक्त-

इत्यादि सन्देहरूपी दावानलकी ज्वालाओंमें ही विचारे आगमकी प्रमाणता जलकर खाक हो गयी है। तब ऐसे अप्रामाणिक आगमसे जीवसिद्धि नहीं की जा सकती।

§ १०३. उपमान प्रमाण भी आत्माकी सत्ता सिद्ध करनेमें समर्थ नहीं है, क्योंकि जब गाय और रोज दोनों ही प्रत्यक्षके विषय हैं, तभी 'गौके समान गवय होता है' इस वाक्यका स्मरण कर और गवयको सामने देखकर परोक्ष गौमें सादृश्य बुद्धि होती है। परन्तु इस त्रिलोकमें कोई भी पदार्थ आत्माके समान नहीं है, जिसे देखकर आत्माकी सत्ताका उपमान किया जा सके। काल, आकाश, दिशा आदि सभी अमूर्त पदार्थ जीवके समान ही अप्रत्यक्ष होनेसे विवादमें पड़े हैं, अनिश्चित हैं। अतः जीवकी टाँगसे इनकी भी टाँगें भी बँधी हैं।

§ १०४. इसी तरह अर्थापत्तिसे भी आत्माका सद्भाव सिद्ध नहीं किया जा सकता, क्योंकि– आत्माके बिना नहीं होनेवाला कोई भी अविनाभावी अर्थ न तो देखा ही गया है और न सुना ही गया है, जिसके बलपर अर्थापत्ति आत्माके सिद्ध करनेका गुरुतम भार उठावे।

§ १०५. अन्तमें जब आत्माके सद्भावको साधनेवाले प्रत्यक्ष आदि कोई भी प्रमाण नहीं मिलते, किसीकी भी हिम्मत आत्माको विषय करनेकी नहीं होती; तब अभाव प्रमाण ही आत्माको विषय करेगा और वह आत्माकी सत्ताको समूल उच्छेद करके ही छोड़ेगा। अतः आत्मनामका कोई भी स्वतन्त्र पदार्थ नहीं है।

§ १०६. जैन ( उत्तरपक्ष )—आपका यह कहना—'शरीररूपसे परिणत भूतोंको छोड़कर अन्य आत्माको सिद्ध करनेवाले प्रमाण नहीं हैं; नितान्त अविचारपूर्ण है; क्योंकि समस्त प्रमाणोंमें ज्येष्ठ तथा श्रेष्ठ प्रत्यक्षप्रमाण ही आत्माकी सत्ताको बराबर सिद्ध करता है। जैसे—'मैं सुखका अनुभव करता हूँ' इस प्रतिभासमें सुखको अनुभव करनेवाला ज्ञाता, अनुभवमें आनेवाला विषयभूत सुख तथा अनुभव होना रूप ज्ञान क्रिया तीनों ही वस्तुओंका स्वतन्त्र रूपसे हर एक

१. 'ननु' नास्ति आ. क., म. १, प. १, २। २. यदुक्तं म. २। ३. "स्वसंवेद्यः स भवति नासावन्येन शक्यते द्रष्टुम्, नासावन्येन शक्यते द्रष्टुं कथमसौ निर्दिश्येत...असौ पुरुषः स्वयमात्मानमुपलभते न चान्यस्मै शक्नोति दर्शयितुम्..."—शाबरभा. १।१।५। "अहं प्रत्ययविज्ञेयः स्वयमात्मोपपद्यते ॥१०७॥" —मीमांसाश्लो. आत्मवाद। "स्वसंवेदनतः सिद्धः सदात्मा बाधवर्जितात्। तस्य क्ष्मादिविवर्तात्मन्यात्मन्यनुपपत्तितः ॥ ९६ ॥" —तत्त्वार्थश्लो. पृ. २६। शास्त्रवा. समु. श्लो. ७९। न्याकुमु. पृ. ३४३। "'सुख्यहं दुःख्यहमिच्छावानहम्' इत्याद्यनुपचरिताहम्प्रत्ययस्यात्मग्राहिणः प्रतिप्राणि संवेदनात्।"—प्रमेयक. पृ. ११२।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ज्ञेयज्ञातृज्ञानोल्लेखी प्रतिप्राणि स्वसंवेद्यः प्रत्ययो जायमानः संवेद्यते। न चायं मिथ्या; बाधकाभावात्। नापि संदिग्धः; उभयकोटिसंस्पर्शाभावात्। न चेत्थंभूतस्यास्यानालम्बनत्वं युक्तम्; रूपादिज्ञानानामप्यनालम्बनत्वप्रसङ्गात्। नापि [1]शरीरालम्बनत्वम्; बहिःका(क)रणनिरपेक्षान्तःकरणव्यापारेणोत्पत्तेः। न खलु शरीरमित्थंभूताहंप्रत्ययवेद्यम्; बहिःकरणविषयत्वात्। अतः शरीरातिरिक्तः कश्चिदेतस्यालम्बनभूतो ज्ञानवानर्थोऽभ्युपगन्तव्यः तस्यैव ज्ञातृत्वोपपत्तेः[2]। स च जीव एवेति सिद्धः [3]स्वसंवेदनप्रत्यक्षलक्ष्य आत्मा।

§ १०७. तथा यदप्युक्तम् 'चेतनायोगेन[4] सचेतनत्वाच्छरीरस्यैवाहंप्रत्ययः' इत्यादि; तदपि प्रलापमात्रम्; यतश्चेतनायोगेऽपि स्वयं चेतनस्यैवाहंप्रत्ययोत्पादो युक्तः, न त्वचेतनस्य यथा परःसहस्रप्रदीपप्रभायोगेऽपि स्वयमप्रकाशस्वरूपस्य घटस्य प्रकाशकत्वं न दृष्टं किन्तु प्रदीपस्यैव। एवं चेतनायोगेऽपि न स्वयमचेतनस्य देहस्य ज्ञातृत्वं किंत्वात्मन एवेति तस्यैव चाहंप्रत्ययोत्पादः।

---

प्राणोका अनुभव हो रहा है। इसमें अनुभव करनेवाला 'मैं' शब्दका वाच्य पदार्थ ही आत्मा है। उपर्युक्त प्रतिभास निर्बाध रूपसे होता है अतः मिथ्या नहीं कहा जा सकता। निश्चित एक कोटिको विषय करता है अतः संशयरूप भी नहीं है। क्योंकि विरुद्ध दो कोटियोंमें झूलनेवाले चलित प्रतिभासको संशय कहते हैं। 'मैं सुखको अनुभव करता हूँ' यह निर्बाध ज्ञान निर्विषय अर्थात् मात्र काल्पनिक नहीं कहा जा सकता, क्योंकि निर्बाध ज्ञानको काल्पनिक या निर्विषय कहनेपर तो 'यह घट है, यह रूप है' इत्यादि सभी ज्ञानोंको निर्विषय तथा काल्पनिक कहनेका अनुचित रिवाज पड़ जायेगा। फिर संसारमें कोई भी ज्ञान सविषयक नहीं रह पायेगा। उपर्युक्त प्रत्यय शरीरको विषय करनेवाला भी नहीं है; क्योंकि शरीरादि पदार्थोंका प्रतिभास तो चक्षु आदि बाह्य इन्द्रियोंके द्वारा होता है जब कि 'मैं सुखी हूँ' इस अनुभवमें बाह्य इन्द्रियोंकी तनिक भी आवश्यकता नहीं है, यह तो शुद्ध मनोव्यापारसे ही उत्पन्न होनेवाला मानसिक ज्ञान है। शरीर कभी भी मनमात्रसे होनेवाले 'मैं सुखी हूँ' इस मानसिक अहंप्रत्ययका विषय नहीं हो सकता। वह तो घटादि पदार्थोंकी तरह बाह्य चक्षु आदि इन्द्रियोंसे जाना जाता है। जो अचेतन हैं तथा बाह्य इन्द्रियोंके द्वारा जाने जाते हैं वे कभी मानसिक अहंप्रत्ययके ग्राह्य नहीं हो सकते। अतः इस अहंप्रत्ययका विषय शरीरसे भिन्न कोई ज्ञानवाला पदार्थ मानना चाहिए, जो भी ज्ञानवाला पदार्थ 'मैं सुखी हूँ' इस प्रत्ययमें 'मैं' शब्दका वाच्य है वही ज्ञाता है, वही आत्मा है, वही जीव है। इस तरह मानसिक स्वसंवेदनप्रत्यक्ष ही आत्माके सद्भावमें सबसे बड़ा साधक प्रमाण है।

§ १०७. आपका यह कथन—'शरीर चेतनाके सम्बन्धसे सचेतन बनकर अहंप्रत्ययका विषय होता है'; कोरी बकवास है; क्योंकि पहले तो अचेतनमें अचेतनका सम्बन्ध ही नहीं हो सकता। जो स्वयं चेतन नहीं है वह अचेतन है, हजारों बार चेतनासे सम्बन्ध रखनेपर भी चेतन नहीं बन सकता है और न अहम्प्रत्ययका विषय ही हो सकता है। जैसे स्वयं अप्रकाश रूप घड़ेमें हजारों दीपकोंका संयोग कर दीजिए, पर वह कभी भी स्वयं प्रकाशक नहीं हो सकता, प्रकाशक तो स्वयं प्रकाशवाला दीपक ही हो सकता है। इसी तरह शरीरमें चेतनाका सम्बन्ध होनेपर भी चेतनावाला आत्मा ही हो सकता है और वही अहम्प्रत्ययका विषय हो सकता है।

---

१. "न शरीरालम्बनमन्तःकरणव्यापारेण उत्पत्तेः। तथाहि न शरीरमन्तःकरणपरिच्छेद्यं बहिर्विषयत्वात्।" —प्रश. व्यो. पृ. ३९१। प्रमेयक. पृ. ११२। २. –पत्तिः म. २। ३. स्वसंवेदप्रत्यक्ष आत्मा म. २। स्वसंवेदनवेद्याहंप्रत्ययोत्पादयुक्तो न त्वचेतनः प्रत्यक्षलक्ष्य आत्मा क.। ४. –योगेनेत्यादि तन्न प्रकाशयोगेऽपि स्वयमप्रकाशस्वरूपस्य घटस्य प्रकाशकत्वं न दृष्टं म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ १०८. योऽपि 'स्थूलोऽहं कृशोऽहम्' इत्यादिप्रत्ययः समुल्लसति, सोऽप्यात्मोपकारकत्वेन शरीरे जायमान औपचारिक[1] एव, अत्यन्तोपकारके भृत्ये 'अहमेवायं' इति प्रत्ययवत् ।

§ १०९. तथा 'शरीरस्यैव चैतन्यं प्रति कर्तृत्वम्' इत्यादि यदप्यवादि वादिब्रुवेण; तदप्युन्मत्तवचनरचनामात्रमेव; चेतनायाः शरीरेण सहान्वयव्यतिरेकाभावात्[2] । मत्तमूच्छितप्रसुप्तानां तादृशशरीरसद्भावेऽपि न तथाविधं चैतन्यमुपलभ्यते । दृश्यते च केषांचित् कृशतरशरीराणामपि चेतनाप्रकर्षः, केषांचित् स्थूलदेहानामपि तदपकर्षः । [3]ततो न तदन्वयव्यतिरेकानुविधायि चैतन्यम्, अतो न तत्कार्यम् ।

§ ११०. किंच, नहि चैतन्यस्य भूतकार्यत्वे किमपि प्रमाणमुपलभामहे । तथाहि—न तावत्प्रत्यक्षम्, अतीन्द्रियविषये तदप्रवर्तनात् । नह्यत्यक्षमनुत्पन्नं वा चैतन्यं भूतानां कार्यमिति[4] प्रत्यक्ष-

§ १०८. 'मैं मोटा हूँ, मैं दुबला हूँ' ये अहम्प्रत्यय अवश्य ही शरीरके मुटापे और दुबलेपनके निमित्तसे होते हैं; परन्तु ये प्रत्यय औपचारिक हैं, मुख्य नहीं हैं। बात यह है कि—शरीर आत्माका अत्यन्त सगा उपकारी है अतः इस चिरकालीन सम्बन्धके कारण शरीरमें भी अहम्प्रत्यय हो जाता है। शरीर तो इतना निकटसम्बन्धी है कि इसके बिना आत्माका जीना ही कठिन है। शरीरकी बात जाने दो, जो नौकर अत्यन्त वफादार या विश्वासपात्र होता है, उसमें भी लोग 'यह मैं ही हूँ', 'यह तो हमारा दाहिना हाथ है' इत्यादि व्यवहार करने लगते हैं। अतः जिस प्रकार वफादार नौकरमें होनेवाला अहम्प्रत्यय मात्र व्यवहारकी घनिष्ठता दिखानेके लिए है वह मुख्य नहीं है उसी तरह शरीरके मुटापेमें 'मैं मोटा हूँ' यह प्रत्यय भी महज व्यावहारिक ही है, शरीर और आत्माके निकट सम्बन्धके कारण होनेवाला है मुख्य नहीं है।

§ १०९. 'शरीर ही चैतन्यका कर्ता है' आपका यह कुत्सित कथन तो शराबीकी सनक-जैसा ही बेसिर-पैरका मालूम होता है, क्योंकि चेतनका शरीरके साथ कोई अन्वय या व्यतिरेक नहीं है। देखो, शराबके नशेमें उन्मत्त शराबीके, मूच्छित व्यक्तिके या गहरी नींदमें मस्तीसे सोये हुए मनुष्यके शरीर तो जैसाका तैसा मौजूद है परन्तु चैतन्यकी तो वही हालत नहीं है। मत्त, मूच्छित आदि व्यक्तियोंमें चैतन्य तो नहींके समान ही हो जाता है। शरीरके साथ चैतन्यका अविनाभाव—अर्थात् नियत सम्बन्ध हो तो शरीर की बाढ़ या मुटापेमें चैतन्यका उत्कर्ष तथा शरीरकी दुर्बलतामें चैतन्यकी हानि देखी जानी चाहिए। परन्तु बहुत-से दुर्बल शरीरवाले अत्यन्त बुद्धिशाली उत्कृष्ट चैतन्यवाले देखे जाते हैं और बहुत-से मोटे शरीरवाले पहलवान् महालण्ठ मूर्ख शिरोमणि देखे जाते हैं। अतः शरीरके साथ चेतनाका अन्वयव्यतिरेक न होनेसे चैतन्यको शरीरका कार्य नहीं कह सकते।

§ ११०. 'पृथिवी आदि भूतोंसे चैतन्य उत्पन्न होता है' आपके इस विचित्र सिद्धान्तको सिद्ध करनेवाला कोई भी प्रमाण उपलब्ध नहीं होता। देखिए—प्रत्यक्ष तो चैतन्यको भूतोंका कार्य नहीं साध सकता; क्योंकि प्रत्यक्षकी दौड़ तो सामने रखे हुए योग्य स्थूल पदार्थों तक ही है, चैतन्य तो स्वभावतः अमूर्त होनेसे उसकी दौड़के बाहर है। प्रत्यक्षकी इतनी सामर्थ्य नहीं है कि वह अमूर्त पदार्थोंको भी जान सके। अतीन्द्रिय पदार्थ उसकी सीमाके बाहर हैं, वह उनमें प्रवृत्ति

१. "मदीयो भृत्य इति ज्ञानवन्मदीयं शरीरमिति भेदप्रत्ययदर्शनात् भृत्यवदेव शरीरेऽप्यहमिति ज्ञानस्य औपचारिकत्वमेव युक्तम् । उपचारस्तु निमित्तं विना न प्रवर्त्तते इत्यात्मोपकारकत्वं निमित्तं कल्प्यते । —प्रश. व्यो. पृ. ३९१ । न्यायकुमु. पृ. ३४९ । सन्मति. टी. पृ. ८६ । प्रमेयक. पृ. ११२ ।
२. "व्यतिरेकः तद्भावाभावित्वान्न तूपलब्धिवत् ।" —ब्रह्मसू. ३।३।५४ । तत्त्वसं. पं. पृ. ५२५ । तत्त्वार्थश्लो. पृ. ३० । "भूत-चैतन्ययोः कार्यकारणभावानुपपत्तेः ।" —न्यायकुमु. पृ. ३४४ ।
३. ततोऽतदन्व —म. २ । ४. प्रत्यक्षं व्यापार म. १, २, प. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

व्यापारमुपैति, तस्य स्वयोग्यसंनिहितार्थग्रहणरूपत्वात्, चैतन्यस्य चामूर्त्तत्वेन तदयोग्यत्वात्[1] । न च 'भूतानामहं कार्यम्' इत्येवमात्मविषयं भूतकार्यत्वं प्रत्यक्षमवगन्तुमलम्, कार्यकारणभावस्यान्वयव्यतिरेकसमधिगम्यत्वात् । न च भूतचैतन्यातिरिक्तः[2] कश्चिदन्वयो तदुभयान्वयव्यतिरेकज्ञाताभ्युपगम्यते[3], आत्मसिद्धिप्रसङ्गात् ।

§ १११. तथा नानुमानेनापि चैतन्यस्य भूतकार्यत्वं प्रतीयते, तस्यानभ्युपगमात् "प्रत्यक्षमेवैकं प्रमाणं नान्यत्" [ ] इति वचनात् । अभ्युपगमेऽपि न ततो विवक्षितार्थप्रतीतिसिद्धिः ।

§ ११२. ननु कायाकारपरिणतेभ्यो भूतेभ्यश्चैतन्यं समुत्पद्यते, तद्भाव एव चैतन्यभावात्, मद्याङ्गेभ्यो[4] 'मदशक्तिवत्' इत्याद्यनुमानाद्भवत्येव चैतन्यस्य भूतकार्यत्वसिद्धिरिति चेत्; न; तद्भाव एव तद्भावादिति हेतोरनैकान्तिकत्वात्, मृतावस्थायां तद्भावेऽपि चैतन्यस्याभावात् ।

§ ११३. स्यादेतत्, पृथिव्यप्तेजोवायुलक्षणभूतचतुष्टयसमुदायजन्यं हि चैतन्यम्, न च मृत-

---

नहीं कर सकता । चैतन्य उत्पन्न हो या अनुत्पन्न, वह किसी भी हालतमें उसमें प्रत्यक्षका व्यापार नहीं हो सकता । क्योंकि प्रत्यक्ष योग्य और सन्निहित पदार्थोंको ही विषय करता है । किन्तु चैतन्य अमूर्ति होनेसे योग्य ही नहीं है । स्वयं प्रत्यक्ष 'मैं भूतोंसे उत्पन्न हुआ हूँ' इस अपनी ही भूतकार्यता को नहीं जान सकता; क्योंकि कार्यकारणभावके जाननेका सीधा और सरल मार्ग है अन्वयव्यतिरेक मिलाना । भूत और चैतन्यको छोड़कर कोई तीसरा अन्वयी पदार्थ इनके कार्यकारण भावको जाननेवाला उपलब्ध ही नहीं होता, जो इन दोनोंको जानकर इनके अन्वयव्यतिरेकको मिला सके । ऐसा ज्ञाता तो आत्मा ही हो सकता है । अतः चैतन्यकी भूतकार्यताका भी परिज्ञान आत्माको माने बिना नहीं हो सकता ।

§ १११. अनुमानको तो आप प्रमाण ही नहीं मानते, अतः उसके द्वारा 'चैतन्य भूतोंका कार्य है' यह जानना निरर्थक ही नहीं है । "प्रत्यक्ष ही एकमात्र प्रमाण है इससे भिन्न कोई दूसरा प्रमाण नहीं है" यह स्वयं आपका ही वचन है । आप यदि अनुमानको स्वीकार भी करोगे, तब भी उससे चैतन्यमें भूतकार्यता नहीं साधी जा सकती । क्योंकि व्याप्तिका ग्रहण, उसका स्मरण, पहले देखे गये हेतुसे वर्तमान हेतुकी समानता मिलाना आदि ऐसी बातें हैं जो आत्माके ही वशकी हैं । अनुयायी आत्मा माने बिना अनुमानका उत्पन्न होना ही कठिन है । इसके सिवाय कोई ऐसा अनुमान भी नहीं है जो आत्माको भूतोंका कार्य सिद्ध कर सके ।

§ ११२. **चार्वाक**—चैतन्यको भूतोंका कार्य सिद्ध करनेवाला निम्न अनुमान है–'शरीर रूपसे परिणत पृथिवी आदि भूतोंसे चैतन्य उत्पन्न होता है, क्योंकि शरीरके होनेपर ही चैतन्यकी उपलब्धि होती है, शरीरके नहीं होनेपर चैतन्य भी उपलब्ध नहीं होता,—जैसे महुआ आदिके सड़ानेसे उनमें मादक शक्ति उत्पन्न हो जाती है और वे शराब कहलाने लगते हैं उसी तरह इन भूतोंकी जब शरीरके रूपमें विशिष्ट मिश्रण होकर चैतन्य उत्पन्न हो जाता है तब ये ही आत्मा कहे जाते हैं ।' इस अनुमानसे चैतन्यकी भूतकार्यता बखूबी साधी जा सकती है । चैतन्य पृथिवी, जल, आग और हवा इन चारों भूतोंका अमुक मिकदारमें मिश्रण होनेपर ही चैतन्य उत्पन्न होता है । जब शरीर मुरदा हो जाता है तब उसका वह विशिष्ट रासायनिक मिश्रण बिगड़ जाता है, उसमें-से श्वासरूप हवा तथा गरमी आदि निकल जाती है अतः यह ठीक ही है कि उसका चैतन्य समाप्त हो जाय और वह अचेतन बन जाय ।

§ ११३. **जैन**—आप कहते हो कि 'मुरदा शरीरमें हवा नहीं रही अतः उसका चैतन्य खतरेमें

---

१. तस्य योग्य –म. २ । २. –तन्यादति–म. २ । ३. –कज्ञोऽभ्यु–म. २ । ४. इत्याह—"मदशक्तिवद् विज्ञानम् ।"—न्यायकुमु. पृ. ३४२ । प्रमेयक. पृ. ११५ । ब्रह्मसू. शां. भा. ३।३।५३ । न्यायमं. पृ. ४३७ । "मदशक्तिवच्चैतन्यमिति ।" —प्रकरणपं. पृ. १४६ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

शरीरे वायुरस्ति, ततस्तदभावात्तत्र चैतन्याभाव इति न[1] तेन व्यभिचारः, अत्रोच्यते—सति शुषिरे [2]तत्र वातः सुतरां संभाव्यत एव। किं च यदि तत्र वायुवैकल्याच्चैतन्यस्याभावः ततो बस्त्यादिभिः संपादिते वायौ तत्र चैतन्यमुपलभ्येत, न च तत्र तत्संपादितेऽपि[3] वायौ चैतन्यमुपलभ्यते।

§ ११४. अथ प्राणापानलक्षणवायोरभावान्न तत्र चैतन्यमिति चेत्; न; अन्वयव्यतिरेकानुविधायित्वाभावान्न प्राणापानवायोश्चैतन्यं प्रति हेतुता। यतो मरणाद्यवस्थायां प्रचुरतरदीर्घश्वासोच्छ्वाससंभवेऽपि चैतन्यस्यात्यन्तपरिक्षयः। तथा ध्यानस्तिमितलोचनस्य संवृतमनोवाक्कायोगस्य निस्तरङ्गमहोदधिकल्पस्य कस्यापि योगिनो निरुद्धप्राणापानस्यापि परमप्रकर्षप्राप्तश्चेतनोपचयः समुपलभ्यते।

§ ११५. अथ तेजसोऽभावान्न मृतावस्थायां चैतन्यमिति चेत्; तर्हि तत्र तेजस्युपनीते सति [4]कथं न चेतनोपलभ्यते।

§ ११६. किं च, मृतावस्थायां यदि वायुतेजसोरभावेन चैतन्याभावोऽभ्युपगम्यते, तर्हि

---

पड़कर खतम हो गया' यह तो केवल हवा ही बांधी जा रही है इसमें कोई दम नहीं है; क्योंकि जब शरीर भीतरसे पोला है, खोखला है और नाक आदिके छेद भी हैं तब हवाका अभाव तो कहा ही नहीं जा सकता। हवा तो थोड़ा भी अवकाश रहनेपर सर्वत्र पहुँच जाती है। यदि वायुके न रहनेसे आप मुरदेमें चैतन्यका अभाव कहते हैं, तो जिस समय गुदाके रास्ते नाली आदिके द्वारा पेटमें खूब डटकर हवा भर दी जाये तो आपके मतसे उसमें चैतन्य आ जाना चाहिए। परन्तु इस तरह हवासे फुला देनेपर भी उसमें चैतन्यका लेश भी नहीं आता।

§ ११४. **चार्वाक**—आप तो हवा शब्दको पकड़कर उसके बालकी खाल खींचने लगे। भाई, फुटबालकी तरह मामूली हवाके भरे जानेसे थोड़े चैतन्य आता है। किन्तु जब श्वास लेने और निकालनेके क्रमसे अपने-आप हवाके आने-जानेका सिलसिला चालू हो तभी उसमें चैतन्य माना जा सकता है।

**जैन**—श्वासोच्छ्वासके चालू रहनेका चैतन्यके साथ कोई अन्वयव्यतिरेक नहीं है और न श्वासोच्छ्वासकी वृद्धिसे चैतन्यकी बढ़ती ही देखी जाती है। देखो, जब आदमी मरने लगता है तब खूब जोरसे दम फूलने लगती है परन्तु वहाँ चैतन्यकी बढ़ती तो नहीं देखी जाती, उल्टे उसके अत्यन्त नाशका ही समय उपस्थित हो जाता है। तथा कोई समाधिनिष्ठ योगी जब प्राणायामके द्वारा श्वासोच्छ्वासको कतई रोक देता है तब उस मन-वचनके व्यापारको निरोध करनेवाले, बिना लहरोंवाले प्रशान्त महासागरकी तरह शान्त चित्तवाले, आँख मूँदे हुए ध्यानावस्थ योगीके श्वासोच्छ्वासका अभाव होनेपर भी चैतन्यकी परम उत्कृष्ट दशाका विकास देखा जाता है।

§ ११५. इसी तरह गरमी निकल जानेके कारण मुरदेमें चैतन्यका अभाव करना भी अयुक्त है; क्योंकि यदि आगके द्वारा मुरदेको खूब सेक दिया जाये उसमें पर्याप्त गरमी पहुँचा दी जाय तो आपके हिसाबसे उसमें चैतन्य आ जाना चाहिए। फिर तो ज्यों ही चितामें आग लगायी और मुरदा गरम हुआ कि खटसे उसे जो उठना चाहिए और अपने बिलखते हुए कुटुम्बियोंको सान्त्वना देने लगना चाहिए। परन्तु ऐसा कभी भी न देखा है और न सुना ही है।

§ ११६. यदि वायु और गरमीके न होनेसे मुरदा चेतनाशून्य माना जाता है तब उसमें कुछ देर बाद ही उत्पन्न होनेवाले कीड़ोंमें चैतन्य कहाँसे आयगा। आपके हिसाबसे तो वायु और

---

१. न तत्र व्यभि–म. २। २. तत्र सुतरां वातः म. २। ३. वायौ समुप–म. १, २। प. १, २। ४. कथं चेतना नोपल –म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

मृतशरीरे कियद्वेलानन्तरं समुत्पन्नानां कृम्यादीनां कथं चैतन्यम् । ततो यत्किंचिदेतत् ।

§ ११७ किंच न चैतन्यं भूतमात्रकारणम् । तथा सति चैतन्यस्य भूतमात्रजन्यस्वभावत्वात् तेषामपि तज्जननस्वभावत्वात् सर्वदा सर्वत्र घटादौ पुरुषादिष्विव व्यक्तचैतन्योत्पादो भवेत्, निमित्ताविशेषात् । एवं च घटादिपुरुषयोरविशेषः स्यात् ।

§ ११८. ननु 'कायाकारपरिणामप्राणापानपरिग्रहवद्भ्यो भूतेभ्यश्चैतन्यमुपलभ्यते' इति[1] वचनान्न पूर्वोक्तोऽतिप्रसङ्गदोषावकाश इति चेत्; तन्न; त्वन्मते कायाकारपरिणामस्यैवानुपपद्यमानत्वात् । तथाहि– स कायाकारपरिणामः किं पृथिव्यादिभूतमात्रनिबन्धनः, उत वस्त्वन्तरनिमित्तः उताहेतुकः इति त्रयी गतिः । तत्र न तावदाद्यः पक्षः कक्षीकरणीयः पृथिव्यादिसत्तायाः सर्वत्र सद्भावात् सर्वत्रापि कायाकारपरिणामप्रसङ्गः ।

§ ११९. तथाविधसाम्यादिभावसहकारिकारणवैकल्यान्न सर्वत्र तत्प्रसङ्ग इति[2] चेत्; तन्न;

---

गरमी न होनेसे मुरदा शरीर इस लायक ही नहीं रहा कि वह चैतन्यको उत्पन्न कर सके। अतः ये सब कुतर्क निरर्थक हैं केवल वाग्जाल मात्र हैं।

§ ११७. यदि पृथिवी आदि भूतोंसे चैतन्य उत्पन्न हो जाता हो, तो इसका अर्थ यह हुआ कि—चैतन्यका हर एक भूतसे उत्पन्न होनेका स्वभाव है तथा भूतोंका चैतन्यको पैदा करनेका स्वभाव है। ऐसी हालतमें घड़े आदि सभी भौतिक पदार्थोंमें चैतन्यको उत्पत्ति हो जानेसे सब जीवमयी सृष्टि हो जायेगी। तब घट तथा पुरुषोंमें कोई फर्क ही नहीं रहेगा। जिस प्रकार भूतोंसे पुरुषमें चैतन्य प्रकट होता है उसी तरह घटादिमें भी चैतन्यकी अभिव्यक्ति होनी ही चाहिए। फिर तो घड़ा भी बोलेगा, चालेगा, फिरेगा वा खायेगा-पीयेगा।

§ ११८. **चार्वाक—**भाई, तुम लोगोंकी तो विचित्र बुद्धि है। हम तो यह कह रहे हैं कि—'जब भूतोंका विशिष्ट रासायनिक मिश्रण होकर शरीर रूपसे परिणमन हो जाता है तथा उसमें श्वासोच्छ्वासकी धमनी चलने लगती है तभी उनसे चैतन्यकी उत्पत्ति होती है साधारण भूतोंसे नहीं।' आप घड़ेमें साधारण भूतोंकी सत्ता दिखाकर चैतन्योत्पत्तिका प्रसंग दे रहे हैं। यह तो बुद्धिकी विचित्रता ही है।

**जैन—**बुद्धिकी विचित्रता तो आपको मालूम होती है। आपके मतमें भूतोंका शरीर रूपसे परिणमन होना ही कठिन है। आप बताइए भूतोंका शरीर रूपसे परिणमन क्या वे भूत हैं इसीलिए हो जाता है, या अन्य कोई वस्तु उन भूतोंको शरीर रूप से परिणमन करा देती है अथवा बिना किसी कारणके अकस्मात् ही भूत शरीर बन जाते हैं? पहली कल्पना तो सचमुच आपकी बुद्धिका दिवाला ही निकाल देगी। वे भूत हैं इसीलिए उन्हें शरीर रूप बन जाना चाहिए; तब घड़ा भी शरीर क्यों नहीं बन जाता? घड़ा ही क्यों? संसारके समस्त भौतिक पदार्थ शरीर बन जायें और उनमें चैतन्यकी उत्पत्ति हो जानी चाहिए।

§ ११९. **चार्वाक—**आप तो घूम-फिरकर फिर वहीं आ जाते हैं। हम दस बार कह चुके हैं कि—उतनी मिकदारमें भूतोंका मिश्रण सब घट-पटादिमें नहीं है अतः सभी भौतिक पदार्थ शरीर नहीं बन सकते। चैतन्यकी उत्पत्ति या भूतोंका शरीर रूपसे परिणमन करनेमें यही विशिष्ट मिश्रण, अमुक मात्रामें संयोग ही सहकारी होता है।

---

१. "पृथिव्य (व्या) पस्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञाः तेभ्यश्चैतन्यम्" इत्यत्र" —प्रमेयक. पृ. ११६। तत्त्वोप. पृ. १। भामती ३।३।५४। तत्त्वसं. पं. पृ. ५२०। त. श्लो. पृ. २८। न्यायकुमु. पृ. ३४१। २. चेन्न त्वन्मते सोऽपि म. १, २. प. १, २।

यतः सोऽपि साम्यादिभावो न वस्त्वन्तरनिमित्तः, तत्त्वान्तरापत्तिप्रसङ्गात्, किंतु पृथिव्यादिसत्तामात्रनिमित्तः, अतस्तस्यापि [1]सर्वत्राप्यविशेषेण भावप्रसङ्गात् कुतः सहकारिकारणवैकल्यमिति। अथ वस्त्वन्तरनिमित्तः इति पक्षः तदप्ययुक्तम्; तथाभ्युपगमे जीवसिद्धिप्रसङ्गात्। अथाहेतुकः, तर्हि सदा भावादिप्रसङ्गः, 'नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् [ प्र. वा. ३।३४ ]' इति वचनात्। तन्न त्वन्मते कायाकारपरिणामः संगच्छते। तदभावे तु दूरोत्सारितमेव प्राणापानपरिग्रहवत्त्वममीषां भूतानामिति, चैतन्यं न भू[2]तकार्यमित्यतो जीवगुण एव चेतनेत्यभ्युपगन्तव्यम्।

§ १२०. किंच, गुणप्रत्यक्षत्वादात्मापि गुणी प्रत्यक्ष एव। प्रयोगो यथा—प्रत्यक्ष आत्मा, स्मृतिजिज्ञासाचिकीर्षाजिगमिषासंशयादिज्ञान[3]विशेषाणां तद्गुणानां स्वसंवेदनप्रत्यक्षत्वात्। इह यस्य गुणाः प्रत्यक्षाः स प्रत्यक्षो दृष्टः, यथा घट इति। प्रत्यक्षगुणश्च जीवः, तस्मात्प्रत्यक्षः। अत्राह परः—अनैकान्तिकोऽयं हेतुः, यत आकाशगुणः शब्दः प्रत्यक्षः, न पुनराकाशम्; तदयुक्तम्; यतो नाकाश-

---

**जैन**—आपने कहा तो है पर वह प्रामाणिक नहीं है, क्योंकि भूतोंका अमुकमात्रासे मिश्रण भी कोई किसी अन्य वस्तु तो आकर करेगी नहीं; आपके मत में तो पृथिवी, पानी, आग और हवाके सिवाय कोई पाँचवाँ पदार्थ तो है ही नहीं। यदि कोई पाँचवाँ पदार्थ इन भूतोंका अमुक मात्रामें मिश्रण कर देता है तब वही आत्मा है, जिसके सद्भावसे मिश्रणमें विशिष्टता आकर चैतन्यकी अभिव्यक्ति होती है। यदि कोई अतिरिक्त पदार्थ नहीं है और इन्हीं भूतोंसे ही क्वचित् विशिष्ट मिश्रण हो जाता है, तब भूतोंकी सत्ता तो हर जगह है अतः सब घटपटादि पदार्थोंमें विशिष्ट मिश्रण होकर चैतन्य प्रकट हो जाना चाहिए। यदि भूतोंका कायाकार परिणमन कोई पाँचवीं वस्तु आकर कराती है तब वही पाँचवीं वस्तु आत्मा है, जो इन चार भूतोंसे विलक्षण है। यदि भूतोंका शरीर रूपसे परिणमन करना अकारण ही अपने आप जब चाहे हो जाता है; तब सभी भूतोंका सदा शरीर रूपसे परिणमन होना चाहिए या बिलकुल भी नहीं होना चाहिए। अहेतुक वस्तु या तो सदा रहनेवाली आकाश आदिकी तरह नित्य होती है अथवा बिलकुल ही न रहनेवाली असत् होती है जैसे खरविषाण। वह कभी होनेवाली और कभी न होनेवाली नहीं हो सकती। कहा भी है—"अन्य हेतुओंकी अपेक्षा न रखनेवाला पदार्थ या तो सदा सत्-नित्य होगा, या बिलकुल असत् होगा। अन्य कारणोंकी अपेक्षासे ही पदार्थमें कादाचित्क—कभी-कभी होनेवाले होते हैं।" अतः आपके मतमें भूतोंका शरीर रूपसे परिणमन ही असम्भव है। जब शरीर ही नहीं बन सका तब उसमें श्वासोच्छ्वास का यन्त्र चलना तो दूरकी ही बात है, असम्भव है। इसलिए चैतन्य किसी भी तरह भूतोंका कार्य नहीं है वह तो आत्माका ही गुण हो सकता है।

§ १२०. चूँकि ज्ञान आदि गुणोंका प्रत्यक्ष होता है अतः गुणी आत्माको भी प्रत्यक्ष मानना उचित ही है। प्रयोग—आत्मा प्रत्यक्षका विषय है; क्योंकि स्मृति, जाननेकी इच्छा, कार्य करनेकी इच्छा, घूमनेकी इच्छा, संशयादि ज्ञान इत्यादि उसके गुणोंका स्वसंवेदन प्रत्यक्षसे अनुभव होता है। 'मैं स्मरण करता हूँ, मैं जानना चाहता हूँ' इत्यादि मानसिक स्वसंवेदन प्रत्यक्षमें स्मृति आदि गुणोंका स्वरूप स्पष्ट ही प्रतिभासित होता है। जिसके गुणोंका प्रत्यक्ष होता है उस गुणीका भी प्रत्यक्ष अवश्य होता है जैसे कि घटके रूप आदि गुणोंका प्रत्यक्ष होनेपर घट गुणीका प्रत्यक्ष होना प्रसिद्ध है। चूँकि जीवके ज्ञानादिगुण भी स्वसंवेदन प्रत्यक्षके विषय होते हैं अतः आत्माका भी प्रत्यक्ष मानना ही चाहिए।

**शंका**—वैशेषिक शब्दको आकाशका गुण मानता है। अतः वह अपनी मान्यतानुसार उक्त

---

१. –प्यविशेषेण भावात्, कुतः भ. १, प. १, २। –प्यविशेषणभावात् भ. २। २. –कार्यमतो भ. २।
३. –विशेषणानां तद्गुण–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

गुणः शब्दः किंतु पुद्गलगुणः, ऐन्द्रियकत्वात्, रूपादिवत्[1]। एतच्च पुद्गलविचारे समर्थयिष्यते।

§ १२१. अत्राह ननु भवतु गुणानां प्रत्यक्षत्वात्तदभिन्नत्वाद्गुणिनोऽपि प्रत्यक्षत्वम्। किंतु देह एव ज्ञानादयो गुणा उपलभ्यन्ते। अतः स एव तेषां गुणी युक्तः, यथा रूपादीनां घटः। प्रयोगो यथा—ज्ञानादयो देहगुणा एव, तत्रैवोपलभ्यमानत्वात्, गौरकृशस्थूलत्वादिवत्। अत्रोच्यते—प्रत्यनुमानबाधितोऽयं पक्षाभासः। तच्चेदम्—देहस्य गुणा ज्ञानादयो न भवन्ति, तस्य मूर्तत्वाच्चाक्षुषत्वाद्वा[2], घटवत्। अतः सिद्धो गुणप्रत्यक्षत्वाद्गुणो जीवोऽपि प्रत्यक्षः।

§ १२२. ततश्चाऽहं प्रत्ययग्राह्यं प्रत्यक्षमात्मानं निह्नुवानस्य अश्रावणः शब्द इत्यादिवत् प्रत्यक्षविरुद्धो नाम पक्षाभासः। तथा वक्ष्यमाणात्मास्तित्वानुमानसद्भावात् नित्यः शब्द इत्यादिवदनुमानविरुद्धोऽपि। आबालगोपालाङ्गनादिप्रसिद्धं चात्मानं निराकुर्वतः। 'नास्ति सूर्यः प्रकाशकर्त्ता'

---

हेतुमें व्यभिचार दिखाता है कि 'शब्द नामक आकाशके गुणका तो प्रत्यक्ष होता है परन्तु गुणी आकाशका तो प्रत्यक्ष नहीं होता' अतः उक्त नियम सदोष है।

**समाधान**—शब्द आकाशका गुण है ही नहीं; वह तो पुद्गलद्रव्यका गुण है उसीका एक विशेष परिणमन है; क्योंकि वह बाह्य—श्रोत्र इन्द्रियके द्वारा ग्रहण किया जाता है। जो बाह्य इन्द्रियोंके द्वारा गृहीत होते हैं वे पुद्गलके ही गुण हैं जैसे कि घड़ेके रूप आदि गुण। अमूर्त आकाशके गुणका तो हम लोगोंको प्रत्यक्ष ही नहीं हो सकता। पुद्गलतत्त्वके विवेचनमें शब्दको पौद्गलिकत्व विस्तारके साथ सिद्ध करेंगे।

§ १२१. **चार्वाक**—आपका यह नियम तो ठीक है कि—'गुणोंके प्रत्यक्ष होनेपर उनसे अभिन्न गुणीका भी प्रत्यक्ष होता है' पर इससे आत्माकी सिद्धि नहीं हो सकती; क्योंकि हम ज्ञान आदिको शरीरका ही गुण मानते हैं। देहमें ही ज्ञान आदि गुण उपलब्ध होते हैं अतः देह ही ज्ञानादिका आधारभूत गुणी हो सकता है जैसे रूपादि गुणोंका आधारभूत घट ही रूपादिका गुणी है। प्रयोग—ज्ञान आदि देहके ही गुण हैं; क्योंकि वे देहमें ही उपलब्ध होते हैं जैसे कि गोरापन, दुबलापन एवं मुटापा आदि।

**जैन**—आपका अनुमान प्रबल प्रतिपक्षी अनुमानके द्वारा बाधित होनेसे अपने साध्यकी सिद्धि नहीं कर सकता, आपका पक्ष अनुमान बाधित होनेके कारण पक्षाभास है। वह प्रतिपक्षी अनुमान यह है—ज्ञान आदि देहके गुण नहीं हो सकते क्योंकि देह घटकी तरह मूर्त है तथा आंखोंसे दिखाई देती है। यदि ज्ञान आदि देहके गुण होते तो उसके गोरे रंगकी तरह वे भी आंखोंसे दिखाई देते।

§ १२२. अतः हमारे 'गुणोंके प्रत्यक्षसे गुणीका भी प्रत्यक्ष' इस निर्दोष नियमके अनुसार आत्मा प्रत्यक्षसे सिद्ध ही हो जाता है। इस प्रकार 'मैं सुखी हूँ' इत्यादि अहम्प्रत्यय रूप मानसप्रत्यक्षसे प्रसिद्ध आत्माको लोप करनेके लिए 'आत्मा नहीं है' यह पक्ष करना स्पष्ट रूपसे प्रत्यक्षविरुद्ध नामका पक्षाभास है। जैसे कोई कानसे सुनाई देनेवाले शब्दको अश्रावण सिद्ध करनेका विफल एवं प्रत्यक्षविरुद्ध प्रयास करता है ठीक उसी तरह खण्डन करनेवालेको भी 'मैं' रूपसे प्रतिभासित होनेवाली आत्माका लोप करना सरासर आंखोंमें धूल झोंकना है। इसी तरह जब आगे कहे जानेवाले अनेकों अनुमान आत्माकी सत्ताको डटकर सिद्ध करते हैं तब 'आत्मा नहीं है' यह अनुमान प्रतिपक्षी अनुमानसे बाधित है। 'जैसे 'शब्द नित्य है' यह पक्ष 'शब्द अनित्य है क्योंकि वह उच्चारणके बाद उत्पन्न होता है' इस प्रतिपक्षी अनुमानसे बाधित है। संसारमें बच्चेसे लेकर मूर्खसे मूर्ख ग्वाले तथा स्त्रियाँ आदि भी जिस आत्माका प्रत्यक्षसे सदा अनुभव करती हैं;

---

१. पुद्गल ऐन्द्रिय–भ. २। २. मूर्तत्वात् घट–भ. २।

तासां मुक्तिगामित्वं तत्रैवोच्यते, सामान्येन वा । यद्याद्यपक्षः; तर्हि पुरुषाणामपि यत्र जन्मनि मुक्तिगामित्वं तत्र सप्तमपृथ्वीगमनयोग्यत्वं[1], ततस्तेषामपि मुक्त्यभावः स्यात् । अथ द्वितीयः; तदायमाशयो भवतः, यथा सर्वोत्कृष्टपदप्राप्तिः सर्वोत्कृष्टेनाध्यवसायेन प्राप्यते, सर्वोत्कृष्टे च द्वे एव पदे सर्वदुःखस्थानं[2] सप्तमी नरकपृथ्वी सर्वसुखस्थानं मोक्षश्च, ततो यथा स्त्रीणां सप्तमपृथ्वीगमनमागमे निषिद्धं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्याभावात्[3], एवं[4] मोक्षोऽपि तथाविधशुभमनोवीर्याभावान्न स्त्रीणां भविष्यति । प्रयोगश्चात्र—नास्ति स्त्रीषु[5] मुक्तिकारणशुभमनोवीर्यपरमप्रकर्षः[6] प्रकर्षत्वात् सप्तमपृथ्वीगमनकारणाशुभमनोवीर्यपरमप्रकर्षवत्;[7] तदेतदयुक्तम्; [8]व्याप्तेरभावात् । न हि बहिर्व्याप्तिमात्रेण हेतुर्गमकः स्यात्, किं त्वन्तर्व्याप्त्या, अन्यथा तत्पुत्रत्वादेरपि गमकत्वप्रसङ्गः, अन्तर्व्याप्तिश्च प्रतिबन्धबलेनैव सिध्यति, न चात्र प्रतिबन्धो विद्यते, ततः संदिग्ध-

---

सकतीं इसलिए उनमें विशिष्ट शक्तिका अभाव है या सामान्यरूपसे किसी भी जन्ममें वे सातवें नरक नहीं जा सकतीं ? यदि उसी जन्ममें सातवें नरक नहीं जानेके कारण वे अशक्त समझी जांय; तो चरमशरीरी पुरुष भी तो जिस जन्मसे मोक्ष जाते हैं उसी जन्ममें सातवें नरक नहीं जाते अतः उन्हें भी असमर्थ करार दिया जाय तथा मोक्ष जानेके अयोग्य मान लिया जाय। एक ही जन्ममें वही व्यक्ति सातवें नरक भी जाय और मोक्ष भी यह तो असम्भव बात है।

**दिगम्बर**—हमारा अभिप्राय यह है कि—सर्वोत्कृष्ट पदकी प्राप्ति सर्वोत्कृष्ट ध्यानसे ही होती है। सबसे ऊँचे दो ही पद हो सकते हैं—एक तो सबसे अधिक दुःखका स्थान सातवां नरक और दूसरा सबसे अधिक सुखका स्थान मोक्ष। तो जिस तरह आगममें स्त्रियोंको सातवें नरक जानेका निषेध है क्योंकि उनमें सातवें नरकको जानेके योग्य तीव्र मानसिक संक्लेश तथा उतनी हिम्मत नहीं होती, ठीक उसी तरह उनमें मोक्ष जानेके योग्य हिम्मत तथा शुभ मानसिक भाव नहीं होते अतः वे मोक्ष भी नहीं जा सकतीं। प्रयोग—स्त्री जातिमें मोक्ष जानेके कारण शुभ भाव तथा शक्तिकी प्रकर्षता नहीं है, उनमें इतनी अधिक हिम्मत तथा तीव्र शुभभाव नहीं हैं, क्योंकि वह परम प्रकर्ष—सर्वोच्च दशा है जिस तरह सातवें नरक जानेमें कारण तीव्र संक्लेश भाव तथा उतनी हिम्मत स्त्रियोंमें इसीलिए नहीं पायी जाती कि वह सर्वोच्चदशा है उसी तरह मोक्ष जानेके लायक शक्ति तथा सर्वोच्च विशुद्धभावोंके प्राप्त करनेकी योग्यता अबलाओंमें नहीं है।

**श्वेताम्बर**—आपका कथन अयुक्त है, क्योंकि वैसा नियम नहीं है। किसी दृष्टान्तमें हेतु और साध्यकी व्याप्ति मिल जानेसे ही वह हेतु सच्चा नहीं हो सकता, किन्तु पक्षमें भी उसका अविनाभाव विधिवत् मिलना चाहिए। उसकी अन्तर्व्याप्ति पक्षमें साध्य-साधनकी व्याप्ति ही सचमुच उसमें सत्यता लानेका प्रधान कारण होती है। यदि बहिर्व्याप्ति-दृष्टान्तमें साध्यसाधनकी व्याप्ति-मात्रसे ही हेतु सच्चा मान लिया जाय, तो गर्भगत लड़केमें सांवलापन सिद्ध करनेके लिए दिया जानेवाला तत्पुत्रत्व—चूँकि यह भी उसीका लड़का है—हेतु भी सच्चा हो जाना

---

१. गमनायोग्य-आ. । २. सप्तमनरक-म. २ । ३. सर्वोत्कृष्टाशुभ-इत्यादि पाठः आ. प. । ४. यथा मुक्तिगमनमपि तद्गमनयोग्यतथाविधशुभमनोवीर्याभावात् इत्यपि पाठः आ. पा. । ५. -रणं शुभ-म. २, क. । ६. -प्रकर्षोत्सप्तम-क. । ७. "निर्वाणकारणज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति, परमप्रकर्षत्वात्, सप्तमपृथिवीगमनकारणाऽपुण्यपरमप्रकर्षवत् ।"—न्यायकुमु. पृ. ८६० । प्रमेयक. पृ. ३२८ । ८. -श्चिन्तव्य-आ., क. । "सप्तमपृथिवीगमनाद्यभावमव्याप्तमेव मन्यन्ते । निर्वाणाभावेनापश्चिमतनवो न तां यान्ति ॥"—स्त्रीमु. श्लो. ५ । सन्मति. टी. पृ. ७५३ । प्रज्ञा. मलय. पृ. २० B । नन्दि. मलय. पृ. १३२ B । रत्नाकराव. ७।५० । शास्त्रवा. यशो. पृ. ४२८ A. । युक्तिप्र. पृ. ११५ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

विपक्षव्यावृत्तिकमिदं साधनम् । चरमशरीरिभिर्निश्चितव्यभिचारं[1] च, तेषां हि सप्तमपृथ्वीगमनहेतुमनोवीर्यप्रकर्षाभावेऽपि मुक्तिहेतुमनोवीर्यप्रकर्षसद्भावात् । तथा मत्स्यैरपि व्यभिचारः, तेषां हि सप्तमपृथ्वीगमनहेतुमनोवीर्यप्रकर्षसद्भावेऽपि न मुक्तिगमनहेतुशुभमनोवीर्यप्रकर्षसद्भाव इति । तथा नहि येषामधोगमनशक्तिः स्तोका तेषामूर्ध्वंगतावपि शक्तिः स्तोकैव, भुजपरिसर्पादिभिर्व्यभिचारात् । तथाहि—[2]भुजपरिसर्पा अधो द्वितीयामेव पृथ्वीं गच्छन्ति न ततोऽधः, पक्षिणस्तृतीयां यावत्, चतुर्थीं चतुष्पदाः पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद्गच्छन्ति, अतो न सप्तमपृथ्वीगमनायोग्यत्वेन विशिष्टसामर्थ्यासत्त्वम् ।

§ २७७. नापि वादादिलब्धिरहितत्वेन[3], मूककेवलिभिर्व्यभिचारात्[4] ।

---

चाहिए । अन्तर्व्याप्तिकी सिद्धि तो निर्दोष अविनाभावसे होती है । परन्तु सातवें नरक जानेमें तथा मोक्ष जानेमें कोई अविनाभाव नहीं है । कोई सातवें नरक न भी जाय तब भी मोक्ष जा सकता है । इस तरह यह हेतु सन्दिग्ध व्यभिचारी है । चरमशरीरी सातवें नरक नहीं जाकर भी मोक्ष जाते हैं अतः निश्चित रूपसे ही उक्त नियम व्यभिचारी है । चरमशरीरियोंके सातवें नरक जानेके लायक तीव्र अशुभ भाव तथा शक्ति नहीं है फिर भी उनमें मोक्षके कारण विशुद्ध भाव तथा शक्ति पायी जाती है । महामत्स्यके सातवें नरक जानेके योग्य तीव्र संक्लेश भाव तथा शक्तिका विकास तो देखा जाता है पर उसमें मोक्ष जानेके लायक विशुद्ध भाव तथा शक्तिका उच्च विकास नहीं पाया जाता, अतः महामत्स्यसे भी आपका नियम व्यभिचारी हो जाता है । यह भी कोई नियम नहीं है कि—'जिनमें नीचे नरकमें जानेकी शक्ति कम है उनमें ऊपर स्वर्ग जानेकी भी शक्ति कम ही होनी चाहिए' भुजपरिसर्प आदिसे उक्त नियम व्यभिचारी हो जाता है । देखो, भुजपरिसर्प नीचे दूसरे ही नरक तक जाते हैं, पक्षी तीसरे नरक तक, चौपाये पशु चौथे नरक तक, तथा सर्प पाँचवें ही नरक तक जाते हैं परन्तु ये सभी ऊपर सहस्रार नामके बारहवें स्वर्ग तक ही जाते हैं । इसलिए यह कोई नियम नहीं है कि जो जितना नीचे जाये वह उतना ही ऊपर जा सके अतः सातवें नरक जानेकी योग्यता न होनेसे स्त्रियोंमें मोक्ष जानेकी विशिष्ट शक्तिका अभाव नहीं माना जा सकता है ।

§ २७७. वाद ऋद्धि आदि न होनेके कारण वाद आदि करनेकी कुशलता न होनेके कारण भी स्त्रियोंको पुरुषसे हीन मानकर उनका मोक्षका रास्ता बन्द नहीं किया जा सकता, क्योंकि इस तरह तो मूक केवली भी, जो एक भी शब्दका उच्चारण नहीं करके चुपचाप ही मोक्ष चले जाते हैं, मोक्ष न जा सकेंगे ।

---

१. –क्तिस्तेषा–भ. २ । २. "विषमगतयोऽप्यधस्तादुपरिष्टात्तुल्यमासहस्रारम् । गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतुः ॥"—स्त्रीमु. श्लो. ६ । "अपि च भुजपरिसर्पाः द्वितीयामेव पृथिवीं यावत् गच्छन्ति न परतः परपृथिवीगमनहेतुतथारूपमनोवीर्यपरिणत्यभावात्, तृतीयां यावत् पक्षिणः । चतुर्थीं चतुष्पदाः, पञ्चमीमुरगाः, अथ च सर्वेऽप्यूर्ध्वमुत्कर्षतः सहस्रारं यावद् गच्छन्ति । तत्राधोगतिविषये मनोवीर्यपरिणतिवैषम्यदर्शनादूर्ध्वंगतावपि च न तद्वैषम्यम् ।"—प्रज्ञा. मलय. पृ. २१ A. । नन्दि. मलय. पृ. १३६ A. । शास्त्रवा. यशो. पृ. ४२८ B. । युक्तिप्र. पृ. ११५ । ३. "यतो यत्र ऐहिकवादविक्रियाचारणादिलब्धीनामपि हेतुः संयमविशेषो नास्ति तत्र मोक्षहेतुरसौ भविष्यतीति कः सुधी श्रद्दधीत ?"—न्यायकुमु. पृ. ८७२ । प्रमेयक. पृ. ३३० । ४. "वादादिविकुर्वणत्वादिलब्धिविरहे श्रुते कनीयसि च । जिनकल्पमनःपर्ययविरहेऽपि न सिद्धिविरहोऽस्ति ॥ वादादिलब्ध्यभाववदभविष्यद् यदि च सिद्ध्यभावोऽपि । तासामवारयिष्यद् यथैव जम्बूयुगादारात् ।" —स्त्रीमु. श्लो. ७–८ । प्रज्ञा. मलय. पृ. २१ A. । रत्नकराव. ७।५७ । "माषतुषादीनां लब्धिविशेषहेतुसंयमाभावेऽपि मोक्षहेतुतच्छ्रवणात्, क्षायोपशमिकलब्धिविरहेऽपि क्षायिकलब्धेरप्रतिघातात् ।" —शास्त्रवा. यशो. पृ. ४२७ B. ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २७८. तथाल्पश्रुतत्वेनेति पक्षस्त्वनुद्घोष्य एव; मुक्त्यवाप्त्यानुमितविशिष्टसामर्थ्यैर्माषतुषादिभिरनेकान्तिकत्वात्, तन्न विशिष्टसामर्थ्यासत्त्वं[1] स्त्रीणां घटते ।

§ २७९. नापि पुंरुषानभिवन्द्यत्वेन[2] स्त्रीणां हीनत्वम्, यतस्तदपि किं सामान्येन गुणाधिकपुरुषापेक्षया वा । आद्योऽसिद्धः, [3]तीर्थंकरजनन्यादयो हि शक्रैरपि पूज्यन्ते किमङ्ग [4]शेषपुरुषैः । द्वितीयश्चेत्; तदा गणधरा अपि [5]तीर्थंकरैर्नाभिवन्द्यन्त इति तेषामपि हीनत्वान्मोक्षो न स्यात् । तथा चतुर्वर्णस्य सङ्घस्य [6]तीर्थंकरैर्वन्द्यत्वात्सङ्घान्तर्गतत्वेन संयतीनामपि तीर्थंकरवन्द्यत्वाभ्युपगमात्कथं[7] स्त्रीणां हीनत्वम्[8] ।

§ २८०. अथ[9] स्मा(सा)रणाद्यकर्तृत्वेनेति पक्षः; तदाचार्याणामेव मुक्तिः स्यान्न शिष्याणां

§ २७८. इसी तरह श्रुतज्ञानकी अपूर्णता या अल्प श्रुतज्ञान होनेके कारण भी स्त्रियाँ हीन या मोक्षके अयोग्य नहीं हैं । अल्पश्रुत होनेकी तो दरअसल आपको बात ही नहीं छेड़नी चाहिए, क्योंकि मोक्षके साथ पूर्ण श्रुतज्ञानकी कोई व्याप्ति नहीं है । जिन्हें केवल 'उड़दकी बिजी अलग है तथा ऊपरका छिलका अलग है' इतना ही भेदज्ञान था ऐसे माषतुष आदि मुनियोंने भी मोक्ष प्राप्त किया है अतः श्रुतज्ञानकी पूर्णता या अपूर्णताका मोक्षके साथ कोई सम्बन्ध नहीं है । मोक्ष जानेके लिए तो अन्तरंगकी भाव श्रुतरूप विशिष्ट शक्ति चाहिए, सो स्त्रियोंमें हो ही सकती है । अतः अल्पश्रुत होनेसे मोक्ष नहीं जा सकनेका नियम माषतुषादिसे व्यभिचारी है । इस तरह विशिष्ट सामर्थ्यके अभावके कारण स्त्रियोंको हीन कहकर उन्हें मोक्ष जानेसे नहीं रोक सकते ।

§ २७९. 'पुरुष उन्हें नमस्कार नहीं करते अतः वे हीन हैं' यह कथन भी युक्त नहीं है; क्योंकि स्त्रियाँ सामान्यरूपसे ही सब पुरुषोंके द्वारा अवन्द्य हैं या किसी अपनेसे विशिष्ट गुणी पुरुषके द्वारा । पहला पक्ष तो असिद्ध है; क्योंकि तीर्थंकरकी माता आदिको जब बड़े-बड़े इन्द्र भी आकर नमस्कार करते हैं तब अन्य साधारण मनुष्योंकी तो बात ही क्या । यदि अपनेसे अधिक गुणवालोंके द्वारा अवन्द्य होनेके कारण स्त्रियाँ हीन हों और इसीलिए उनका मोक्षका दरवाजा बन्द होता है; तो तीर्थंकर गणधरोंको भी नमस्कार नहीं करते अतः गणधर भी हीन दरजेमें आकर मोक्ष जानेसे रोक दिये जांय । जब तीर्थंकर मुनि, आर्या, श्रावक और श्राविका इन चारों प्रकारके संघको सामान्य रूपसे नमस्कार करते हैं, तब संघके अन्तर्गत साध्वी और श्राविकाएँ भी तीर्थंकरके द्वारा नमस्कृत हो ही जाती हैं, अतः स्त्रियोंको हीन क्यों समझा जाय ?

§ २८०. यदि स्त्रियाँ पढ़ा नहीं सकतीं या दूसरेको कर्तव्य या पाठका स्मरण नहीं करा

१. –सत्त्वं घट–म. २ । २. "स्त्रीणां न निर्वाणपदप्राप्तिः, यतिगृहिदेववन्द्यपदाऽनर्हत्वात्, नपुंसकादिवत् ।" न्यायकुमु. पृ. ८७५ । ३. तीर्थंकरपरमेश्वरजनन्यादयो वज्रिभिरपि म. २ । ४. शेषैः म. २ । ५. तीर्थंकरपरमेश्वरैर्ना–म. २ । ६. तीर्थंकरवन्द्य–म. १, २, प. १, २ । ७. कथं हीनत्वं स्त्रीणाम् म. २ । ८. "अप्रतिवन्द्यत्वाच्चेत्संयतवर्गेण नार्यिकासिद्धिः । वन्दतां ता यदि ते नोनत्वं कल्प्यते तासाम् ॥ सन्त्यूनाः पुरुषेभ्यस्ताः स्मारणवारणादिकारिभ्यः । तीर्थंकराकारिभ्यो न च जिनकल्पादिरिति गणधरादीनाम् । अर्हन् न वन्दते न तावताऽसिद्धिरंगगते । प्रासान्यथा विमुक्तिः स्थानं स्त्रीपुंसयोस्तुल्यम् ॥"–स्त्रीमु. श्लो. १४–२६ । "अथ महाव्रतस्थपुरुषावन्द्यत्वात् न तासां मुक्त्यवाप्तिः, तर्हि गणधरादेरपि अर्हदवन्द्यत्वात् न मुक्त्यवाप्तिः स्यात् ।"–सन्मति. टी. पृ. ७५४ । रत्नाकराव. ७।५७ । शास्त्रवा. यशो. पृ. ४२९ A. । युक्तिप्र. पृ. ११४ । ९. "इतश्च तत्सिद्धम् यतः सारणवारणपरिचोदनादीनि स्त्रीणां पुरुषाः कुर्वन्ति न स्त्रियः पुरुषाणाम्, तीर्थंकराकारधराश्च पुरुषा न स्त्रियः । उक्तं च– "सारणवारणपरिचोयणणइ पुरिसा करेई रतह इत्थी" –न्यायकु. पृ. ८७१ । "सारणा हिते प्रवर्तनलक्षणा कृत्यस्मारणलक्षणा वा, उपलक्षणत्वाद् वारणा अहितान्निवारणलक्षणा, चोयणा संयमयोगेषु स्खलितः सन्नयुक्तमेतद् भवादृशां विधातुमित्यादिवचनेन प्रेरणा, प्रतिचोदना तथैव पुनः-पुनः प्रेरणा ।" –गच्छा. वृ. गा. १७ । ओघनि. टी. गा. ४४८ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**तेषां स्मा(सा)रणाद्यकर्तृत्वात् ।**

**§ २८१. अथामहर्द्धिकत्वेनेति पक्षः, सोऽपि न दक्षः, यतो दरिद्राणामपि केषांचिन्मुक्तिः श्रूयते केषांचिन्महर्द्धिकाणामपि चक्रवर्त्यादीनां तदभावः ।**

**§ २८२. अथ मायावि[1]प्रकर्षवत्त्वेनेति, तदपि न युक्तम्, नारददृढप्रहारिभिर्व्यभिचारात् ।**

**§ २८३. तन्न हीनत्वं कथमपि स्त्रीणां जाघटीतीति हीनत्वादित्यसिद्धो हेतुः । ततश्चाविगानेन पुरुषाणामिव योषितामपि निर्वाणं प्रतिपत्तव्यम् । प्रयोगश्चात्र—[2]अस्ति स्त्रीणां मुक्तिः, अविकलकारणवत्त्वात् पुंवत्, तत्कारणानि सम्यग्दर्शनादीनि स्त्रीषु संपूर्णान्युपलभ्यन्ते । ततो भवत्येव स्त्रीणां मोक्ष इ[3]ति सुस्थितं मोक्षतत्त्वम् ।* एतेन[4] ।**

२८४. § "ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् ।
गत्वागच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥१॥"*

**इति परपरिकल्पितं पराकृतम् ॥५२॥**

सकतीं इसलिए पुरुषोंसे हीन होकर मोक्षके अयोग्य मानी जायं; तो फिर पढ़ानेवाले आचार्योंकी ही मुक्ति होनी चाहिए और पढ़नेवाले शिष्योंको संसारमें ही चक्कर काटते रहना चाहिए ।

§ २८१. स्त्रियोंको ऋद्धि नहीं होती इसलिए हीन कहना तो वस्तुतः जैन शासनकी अनभिज्ञता ही प्रकट करना है । भला वीतरागी मोक्षका ऋद्धिसे क्या सम्बन्ध है । बहुत-से दरिद्र भी मुक्ति गये हैं तथा बड़े-बड़े चक्रवर्ती आदि इसी संसारमें पड़े हुए हैं ।

§ २८२. माया आदिकी प्रकर्षता होनेसे स्त्रियोंको हीन तथा मोक्षके अयोग्य कहना भी उचित नहीं है; क्योंकि अत्यन्त कलहप्रिय नारद तथा तीव्र हिंसक दृढ़प्रहारी आदिमें कषायकी तीव्रता होनेपर भी वे पुरुषोंमें हीन नहीं समझे जाते और न उनकी मुक्तिकी योग्यतामें ही किसी प्रकारका बट्टा लगा ।

§ २८३. इस प्रकार किसी भी तरह स्त्रियां पुरुषोंसे हीन—कमजोर सिद्ध नहीं हो पातीं । अतः उन्हें हीन कहना असिद्ध ही है । अतः निर्विवाद रूपसे पुरुषोंकी तरह स्त्रियोंको भी मोक्ष मानना चाहिए । प्रयोग–स्त्रियोंको भी मोक्ष होता है क्योंकि उनमें पुरुषोंकी ही तरह मोक्षके कारणोंकी समग्रता तथा पूर्णता पायी जाती है । मोक्षके कारण हैं सम्यग्दर्शन, ज्ञान और चारित्र । सो ये तीनों ही पुरुषोंकी तरह स्त्रियोंमें भी पूर्णरूपसे पाये जाते हैं । अतः स्त्रियोंको मोक्ष होता ही है, इसमें किसी प्रकारकी शंका नहीं है । इस तरह मोक्षतत्त्वका निरूपण हुआ ।

§ २८४. यह मोक्ष जिसे हो जाता है उसे अनन्तकाल तक रहता है । वह कभी भी वहाँसे लौटकर संसारी नहीं बनता । अतः परवादियोंका यह कथन खण्डित हो जाता है कि–"धर्मतीर्थके प्रवर्तक ज्ञानी जीव अपने धर्मको हानि या तिरस्कार देखकर मोक्षसे फिर वापस आकर अवतार ग्रहण करते हैं ।" ॥५२॥

१. –प्रकर्षकत्वेनेति आ., क. । २. "अस्ति स्त्रीनिर्वाणं पुंवत् यदविकलहेतुकं स्त्रीषु । न विरुद्धयति हि रत्नत्रयसंपदनिर्वृतेर्हेतुः ॥"–स्त्रीमु. श्लो. २ । सन्मति. टी. पृ. ७५२ । एतदर्थम् उत्तराध्ययनस्य पाइयटीकापि विलोकनीया । "इत्थीलिङ्गसिद्धा–सम्यग्दर्शनादीनि पुरुषाणामिव स्त्रीणामप्यविकलानि दृश्यन्ते तथाहि·····"–प्रज्ञा. मलय. पृ. २० A. । नन्दि. मलय. पृ. १३१ B. । रत्नाकराव. ७।५७ । "यथोक्तं यापनीयतन्त्रे–णो खलु इत्थी अजीवो, ण यावि अभव्वा, ण यावि दंसणविरोहिणी, णो अमाणुसा, णो अणारिउप्पत्ती, णो असंखेज्जाउया, णो अइकूरमई, णो ण उवसन्तमोहा, णो ण सुद्धाचारा, णो असुद्धबोंदी, णो ववसायवज्जिया, णो अपुव्वकरणविरोहिणी, णो णवगुणगणरहिता, णो अजोग्गा लद्धीए, णो अकल्लाणभायणं ति कहं न उत्तमधम्मसाहिगत्ति ।" ललितवि. पु. ५७ B. । शास्त्रवा. यशो. पृ. ४२९ B. । ३. इति स्थितं आ., क. । ४. *एतदन्तर्गतः पाठो नास्ति म. १, २, प. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २८५. एतानि नव तत्त्वानि यः श्रद्धत्ते स्थिराशयः ।
सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥५३॥

§ २८६. व्याख्या—एतानि–अनन्तरोदितानि नवसंख्यानि तत्त्वानि यः स्थिराशयो–न पुनः शङ्कादिना चलचित्तः श्रद्धानस्य ज्ञानपूर्वकत्वाज्जानीते श्रद्धत्ते च—अवैपरीत्येन मनुते। एतावता जानन्नप्यश्रद्दधानो मिथ्यादृगेवेति सूचितम् । यथोक्तं श्रीगन्धहस्तिना महातर्के "द्वादशाङ्गमपि श्रुतं विदर्शनस्य मिथ्या" इति। तस्य श्रद्धानस्य सम्यक्त्वज्ञानयोगेन–सम्यग्दर्शनज्ञानसद्भावेन चारित्रस्य—सर्वसावद्यव्यापारनिवृत्तिरूपस्य देशसर्वभेदस्य योग्यता भवति, अत्र ज्ञानात्सम्यक्त्वस्यैव प्राधान्येन पूज्यत्वात्प्राग्निपातः, अनेन सम्यक्त्वज्ञानसद्भाव एव चारित्रं भवति नान्यथेत्यावेदितं द्रष्टव्यम् ॥५३॥

§ २८७. तथाभव्यत्वपाकेन यस्यैतत्त्रितयं भवेत् ।
सम्यग्ज्ञानक्रियायोगाज्जायते मोक्षभाजनम् ॥५४॥

§ २८८. व्याख्या—जीवा द्वेधा [2]भव्याभव्यभेदात्, अभव्यानां सम्यक्त्वाद्यभावः, भव्यानामपि भव्यत्वपाकमन्तरेण तदभाव एव, तथाभव्यत्वपाके तु तत्सद्भावः, ततोऽत्रायमर्थः[3]—भविष्यति विवक्षितपर्यायेणेति भव्यः, तद्भावो भव्यत्वम्, भव्यत्वं नाम सिद्धिगमनयोग्यत्वम्,

---

§ २८५. इन नवतत्त्वोंपर जो स्थिरचित्त तथा अडिग श्रद्धासे विश्वास करता है उसमें सम्यग्दर्शन और ज्ञानकी प्राप्ति हो जानेसे चारित्रकी योग्यताका विकास होने लगता है ॥५३॥

§ २८६. इन जीवादि नव तत्त्वोंका जो स्थिर अभिप्रायसे शंका आदिसे होनेवाली चित्तकी चंचलताको छोड़कर अविपरीत यथावत् ज्ञान तथा श्रद्धान करता है वह सम्यग्दृष्टि तथा ज्ञानी है। श्रद्धान ज्ञानपूर्वक होता है अतः इन तत्त्वोंके श्रद्धानमें इनका ज्ञान भी अन्तर्भूत रहता ही है। श्रद्धान शब्दके प्रयोगसे यह सूचित होता है कि जो व्यक्ति जानकर भी यथावत् श्रद्धान नहीं करता वह मिथ्यादृष्टि है। उसका ज्ञान मिथ्याज्ञान है निरर्थक है। गन्धहस्तिने महातर्कमें कहा है कि—"यदि मिथ्यादृष्टिको द्वादशांग श्रुतका भी परिज्ञान हो जाय तब भी वह मिथ्या ही है निरर्थक है।" उस श्रद्धालु सम्यग्दृष्टिके सम्यग्दर्शन और सम्यग्ज्ञानका सद्भाव होनेसे समस्त पाप क्रियाओंसे निवृत्ति करनेवाले चारित्रकी योग्यताका अंशतः या पूर्णरूपसे विकास होने लगता है। सर्व चारित्र तथा देश चारित्रके भेदसे चारित्र दो प्रकारका होता है। ज्ञानसे पहले सम्यग्दर्शनका प्रयोग सम्यग्दर्शनकी प्रधानता तथा पूज्यताका सूचन करता है। यह सम्यग्दर्शन ही ज्ञानमें 'सम्यग्' व्यवहार करता है। सम्यग्दर्शन और ज्ञानके होनेपर ही सम्यक् चारित्र हो सकता है, इनके बिना होनेवाली क्रियाएँ मिथ्या चारित्र रूप ही हैं ॥५३॥

§ २८७. जिस भव्यको भव्यत्व गुणके परिपाकसे ये रत्नत्रय प्राप्त हो जाते हैं वही भव्य सम्यग्ज्ञान तथा सम्यक्चारित्रकी पूर्णतासे मोक्षको प्राप्त कर लेता है ॥५४॥

§ २८८. जीव दो प्रकारके होते हैं—एक भव्य—होनहार तथा दूसरे अभव्य। अभव्य जीवोंको सम्यग्दर्शन आदि नहीं होते। भव्यजीवोंके भी जबतक भव्यत्वगुणका परिपाक नहीं होता तबतक सम्यग्दर्शन आदि नहीं होते, जब इनके भव्यत्वगुणका परिपाक हो जाता है तभी सम्यग्दर्शन आदि विकसित हो जाते हैं। जो अपनी उस विवक्षित सम्यग्दर्शन आदि पर्याय रूपसे परिणत होगा उसे भव्य कहते हैं। भव्यके असाधारण स्वरूप या खासियतको भव्यत्व कहते हैं। भव्यत्वका सीधा अर्थ है मोक्ष जानेकी योग्यता। यह भव्यत्व जीवोंका अनादिकालसे रहनेवाला पारिणामिक-

१. मन्तव्यम् भ. २। २. भव्या अभव्याश्च अम–भ. १, २, प. १, २। ३. –र्थः विवक्षितपर्यायेण भवतीति भव्यः भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

जीवानामनादिपारिणामिको भावः। एवं सामान्यतो भव्यत्वमभिधायार्थं तदेव प्रतिविशिष्टमभिधातुमाह तथा–तेना(न)नियतप्रकारेण भव्यत्वं तथाभव्यत्वम्। अयं भावः—भव्यत्वमेव स्वस्वकालक्षेत्रगुर्वादिद्रव्यलक्षणसामग्रीभेदेन नानाजीवेषु भिद्यमानं सत्तथाभव्यत्वमुच्यते अन्यथा तु सर्वैः प्रकारैरेकाकारायां योग्यतायां सर्वेषां भव्यजीवानां युगपदेव धर्मप्राप्त्यादि भवेत्, तथाभव्यत्वस्य यः पाकः फलदानाभिमुख्यं तेन तथाभव्यत्वपाकेन, यस्य कस्यापि सागरोपमकोटीकोटयभ्यन्तरानीतसर्वकर्मस्थितिकस्य भव्यस्य एतत्त्रितयं ज्ञानदर्शनचारित्रत्रयं, भवेत्, यत्तदोर्नित्याभिसंबन्धात्, स भव्यः सम्यक्–समीचीने ये ज्ञानक्रिये–ज्ञानचारित्रे तयोर्योगात्संयोगान्मोक्षस्य–बन्धवियोगस्यानन्तज्ञानदर्शनसम्यक्त्वसुखवीर्यपञ्चकात्मकस्य भाजनं–स्थानं जायते, एतेन केवलाभ्यां ज्ञानक्रियाभ्यां न मोक्षः किं तूभाभ्यां संयुक्ताभ्यां ताभ्यामिति ज्ञापितं भवति। अत्र ज्ञानग्रहणेन सदा सहचरत्वेन दर्शनमपि ग्राह्यम्। यदुवाच वाचकमुख्यः "सम्यग्ज्ञानदर्शनचारित्राणि मोक्षमार्गः" [ त. सू. १।१ ] इति॥

§ २८९. प्रत्यक्षादिप्रमाणविशेषलक्षणमत्र ग्रन्थकारः स्वयमेव वक्ष्यति। तच्च विशेषलक्षणं सामान्यलक्षणाविनाभावि, सामान्यलक्षणं च विशेषलक्षणाविनाभावि, सामान्यविशेषलक्षणयोरन्योन्यापरिहारेण स्थितत्वात्। तेन प्रमाणविशेषलक्षणस्यादौ प्रमाणसामान्यलक्षणं सर्वत्र वक्तव्यम्, अतोऽत्रापि प्रथमं तदभिधीयते।

---

स्वाभाविक भाव है। इस तरह सामान्यरूपसे भव्यत्वका निरूपण करके अब विशेष भव्यताका कथन करते हैं। तथा उस निश्चित रूपसे होनेकी योग्यता तथाभव्यत्व कही जाती है। तात्पर्य यह कि—यद्यपि साधारण रूपसे भव्यत्व एक है परन्तु वह अपने-अपने द्रव्य, क्षेत्र, काल, गुरु आदिका उपदेशरूप सामग्रीकी भिन्नतासे भिन्न-भिन्न जीवोंमें जुदे-जुदे प्रकारका पाया जाता है। यदि सब जीवोंमें एक ही प्रकारका भव्यत्व हो तो सभी जीवोंमें एक ही साथ एक ही प्रकारकी योग्यताका विकास होनेसे युगपद् मुक्ति हो जानी चाहिए। अतः भिन्न-भिन्न प्रकारके भव्यत्वोंमें-से एक अमुक प्रकारके भव्यत्वका परिपाक होनेसे मुक्तिकी योग्यता विकसित होती है। जिस जीवके समस्त कर्मोंकी स्थितियाँ कम करते-करते एक कोटाकोटी सागरके भीतर आ गयी हों उस न्यून कर्म स्थितिवाले भव्यजीवके सम्यग्दर्शन आदि रत्नत्रय होते हैं। यत् और तत्का नित्य सम्बन्ध होता है, अतः वही न्यूनकर्म स्थितिवाला भव्य समीचीन ज्ञान और चारित्रके द्वारा कर्मबन्धनोंको काटकर मोक्षपद पा लेता है, वह अनन्तज्ञान, अनन्तदर्शन, सम्यक्त्व, अनन्तसुख तथा अनन्तवीर्य इस अनन्तपंचकका स्वामी हो जाता है। इससे यह भी सूचित होता है कि अकेले ज्ञान और अकेली क्रियासे ज्ञानशून्य चारित्र तथा चारित्ररहित ज्ञानसे मुक्ति नहीं होती किन्तु जब सम्यग्ज्ञान और सम्यक्चारित्र दोनों परिपूर्ण होते हैं तभी मोक्षकी प्राप्ति होती है। सम्यग्ज्ञानको मोक्षका कारण बतानेसे उसका सहचारी सम्यग्दर्शन तो आ ही जाता है। सम्यग्दर्शनके बिना तो ज्ञान और चारित्रमें 'सम्यक्' व्यपदेश ही नहीं हो सकता। श्री तत्त्वार्थसूत्रकार वाचकमुख्यने कहा भी है कि—"सम्यग्ज्ञान, सम्यग्दर्शन और सम्यक्चारित्रकी पूर्णता ही मोक्षका मार्ग है।" इति।

§ २८९. प्रत्यक्ष आदि विशेष प्रमाणोंके लक्षण ग्रन्थकार स्वयं ही कहेंगे। प्रमाण विशेषके लक्षणका कथन तो तब हो सकता है जब पहले सामान्यका लक्षण कर दिया जाय। सामान्य लक्षण और विशेष लक्षण दोनों ही परस्पर सापेक्ष हैं, अविनाभावी हैं। अतः प्रमाण विशेष-

---

१. –थ प्रति- म. २। २. –रायां सर्वेषां म. २। ३. –मकोटिकोटयन्त–म. २। –मकोटयन्त–आ.। ४. –त्रस्वरूपरत्नत्रयं म. २। ५. –गान्मोक्षस्य म. २, प. १, २। ६. –पि स प्रथमं तद–क., –पि तद–म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २९०. 'स्वपरव्यवसायि ज्ञानं प्रमाणं' इति प्रकर्षेण संशयाद्यभावस्वभावेन मीयते परिच्छिद्यते वस्तु येन तत्प्रमाणम्[1]। स्वमात्मा ज्ञानस्य स्वरूपं परः स्वस्मादन्योऽर्थ इति यावत् तौ विशेषेण यथावस्थितस्वरूपेणावस्यति निश्चिनोतीत्येवंशीलं यत्तत्स्वपरव्यवसायि।

§ २९१. ज्ञायते प्राधान्येन विशेषो गृह्यतेऽनेनेति ज्ञानम्। अत्र ज्ञानमिति विशेषणमज्ञानरूपस्य व्यवहारमार्गानवतारिणः सन्मात्रगोचरस्य स्वसमयप्रसिद्धस्य दर्शनस्य संनिकर्षादेश्चाचेतनस्य नैयायिकादिकल्पितस्य प्रामाण्यपराकरणार्थम्[3]।

§ २९२. ज्ञानस्यापि च प्रत्यक्षरूपस्य शाक्यैर्निर्विकल्पतया प्रामाण्येन कल्पितस्य[5] संशयविपर्ययानध्यवसायानां च प्रमाणत्वव्यवच्छेदार्थं व्यवसायीति।

§ २९३. पारमार्थिकपदार्थसार्थापलापिज्ञानाद्वैतादिवादिमतमपाकर्तुं परेति।

§ २९४. नित्यपरोक्षबुद्धिवादिनां मीमांसकानामेकात्मसमवायिज्ञानान्तरप्रत्यक्षज्ञानवादिनां वैशेषिकयौगानामचेतनज्ञानवादिनां कापिलानां च कदाग्रहनिग्रहाय स्वेति।

§ २९५. समग्रं तु लक्षणवाक्यं परपरिकल्पितस्यार्थोपलब्धिहेत्वादेः प्रमाणलक्षणस्य प्रतिक्षेपार्थम्।

---

के लक्षणके पहले सब जगह सामान्य लक्षणके कहनेकी परिपाटी है। इसीलिए प्रमाण सामान्यका लक्षण कहते हैं —

§ २९०. स्व—अपने स्वरूप तथा परपदार्थोंका व्यवसाय निश्चय करनेवाला ज्ञान प्रमाण है। प्र—प्रकर्षसे अर्थात् संशय, विपर्यय आदिका निराकरण करके मीयते—जाना जाता है वस्तुतत्त्व जिसके द्वारा उसे प्रमाण कहते हैं। स्व—आत्मा ज्ञानका स्वरूप, पर अपनेसे भिन्न बाह्य पदार्थ इन स्व-परका वि–विशेष रूपसे यथावत् जिस रूपमें पदार्थ हैं ठीक उसी रूपसे निश्चय करनेवाला पदार्थका ज्ञान प्रमाण है।

§ २९१. जाना जाता है प्रधान रूपसे गृहीत होता है विशेष अंश जिसके द्वारा उसे ज्ञान कहते हैं। इस 'ज्ञान' विशेषणसे ज्ञानसे भिन्न अर्थात् अज्ञानरूप, सामान्यमात्रका आलोचन करनेवाले तथा प्रवृत्ति आदि व्यवहारके अनुपयोगी जैन आगममें प्रसिद्ध दर्शन और नैयायिक आदिके द्वारा माने गये अचेतनात्मक सन्निकर्ष आदिमें प्रमाणताका व्यवच्छेद हो जाता है, क्योंकि दर्शन चेतन होकर भी ज्ञानरूप नहीं है तथा सन्निकर्ष आदि तो अवचेतन होनेसे स्पष्ट ही अज्ञान रूप हैं।

§ २९२. व्यवसायी-निश्चयात्मक विशेषणसे बौद्धोंके द्वारा प्रमाण रूपसे माने गये निर्विकल्पक प्रत्यक्षका तथा संशय, विपर्यय और अनध्यवसायकी प्रमाणताका व्यवच्छेद होता है।

§ २९३. 'पर व्यवसाय' विशेषण वास्तविक घट-पटादि बाह्य पदार्थोंका लोप करके मात्र ज्ञानकी ही सत्ता माननेवाले विज्ञानाद्वैतवादीके मतका निराकरण हो जाता है।

§ २९४. ज्ञानको सर्वथा परोक्ष माननेवाले मीमांसकोंके ज्ञानका द्वितीय अनुव्यवसाय रूपसे प्रत्यक्ष माननेवाले नैयायिक और वैशेषिकोंके तथा ज्ञानको प्रकृतिका धर्म मानकर अचेतन माननेवाले सांख्योंके दुरभिप्रायका निराकरण करनेके लिए 'स्व व्यवसाय' पद दिया है।

§ २९५. पूरे लक्षण वाक्यसे नैयायिक आदिके अर्थकी उपलब्धिमें जो कारण है उसे प्रमाण कहते हैं इत्यादि प्रमाणके लक्षणोंका निषेध हो जाता है।

---

१. "स्वपरव्यवसायि ज्ञानं प्रमाणम्।"–प्रमा. त. १।२। जैनतर्कभा. पृ. १। २. –णयात्मज्ञानस्य म. २। ३. –ण्यनिराकर–म. २। ४. –क्षस्वरूपस्य म. २। ५. –तस्यापि संश–आ.। ६. प्रमाणत्वलक्षणत्व प्र. आ.। प्रमाणलक्षणत्वप्र–भ. १, २, प. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ २९६. अत्र च स्वस्य ग्रहणयोग्यः परोऽर्थः स्वपर इत्यस्यापि समासस्याश्रयणाद्व्यवहारिजनापेक्षया यस्य यथा यत्र ज्ञानस्याविसंवादः, तस्य तथा तत्र प्रामाण्यमित्यभिहितं भवति, तेन संशयादेरपि धर्मिमात्रापेक्षया न प्रामाण्यव्याहृतिः ॥५४॥

§ २९७. अथ विशेषलक्षणाभिधित्सया प्रथमं तावत्प्रमाणस्य संख्यां विषयं चाह—

**प्रत्यक्षं च परोक्षं च द्वे प्रमाणे तथा मते ।**
**अनन्तधर्मकं वस्तु प्रमाणविषयस्त्विह ॥५५॥**

§ २९८. व्याख्या—अक्षम्–इन्द्रियं प्रति गतमिन्द्रियाधीनतया यदुत्पद्यते तत्प्रत्यक्षमिति तत्पुरुषः, इदं [1]व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तं तु स्पष्टत्वम्, तेनानिन्द्रियादिप्रत्यक्षमपि–प्रत्यक्षशब्दवाच्यं सिद्धम्; [2]अक्षो–जीवो वात्र व्याख्येयः, जीवमाश्रित्यैवेन्द्रियनिरपेक्षमनिन्द्रियादि-

---

§ २९६. स्वपरका 'अपने ग्रहण करनेके लायक पर' ऐसा अर्थ करनेपर अपने-अपने योग्य पदार्थोंको जाननेवाले संशयादिज्ञान भी स्वरूपकी अपेक्षासे तथा सामान्य वस्तुको जाननेकी अपेक्षासे कथंचित् प्रमाण हैं यह बात सूचित हो जाती है। 'जो ज्ञान वस्तुके जिस अंशमें अविसंवादी हो वह ज्ञान वस्तुके उस अंशमें प्रमाण है' इस व्यवहार प्रसिद्ध नियमके अनुसार संशयादि ज्ञान भी वस्तुके सामान्य अंशमें प्रमाण हैं। स्वरूपकी दृष्टिसे तो संशय, विपर्यय या सम्यग्ज्ञान सभी ज्ञानमात्र प्रमाण हैं ॥५४॥

§ २९७. अब प्रमाण विशेषके लक्षणोंको कहनेकी इच्छासे पहले प्रमाणकी संख्या तथा विषयका निरूपण करते हैं—

**प्रमाणके दो भेद हैं, एक प्रत्यक्ष और दूसरा परोक्ष है। अनन्तधर्मवाली वस्तु प्रमाणका विषय होती है, प्रमाणके द्वारा अनन्तधर्मात्मकपदार्थ जाना जाता है ॥५५॥**

§ २९८. अक्ष–इन्द्रियोंके आधीन जिन ज्ञानोंकी उत्पत्ति है वे प्रत्यक्ष हैं। यह प्रत्यक्षशब्दकी शाब्दिक व्युत्पत्ति है। प्रत्यक्षशब्दकी प्रवृत्तिका निमित्त तो स्पष्टता है। जो ज्ञान स्पष्ट है वह चाहे इन्द्रियसे उत्पन्न हो या इन्द्रियोंके बिना ही उत्पन्न हो जाय अवश्य ही प्रत्यक्ष होगा। इससे जो ज्ञान इन्द्रियोंसे उत्पन्न नहीं होते वे अतीन्द्रियज्ञान भी प्रत्यक्षकी मर्यादामें आकर प्रत्यक्ष शब्दके वाच्य हो जाते हैं। अथवा, अक्षका अर्थ है जीव। जीवमात्रको निमित्त लेकर इन्द्रियादिके बिना ही जो ज्ञान उत्पन्न होते हैं वे भी प्रत्यक्ष ही हैं। इस व्युत्पत्तिके अनुसार अतीन्द्रिय और अनिन्द्रिय-मानसज्ञानमें प्रत्यक्षता सिद्ध हो जाती है। तत्पुरुष समास करनेपर प्रत्यक्ष शब्दका

---

१. "अक्षाश्रितत्वं च व्युत्पत्तिनिमित्तं शब्दस्य। न तु प्रवृत्तिनिमित्तम्। अनेन त्वक्षाश्रितत्वेनैकार्थसमवेतमर्थसाक्षात्कारित्वं लक्ष्यते। तदेव शब्दस्य प्रवृत्तिनिमित्तम्। ततश्च यत्किंचिदर्थस्य साक्षात्कारिज्ञानं तत् प्रत्यक्षमुच्यते। यदि च अक्षाश्रितत्वमेव प्रवृत्तिनिमित्तं स्यात् इन्द्रियज्ञानमेव प्रत्यक्षमुच्येत, न मानसादि, यथा गच्छतीति गौः इति गमनक्रियायां व्युत्पादितोऽपि गोशब्दः गमनक्रियोपलक्षितमेकार्थसमवेतं गोत्वं प्रवृत्तिनिमित्तीकरोति, तथा च गच्छति अगच्छति च गवि गोशब्दः सिद्धो भवति।" –न्यायवि. टी. ।।२। "यद् इन्द्रियमाश्रित्य उज्जिहीते अर्थसाक्षात्कारिज्ञानं तत् प्रत्यक्षम् इत्यर्थः, एतच्च प्रत्यक्षशब्दव्युत्पत्तिनिमित्तं न प्रवृत्तिनिमित्तम्"–इत्यादि, न्यायबा. टी. पृ. १६। "वैशद्यांशस्य सद्भावात् व्यवहारप्रसिद्धितः।"–तत्त्वार्थश्लो. पृ. १८२। न्यायकुमु. पृ. २६। २. "अक्ष्णोति व्याप्नोति जानातीत्यक्ष आत्मा तमेव प्राप्तक्षयोपशमं प्रक्षीणावरणं वा प्रतिनियतं प्रत्यक्षम्।"–सर्वार्थसि. १।१२। त. वा. १।१।१२ प्रमाणप. पृ. ६८। "तथा च भद्रबाहुः—जीवो अक्खो तं पइ जं वट्टई तं तु होइ पच्चक्खं। परओ पुण अक्खस्स वट्टन्तं होई पारोक्खं।" ( निर्युक्ति ) न्यायवि. टी. टि. प. १५। "जीवो अक्खो अत्यव्वावण भोयण गुणण्णिओ जेण। तं पई वट्टई णाणं जं पच्चक्खं तयं तिविहम् ॥८९॥'—विशेषाव. भा.। न्यायकुमु. पृ. २६।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रत्यक्षस्योत्पत्तेः । तत्र तत्पुरुषाश्रयणात्प्रत्यक्षो बोधः प्रत्यक्षा बुद्धिरित्यादौ [1]स्त्रीपुंसभावोऽपि सिद्धः ।

§ २९९. अक्षाणां परं-अक्षव्यापारनिरपेक्षं मनोव्यापारेणासाक्षादर्थपरिच्छेदकम् [2]परोक्षमिति परशब्दसमानार्थेन 'परस्' शब्देन सिद्धम् ।

§ ३००. [3]चशब्दो द्वयोरपि तुल्यकक्षतां लक्षयतः तेनानुमानादेः परोक्षस्य प्रत्यक्षपूर्वकत्वेन प्रवृत्तेर्यत्कैश्चित्प्रत्यक्षं[4] ज्येष्ठमभीष्टमेतन्न श्रेष्ठमिति सूचितम्, द्वयोरपि प्रामाण्यं प्रतिविशेषाभावात् । 'पश्य मृगो धावति' । इत्यादौ प्रत्यक्षस्यापि परोक्षपूर्वकस्य प्रवृत्तेः परोक्षस्य ज्येष्ठताप्रसङ्गात् । प्रत्यक्षपूर्वकमेव च परोक्षमुपजायत इति नायं सर्वत्रैकान्तः, अन्यथानुपपन्नत्वावधारितोच्छ्वासनिःश्वासादिजीवलिङ्गसद्भावाभ्यां जीवसाक्षात्कारिप्रत्यक्षलक्षणेऽपि जीवन्मृतप्रतीतिदर्शनात्, अन्यथा लोकव्यवहाराभावप्रसङ्गात् ।

---

विशेष्यके लिंगके अनुसार तीनों लिंगोंमें प्रयोग होता है जैसे प्रत्यक्षो बोधः, प्रत्यक्षा बुद्धिः इत्यादि । यहाँ बोध और बुद्धिरूप विशेष्य क्रमसे पुंल्लिग तथा स्त्रीलिंग हैं अतः प्रत्यक्ष शब्द भी उक्त दोनों लिंगोंमें प्रयुक्त हुआ है ।

§ २९९. इन्द्रियोंसे जो परे हो अर्थात् जिसमें इन्द्रियव्यापारकी अपेक्षा न हो केवल मनके व्यापारसे ही जो ज्ञान वस्तुको असाक्षात् रूपसे जाने उसे परोक्ष कहते हैं । पर शब्दका पर्यायवाची 'परस्' शब्द भी है । अतः परस् + अक्ष मिलकर परोक्ष बन जाता है ।

§ ३००. 'च' शब्दसे प्रत्यक्ष और परोक्ष दोनोंका ही समान बल या एकश्रेणीपन सूचित होता है । ये दोनों ही ज्ञान तुल्यबलवाले हैं और समानरूपसे अपने-अपने विषयमें प्रमाण हैं । इससे जो वादी अनुमान आदि परोक्षज्ञानोंकी उत्पत्ति प्रत्यक्षपूर्वक होनेसे प्रत्यक्षको ज्येष्ठ तथा प्रधान कहते हैं, उनका निराकरण हो जाता है । उनका प्रत्यक्षकी ज्येष्ठताका कथन किसी भी तरह श्रेष्ठ नहीं कहा जा सकता, क्योंकि प्रत्यक्ष और परोक्ष दोनों ही अपने-अपने विषयमें स्वतन्त्र तथा समान बलवाले हैं इनमें कोई ज्येष्ठ नहीं है । 'देखो, हरिण दौड़ रहा है' इस वाक्यको सुनकर उसका अर्थ विचारकर होनेवाला मृगका प्रत्यक्ष शब्दज्ञानरूप परोक्षपूर्वक हुआ, अतः परोक्षको भी प्रत्यक्षसे ज्येष्ठ मानना चाहिए । 'प्रत्यक्षपूर्वक ही सब जगह परोक्ष उत्पन्न होता है' यह ऐकान्तिक नियम नहीं है । देखो, जिस समय हम दूसरेकी आत्माको देख रहे हैं उसी समय जीवन के साथ अविनाभाव रखनेवाले श्वासोच्छ्वास आदि चिह्नोंसे उसकी सत्ताको तथा श्वासोच्छ्वास आदिके अभावसे उसके अभावको भी जानते हैं । जिस समय हम उसे देखते हैं उसी समय हमें उसके जीने और मरनेका भी अनुमानसे परिज्ञान हो ही जाता है । अतः ये दोनों प्रत्यक्ष और

---

१. स्त्रीपुंस्वभा—म. २ । २. "जं परदो विण्णाणं तं तु परोक्खत्ति भणिदमत्थेसु ॥५९॥"—प्रव. सार पृ. ७५ । "पराणीन्द्रियाणि मनश्च प्रकाशोपदेशादि च बाह्यनिमित्तं प्रतीत्य तदावरणकर्मक्षयोपशमापेक्षस्य आत्मन उत्पद्यमानं मतिश्रुतं परोक्षम् इत्याख्यायते ।"—सर्वार्थसि. १।११ । "उपात्तानुपात्तपरप्राधान्यादवगमः परोक्षम् ।" —तत्त्वार्थरा. वा. १।११ । "अक्षाद् आत्मनः परावृत्तं परोक्षम् । ततः परैः इन्द्रियादिभिः उक्ष्यते सिच्यते अभिवर्ध्यते इति परोक्षम् ।"—तत्त्वार्थश्लो. पृ. १८२ । प्रमाणप. पृ. ६९ । परीक्षामुख ३।१ । पञ्चाध्यायीश्लो. ६९६ । न्यायाव. श्लो. ४ । विशेषाव. भा. श्लो. ९० । सन्मति. टी. पृ. ५९५ । न्यायकुमु. पृ. २७ । प्रमाण. त. ३।१ । प्रमाणमी. २।१ । ३. "चकारः प्रत्यक्षानुमानयोस्तुल्यबलत्वं समुच्चिनोति ।" —न्यायवि. टी. १।३ । ४. "आदौ प्रत्यक्षग्रहणं प्राधान्यात्...तत्र किं शब्दस्यादावुपदेशो भवतु आहोस्वित् प्रत्यक्षस्येति । प्रत्यक्षस्येति युक्तम् । किं कारणम् । सर्वप्रमाणानां प्रत्यक्षपूर्वकत्वात् इति ।" न्यायवा. १, १, ३ । साङ्ख्यत. का. ५ । न्यायम. पृ. ६५, १०९ । "न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति युक्तम्, तस्य पौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया स्वतः सिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् ।"—भामती पृ. ६ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३०१. तथाशब्दः प्रागुक्तनवतत्त्वाद्यपेक्षया समुच्चये, वाक्यस्य सावधारणत्वात्, द्वे एव प्रत्यक्षे[1] परोक्षे[2] प्रमाणे मते-सम्मते।

§ ३०२. यदपि परैरुक्तं द्वयातिरिक्तं प्रमाणसंख्यान्तरं प्रत्यज्ञायि, तत्रापि यत्पर्यालोच्यमानमुपमानार्थापत्त्यादिवत्प्रमाणतामात्मसात्करोति[3] तदनयोरेव प्रत्यक्षपरोक्षयोरन्तर्भावनीयम्। यत्पुनर्विचार्यमाणं मीमांसकपरिकल्पिताभाववत् प्रामाण्यमेव नास्कन्दति न तेन बहिर्भूतेनान्तर्भूतेन वा प्रयोजनम्, अवस्तुत्वादित्यपकर्णनीयम्। तथाहि—प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावसम्भवैतिह्यप्रातिभयुक्त्यनुपलब्ध्यादीनि प्रमाणानि[5] यानि परे प्रोचुः, तत्रानुमानागमौ परोक्षप्रकारावेव विज्ञातव्यौ।

§ ३०३. [6]उपमानं तु नैयायिकमते [7]कश्चित्प्रेष्यः प्रभुणा प्रेषयाञ्चक्रे 'गवयमानय' इति स

---

अनुमानज्ञान साथ ही साथ हुए हैं। ऐसा न माना जाय तो लोकव्यवहारका अभाव हो जायेगा। अतः प्रत्यक्ष और परोक्षमें किसी प्रकारका ज्येष्ठ-कनिष्ठ भाव नहीं है।

§ ३०१. तथा शब्द पहले कहे गये जीवादि नवतत्त्वोंके समुच्चयार्थ है। सभी वाक्य निश्चयवाचक होते हैं अतः ये प्रत्यक्ष और परोक्ष दो ही प्रमाण हैं, तीसरा नहीं।

§ ३०२. जिन प्रतिवादियोंने प्रमाणकी इन दोसे अतिरिक्त संख्याएँ मानी हैं उनका विचार करके जो अर्थापत्ति उपमान आदिकी तरह प्रमाणकोटिमें आते हैं—प्रमाणभूत साबित होते हैं उनका इन्हीं प्रत्यक्ष और परोक्षमें अन्तर्भाव कर लेना चाहिए। जो विचार करनेपर भी मीमांसकके द्वारा माने गये अभाव प्रमाणकी तरह प्रमाण ही सिद्ध न हों उनके अन्तर्भाव या बहिर्भावकी चर्चा ही निरर्थक है, क्योंकि ऐसे ज्ञान तो अप्रमाण ही होंगे अतः उनकी उपेक्षा ही करनी चाहिए। परवादी, प्रत्यक्ष, अनुमान, आगम, उपमान, अर्थापत्ति, अभाव, सम्भव, ऐतिह्य, प्रातिभ, युक्ति और अनुपलब्धि आदि अनेक प्रमाण मानते हैं। इन प्रमाणोंमें-से अनुमान और आगम तो परोक्ष प्रमाणके ही भेद हैं।

§ ३०३. नैयायिक आदि उपमानको प्रमाण मानते हैं। नैयायिक उपमानका स्वरूप इस प्रकार बताते हैं—किसी राजाने अपने नौकरको गवय—रोज लानेके लिए भेजा। बेचारा नौकर

---

१. "अर्थसंवादकत्वे च समाने ज्येष्ठताऽस्य का। तदभावे तु नैव स्यात् प्रमाणमनुमादिकम्॥" —तत्त्वसं. का. ४६०। न्यायवि. टी. १, ३। अष्टश. अष्टस. पृ. ८०। प्रमाणमी. पृ. ७। २. परोक्षप्रमाणे आ., क.। ३. –साक्षात्करो–आ., क.। ४. प्रमाणभावमेव भ. २। ५. –नि परे यानि प्रो–भ. २। ६. "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्।"—न्यायसू. १।१।६। "प्रसिद्धसाधर्म्यादिति–प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा साधर्म्यं यस्य सोऽयं प्रसिद्धसाधर्म्यो गवयस्तस्मात् साध्यसाधनमिति समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः। किमुक्तं भवति। आगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यज्ञानमुपमानम्। यदा ह्यनेन श्रुतं भवति यथा गौरेवं गवय इति, प्रसिद्धे गोगवयसाधर्म्ये पुनर्गवा साधर्म्यं पश्यतोऽस्य भवति अयं गवय इति समाख्यासंबन्धप्रतिपत्तिः।"—न्यायवा. पृ. ५७। "प्रसिद्धसाधर्म्यात् इत्यत्र प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च। श्रुतिमयी यथा गौरेवं गवय इति। प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति। तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासंबन्धप्रतिपत्तिहेतुः।....तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम्।" —न्यायवा. ता. पृ. १९०। "अद्यतनास्तु व्याचक्षते–श्रुतातिदेशवाक्यस्य प्रमातुरसिद्धे पिण्डे प्रसिद्धपिण्डसारूप्यज्ञानमिन्द्रियजं संज्ञासंज्ञिसंबन्धप्रतिपत्तिफलमुपमानम् तद्धीन्द्रियजनितमपि धूमज्ञानमिव-तदगोचरप्रमेयप्रमितिसाधनात् प्रमाणान्तरम्। श्रुतातिदेशवाक्यो हि नागरकः कानने परिभ्रमन् गोसदृशं प्राणिनमवगच्छति, ततो वनेचरपुरुषकथितं यथा गौस्तथा गवय इति वचनमनुस्मरति, स्मृत्वा च प्रतिपद्यते अयं गवयशब्दवाच्य इति। तदेतत्संज्ञासंज्ञिसंबन्धज्ञानं तज्जन्यमित्युपमानफलमित्युच्यते।" —न्यायमं. पृ. १४२। न्यायकलि. पृ. ३। ७. कश्चित्प्रैष्यः भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

गवयशब्दवाच्यमर्थमजानानः कञ्चन वनेचरं पुरुषमप्राक्षीत् । 'कीदृग् गवयः' इति, स प्राह 'यादृग्गौस्तादृग्गवयः' इति । ततस्तस्य[1] प्रेष्यपुरुषस्यातिदेशवाक्यार्थस्मरणसहकारि गोसदृशगवयपिण्डज्ञानं 'अयं स गवयशब्दवाच्योऽर्थः' इति प्रतिपत्ति फलरूपामुत्पादयत्[2] प्रमाणमिति ।

§ ३०४. मीमांसकमते तु येन प्रतिपन्ना गौरुपलब्धो न गवयो न चातिदेशवाक्यं 'गौरिव गवयः' इति श्रुतं, तस्य विकटाटवीं पर्यटतो गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुन्मज्जति 'अनेन सदृशः स गौः' इति 'तस्य गोरनेन सादृश्यं' इति वा, तदुपमानम् ।

§ ३०५. तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् ।

प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ [ मी. श्लो. उप. श्लो. ३ ] ।

इति वचनादिति । एतच्च[3] परोक्षभेदे प्रत्यभिज्ञायामन्तर्भाव्यम् ॥

---

गवयको जानता ही न था । उसने डरके मारे राजासे गवयकी पहचान नहीं पूछी और वह चुपचाप जंगलकी ओर चला । रास्तेमें एक भीलसे पूछा कि भाई, गवय कैसा होता है ? भील बोला—'अरे तुम इतना ही नहीं जानते, जैसी गइया होती है ठीक वैसा ही गवय होता है ।' नौकर उस भीलके वचनोंको याद करता हुआ जंगलमें जा पहुँचता है और वहां भीलके वचनोंको याद करके सामने एक गायके समान अवयववाले प्राणीको देखते ही 'यही गवय है, इसे ही गवय शब्दसे पुकारते हैं' इस उपमितिको उत्पन्न करता है । इसमें 'गायके समान गवय होता है' इस अतिदेश वाक्यके स्मरणके साथ ही साथ गो सदृश गवयका ज्ञान भी कारण होता है अतः यही गो सदृश गवयका ज्ञान अर्थात् सादृश्य-ज्ञान उपमान प्रमाण कहलाता है । तात्पर्य यह कि सादृश्य-ज्ञान तो उपमान प्रमाण है तथा 'इसकी गवय-संज्ञा है' यह संज्ञा संज्ञि सम्बन्ध ज्ञान उपमितिरूप फल है ।

§ ३०४. मीमांसक उपमानका स्वरूप इस प्रकार कहते हैं—जिस व्यक्तिने गायको तो देखा है पर गवयको अभी तक नहीं देखा और न 'गायके समान गवय होता है' इस अतिदेश वाक्य—परिचय वाक्यको ही सुना है । वह विकट जंगलमें घूमते-घूमते अचानक पहले ही पहले गवयको देखता है । गवयको देखते ही उसे परोक्ष गौका स्मरण हो आता है और वह सोचता है कि 'गाय तो ठीक इसी गवयके समान होती है' 'उस गौमें इस गवयकी बड़ी सदृशता है' इस तरह परोक्ष गौमें जो सादृश्य ज्ञान उत्पन्न होता है उसे उपमान कहते हैं । कहा भी है—"गवयको देखकर जिस गायका स्मरण होता है वही गाय गवयकी समानतासे विशिष्ट होकर उपमान प्रमाणके द्वारा जानी जाती है । अथवा गायसे विशिष्ट गवयकी समानता उपमान प्रमाणका विषय होती है । गोविशिष्ट सादृश्य या सादृश्यविशिष्ट गौ दोनों ही उपमान प्रमाणके प्रमेय हैं ।"

§ ३०५. ये दोनों ही प्रकारके उपमान प्रत्यभिज्ञान नामक परोक्ष प्रमाणमें अन्तर्भूत हो जाते हैं । दोनों ही उपमानोंमें गवयका प्रत्यक्ष तथा अतिदेश वाक्य या गायका ही स्मरण कारण होता है और सादृश्यरूपसे उनका संकलन किया जाता है अतः प्रत्यक्ष और स्मरणसे उत्पन्न होनेवाले तथा सादृश्यको संकलित करनेवाले सादृश्य प्रत्यभिज्ञानमें ही इनका अन्तर्भाव हो जाता है । प्रत्यक्ष और स्मरणसे उत्पन्न होनेवाले एकत्व सादृश्य विलक्षणता आपेक्षिक आदि रूपसे जितने भी संकलन ज्ञान होते हैं वे सभी प्रत्यभिज्ञानरूप ही हैं ।

---

१. इति तस्य प्रैष्य–म. २ । २. –दयतः प्रमा–म. २ । ३. "ततो यः संकलनात्मकः प्रत्ययः स प्रत्यभिज्ञानमेव यथा 'स एवायम्' इति प्रत्ययः संकलनात्मकश्च 'अनेन सदृशो गौः' इति प्रत्यय इति ।" —न्यायकुमु. पृ. ४९४ । "आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव ।" —प्रश. भा., कन्द. पृ. २२० ।

§ ३०६. अर्थापत्तिरपि[1]—

"प्रमाणषट्कविज्ञातो यत्रार्थोऽनन्यथा भवन् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥" [ मी. श्लो. अर्था. श्लो. १ ]

इत्येवंलक्षणा अनुमानान्तर्गतैव,[2] अर्थापत्त्युत्थापकस्यार्थस्यान्यथानुपपत्तिनिश्चयेनैवादृष्टार्थपरिकल्पनात्, अन्यथानुपपत्तिनिश्चयस्यानुमानत्वात् ।

§ ३०७. अभावाख्यं तु प्रमाणं प्रमाणपञ्चकाभावः, तदन्यज्ञानम्, आत्मा वा ज्ञानविनिर्मुक्तः इति त्रिधाभिधीयते[3], तत्राद्यपक्षस्यासंभव एव; प्रसज्यवृत्त्या प्रमाणपञ्चकाभावस्य तुच्छत्वेनावस्तुत्वात्, अभावज्ञानजनकत्वायोगात् । द्वितीयपक्षे तु पर्युदासवृत्त्या[4] यत्तदन्यज्ञानं[5] तत्प्रत्यक्षमेव,

§ ३०६. प्रत्यक्षादि छहमें-से किसी एक भी प्रमाणसे जाने गये किसी भी पदार्थसे अविनाभावी परोक्ष पदार्थकी कल्पना करना अर्थापत्ति कही जाती है। यह अर्थापत्ति अनुमानस्वरूप ही है अतः इसका अनुमानमें ही अन्तर्भाव कर लेना चाहिए। जिस प्रकार अनुमानमें लिंगसे अविनाभावी परोक्ष साध्यका ज्ञान होता है उसी तरह अर्थापत्तिमें भी एक पदार्थसे अविनाभावी परोक्ष पदार्थकी ही कल्पना की जाती है। दोनोंमें अविनाभावके बलसे ही अन्य परोक्ष पदार्थका अटकल लगाया जाता है। जहाँ भी अविनाभावसे अन्य पदार्थका ज्ञान होता है वह सब अनुमानरूप ही तो है।

§ ३०७. अभाव प्रमाणके तीन रूप होते हैं—(१) जिस पदार्थका अभाव करना है उसकी सत्ताको साधनेवाले प्रत्यक्षादि पाँच प्रमाणोंका नहीं मिलना अर्थात् प्रमाणपंचकाभाव। (२) अथवा जिस आधारमें या जिस पदार्थके साथ उसे देखा था, केवल उसी आधार या पदार्थका परिज्ञान होना, जिसका अभाव करना है उससे भिन्न वस्तुका ज्ञान होना, जैसे घड़ेको भूतलमें या भूतलके साथ देखा था, अब यदि केवल भूतल ही दिखाई देता है तो घड़ेका अभाव हो जायगा। (३) अथवा आत्मामें ज्ञान ही उत्पन्न न हो। जब घड़ेका ज्ञान ही उत्पन्न न होगा तब उसका सद्भाव न होकर अभाव ही सिद्ध होगा। इनमें प्रथम पक्ष तो बन ही नहीं सकता, क्योंकि प्रमाण पंचकका अभाव प्रसज्यपक्षमें तुच्छरूप होनेसे जब अवस्तु रूप ही पड़ेगा तब वह अभावविषयक ज्ञान उत्पन्न नहीं कर सकता। जो वस्तुरूप होता है वही ज्ञान उत्पन्न कर सकता है।

१. "अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते—इत्यर्थकल्पना, यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ।"–शाबरभा. १।१।५ । प्रकरणपं. पृ. ११३ । शास्त्रदी. पृ. २९० । नयवि. पृ. १५२ । तन्त्ररह. पृ. १३ । प्रमाकरवि. पृ. ५३ । २. "शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात्"–प्रश. भा., कन्द. पृ. २१३ । "शब्द ऐतिह्यानर्थान्तरभावाद् अनुमानेऽर्थापत्तिसंभवानर्थान्तरभावाच्चाप्रतिषेधः ।"–न्यायसू. २।२।२ । "...प्रत्यक्षेणाप्रत्यक्षस्य संबद्धस्य प्रतिपत्तिरनुमानं तथा चार्थापत्तिसंभवाभावाः । वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद् ग्रहणमर्थापत्तिरनुमानमेव ।"—न्यायभा. २।२।२ । न्यायवा. पृ. २७६ । न्यायकी. पृ. ५७ । न्यायकुमु. ३।१९ । तत्त्वार्थश्लो. पृ. २१७ । प्रमेयक. पृ. १९३ । न्यायकुमु. पृ. ५१३ । सन्मति. टी. पृ. ५८५ । जैनतर्कवा. पृ. ७७ । स्या. र. पृ. २८३ । रत्नाकराव. २।१ । "दर्शनार्थादर्थापत्तिविरोध्येव श्रवणादनुमितानुमानम् ।" —प्रश. भा., कन्द. पृ. २२३ । ३. "प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते । सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥" —मी. श्लो. अभाव. श्लोक. ११ । ४. यत्तदन्यज्ज्ञा–आ., क. । ५. "अभावोऽप्यनुमानमेव, यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम्, एवमनुत्पन्नं कार्यं कारणसद्भावे लिङ्गम् ।" —प्रश. भा. पृ. ५७७ । तुलना—"प्रत्यादिनैवाभावस्य प्रतीतेः, तथा चाक्षव्यापारादिह भूतले घटो नास्तीति ज्ञानमपरोक्षमुत्पद्यमानं दृष्टम् ।"

Jain Education International For Private & Personal Use Only www.jainelibrary.org

[1]प्रत्यक्षेणैव घटादिविविक्तस्य भूतलादेर्ग्रहणात् । क्वचित्तु तदघटं भूतलमिति प्रत्यभिज्ञानेन, योऽग्नि-मान्न भवति नासौ धूमवानिति तर्केण, नात्र धूमोऽनग्नेरित्यनुमानेन[2], गृहे गर्गो नास्तीत्यागमेन [3]वाभावप्रतीतेः क्वाभावः प्रमाणं प्रवर्तताम् । तृतीयपक्षस्य पुनरसंभव एव, आत्मनो ज्ञानाभावे कथं[4] वस्त्वभाववेदकत्वं, वेदनस्य ज्ञानधर्मत्वात्, अभाववेदकत्वे वा ज्ञानविनिर्मुक्तत्वस्याभावात्, तन्नाभावः प्रमाणान्तरम् ।

§ ३०८. [5]संभवोऽपि समुदायेन समुदायिनोऽवगम इत्येवंलक्षणः संभवति खार्यां द्रोण

जो स्वयं गधेके सींगकी तरह अवस्तु है वह अभावज्ञान रूप कार्य कैसे कर सकता है ? द्वितीय पक्षमें तो पर्युदास पक्षके अनुसार घड़ेसे अन्य भूतल आदिका ज्ञान प्रत्यक्षसे ही हो रहा है, वह प्रत्यक्षरूप ही है । जब प्रत्यक्षसे ही घड़ेसे रहित शुद्ध भूतलका परिज्ञान हो जाता है तब उससे अतिरिक्त अभाव प्रमाणकी क्या आवश्यकता है । कहींपर 'यह वही भूतल आज घड़ेसे शून्य है जिसमें कल घड़ा रखा था' इस प्रकारका अभावज्ञान प्रत्यभिज्ञानसे हो जाता है । कहीं 'जो अग्निवाला नहीं है वह धूमवाला भी नहीं है' यह सार्वत्रिक अग्नि और धूमके अभावका ज्ञान तर्कसे होता है । कहीं 'यहाँ धूम नहीं है क्योंकि अग्नि नहीं पायी जाती' यह धूमके अभावका ज्ञान अनुमानसे हो रहा है । कहीं 'गर्ग घरमें नहीं है' इस प्रामाणिक वाक्यसे घरमें गर्गके अभाव-का ज्ञान आगम प्रमाणरूप ही है । इस तरह यथासम्भव प्रत्यक्षादि प्रमाणोंसे ही जब अभावका ज्ञान हो जाता है तब अभाव प्रमाणकी क्या आवश्यकता है ? वह कहाँ प्रवृत्ति करेगा ? अभावका ज्ञाननिर्मुक्त आत्मावाला प्रकार तो बन ही नहीं सकता; क्योंकि जब आत्मामें बिलकुल ही किसी प्रकारका ज्ञान नहीं रहेगा, तब वस्तुके अभावका परिज्ञान किससे होगा ? अभाव हो या सद्भाव, दोनोंका जानना तो ज्ञानका ही कार्य है । यदि आत्मा अभावको जान रहा है; तो फिर उसे ज्ञान निर्मुक्त—ज्ञान शून्य कैसे कह सकते हैं ? इस तरह अभाव प्रमाण स्वतन्त्र प्रमाण नहीं है, वह यथासम्भव इन्हीं प्रत्यक्षादिमें अन्तर्भूत है ।

§ ३०८. समुदायसे समुदायीका ज्ञान सम्भव प्रमाण है । बड़ी चीजसे अपने अवयवभूत किसी छोटी वस्तुका अनुमान सम्भव प्रमाण है । जैसे खारी ( = १८ द्रोण ) में द्रोणकी सम्भावना

—प्रश. व्यो. पृ. ५९२ । प्रश. कन्द. पृ. २२६ । "शब्दे ऐतिह्यानर्थान्तरभावात् अनुमानेऽर्थापत्ति-संभवाभावानर्थान्तरभावाच्चाप्रतिषेधः ।" —न्यायसू. २।२।६ । "अभावोऽप्यनुमानमेव"—न्यायवा. पृ. २७६ । "सत्यमभावः प्रमेयमभ्युपगम्यते प्रत्यक्षाद्यवसीयमानस्वरूपत्वान्न प्रमाणान्तरमात्म-परिच्छित्तये मृगयते । अदूरमेदिनिदेशवर्तिनस्तस्य चक्षुषा । परिच्छेदः परोक्षस्य क्वचिन्मानान्तरैरपि ।।" —न्यायमं. पृ. ५१ । "अन्यस्य घटादिविविक्तस्य भूतलस्योपलब्ध्या घटानुपलब्धिरिति प्रत्यक्ष-सिद्धानुपलब्धिः । एतदुक्तं भवति—घटग्राहकत्वस्य भूतलग्राहकत्वस्य चैकज्ञानसंसर्गित्वात् यदा भूतलग्राह-कमेव तज्ज्ञानं भवति तदा घटग्राहकत्वाभावं निश्चाययतीति प्रतीतिप्रत्यक्षसिद्धैव घटानुपलब्धिः ।" प्रमाणवा. स्ववृ. टी. १।६ । तत्त्वसं. पृ. ४७५ । तत्त्वार्थश्लो. पृ. १८२ । न्यायकुमु. पृ. ४१८ । स्या. र. पृ. ११० । न्यायाव. टी. टि. पृ. २१ ।

१. तत्प्रत्य–भ. २ । २. "अभावोऽप्यनुमानमेव, यथा उत्पन्नं कार्यं कारणसद्भावे लिङ्गम्, एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् ।"—प्रश. भा., कन्द. पृ. २२५ । "कश्चित्पुनरसंनिकृष्टदेशवृत्तिरनु-मेयोऽपि भवत्यभावः ।" —न्यायमं. पृ. ५४ । न्यायकुमु. पृ. ४६९ । ३. चाभाव–भ. २ । ४. वस्तुभा–भ. २ । ५. "संभवोऽप्यविनाभावित्वादनुमानमेव" —प्रश. भा., कन्द. पृ. २२५ । "संभवो नाम अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणं यथा—द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्, आढकस्य ग्रहणात् प्रस्थस्येति ।" —न्यायभा. २।२।१ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इत्यादिको नानुमानात्पृथक् तथाहि—खारी द्रोणवती, खारीत्वात्पूर्वोपलब्धखारीवत् ।

§ ३०९. [1]ऐतिह्यं त्वनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यम्, एवमूचुर्वृद्धा यथा 'इह वटे यक्षः प्रतिवसति' इति, तदप्रमाणं, अनिर्दिष्टवक्तृकत्वेन सांशयिकत्वात्, आप्तप्रवक्तृकत्वनिश्चये त्वागम इति ।

§ ३१०. यदपि [2]प्रातिभमक्षलिङ्गशब्दव्यापारानपेक्षमकस्मादेव 'अद्य मे महीपतिप्रसादो भविता' इत्याकारं स्पष्टतया वेदनमुदयते तदप्यनिन्द्रियनिबन्धनतया [3]मानसमिति—प्रत्यक्षकुक्षिनिक्षिप्तमेव ।

§ ३११. यत्पुनः प्रियाप्रियप्राप्तिप्रभृतिफलेन सार्धं गृहीतान्यथानुपपत्तिकात्मनः प्रसादोद्वेगादेर्लिङ्गादुदेति तत्पिपीलिकापटलोत्सर्पणोत्थज्ञानवदस्पष्टमनुमानमेव ।

§ ३१२. एवं युक्त्यनुपलब्ध्योरादिशब्दाद्विशिष्टोपलब्धिजनकस्य बोधाबोधरूपविशेषस्यागेन

---

है वह उसमें समा जाता ही है। यह भी अनुमानमें ही अन्तर्भूत है। इस खारीमें द्रोणकी पूरी-पूरी सम्भावना है क्योंकि वह खारी है जैसे कि पहले देखी गयी खारी।

§ ३०९. जिनके कहनेवालोंका कुछ भी पता न हो ऐसे परम्परासे चले आये प्रवाद—जनश्रुतियाँ ऐतिह्य हैं। जैसे—बूढ़े-पुराने लोग कहते थे कि 'इस वट वृक्षमें एक यक्ष रहता है'। यह ज्ञान प्रमाणभूत ही नहीं है, क्योंकि इसके वक्ताका पता न होनेसे यह निश्चित नहीं है सन्दिग्ध है, मुमकिन है कि उसमें यक्ष न रहता हो। जिन प्रवादोंके वक्ता तथा उनकी प्रामाणिकता निश्चित है वे तो आगमप्रमाणमें ही अन्तर्भूत हो जायेंगे।

§ ३१०. इन्द्रियाँ लिंग तथा शब्दके व्यापारके बिना ही अचानक 'आज मुझपर राजा प्रसन्न होंगे' इत्यादि प्रकारके स्पष्ट भानको प्रातिभ ज्ञान कहते हैं। यह ज्ञान मनोभावनासे उत्पन्न होनेके कारण मानस प्रत्यक्षमें अन्तर्भूत हो जाता है।

§ ३११. जिस प्रातिभ ज्ञानमें मनकी सहज प्रसन्नतासे या मनकी उद्विग्नता—उचाट रहनेसे इष्ट-अनिष्टका अस्पष्ट भान होता है वह तो अनुमान रूप ही है। जैसे चींटियोंको अण्डे लेकर जाते हुए देखकर वृष्टि होनेका अनुमान। तात्पर्य यह कि मनमें सहज उल्लास होनेसे पहले कई बार इष्टकी प्राप्ति हो चुकी थी इसी तरह मनके उचाट रहनेसे अनिष्ट भी हुआ था। आज यदि सहसा मनमें प्रसन्नता होती है और उससे हृदय अपने-आप कहे कि 'आज कुछ लाभ होगा' तो यह अस्पष्ट ज्ञान एक प्रकारका अनुमान ही है। क्योंकि मनकी प्रसन्नता आदिका इष्ट प्राप्ति आदिसे अविनाभाव पहले ही ग्रहण किया जा चुका है और अविनाभावजन्य ज्ञान तो अनुमानरूप ही होता है।

§ ३१२. इसी तरह युक्ति और अनुपलब्धि इन्हीं प्रमाणोंमें अन्तर्भाव कर लेना चाहिए। युक्ति यदि अविनाभाव रखती है तो अनुमानमें अन्तर्भूत होगी। यदि अविनाभाव नहीं है तो प्रमाण

---

१. "ऐतिह्यमर्थापत्तिः संभवोऽभाव इत्येतान्यपि प्रमाणानि तानि कस्मान्नोक्तानि। 'इति होचुः' इत्यनिर्दिष्टप्रवक्तृकं—प्रवादपारंपर्यम् ऐतिह्यम्।" —न्यायभा. २।२।१। "तथैवैतिह्यमप्यवितथमाप्तोपदेश एवेति।" —प्रश. भा., कन्द. पृ. २३०। २. "आम्नायविधातृणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद्—धर्मविशेषाच्च यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते तदार्षमित्याचक्षते। तत्तु—प्रस्तारेण देवर्षीणाम्। कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति श्वो मे भ्राता गन्तेति हृदयं मे कथयतीति॥" —प्रश. भा. पृ. ६२१। जैनतर्कभा. पृ. ७७। ३. स्मृत्यूहादिकमित्येके प्रातिभं च तथापरे। स्वप्नविज्ञानमित्यन्ये स्वसंवेदनमेव नः॥" —न्यायावता. श्लो. १९।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सामान्यतो लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्"[1] [ याज्ञव. स्मृ. २।२२ ] इत्युक्तस्य प्रमाणस्यान्येषां च केषांचित्प्रमाणान्तरत्वेन परपरिकल्पितानां यथालक्षणं प्रत्यक्षपरोक्षयोरन्तर्भावो निराकरणं च विधेयम् । तदेवं न प्रत्यक्षपरोक्षलक्षणद्वैविध्यातिक्रमं शक्रोऽपि कर्तुं क्षमः ।

अथ तयोर्लक्षणाद्यभिधीयते – स्वपरव्यवसायि ज्ञानं स्पष्टं प्रत्यक्षम्[2] । तद्द्विप्रकारं, सांव्यवहारिकं पारमार्थिकं च ।

§ ३१३. तत्र सांव्यवहारिकं[3] बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकमस्मदादिप्रत्यक्षम् । पारमार्थिकं[4] त्वात्मसंनिधिमात्रापेक्षमवध्यादिप्रत्यक्षम् ।

§ ३१४. सांव्यवहारिकं द्वेधा, चक्षुरादीन्द्रियनिमित्तं मनोनिमित्तं च । तद्द्विविधमपि चतुर्धा, अवग्रहेहावायधारणाभेदात्[5] । तत्र विषयविषयिसंनिपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जा-[6]

---

रूप ही नहीं है । अनुपलब्धि तो अभाव प्रमाण रूप है अतः उसका यथासम्भव प्रत्यक्षादिमें अन्तर्भाव हो जायगा । आदि शब्दसे प्रतिवादियों द्वारा माने गये अन्य प्रमाणोंका भी इन्हींमें अन्तर्भाव कर लेना चाहिए । जैसे वृद्ध नैयायिक विशिष्ट उपलब्धिको उत्पन्न करनेवाले ज्ञानात्मक या अज्ञानात्मक सभी पदार्थोंको साधारण रूपसे प्रमाण मान लेते हैं । उन्होंने कहा है कि "लिखित स्टाम्प आदि, साक्षी—गवाही तथा भुक्ति–अनुभव सभी प्रमाण हैं" तथा अन्य वादियों द्वारा भी प्रमाणान्तर माने जाते हैं उन सबके लक्षणोंको विचार करनेपर यदि वे स्वपर व्यवसायी ज्ञानरूप हों तो उन्हें प्रमाण मानकर इन्हीं प्रत्यक्ष और परोक्षमें शामिल कर लेना चाहिए । यदि वे प्रमाणहीन हों तो उनका निराकरण करना चाहिए । इस तरह प्रमाणकी प्रत्यक्ष और परोक्ष रूपसे कही गयी दो संख्याका उल्लंघन इन्द्र भी नहीं कर सकता, वह सर्वतः अबाधित है ।

§ ३१३. अब प्रत्यक्ष और परोक्षके लक्षण आदि कहते हैं । स्व और परके निश्चय करनेवाले स्पष्ट—परनिरपेक्ष ज्ञानको प्रत्यक्ष कहते हैं । प्रत्यक्ष दो प्रकारका है—१ सांव्यवहारिक, २. पारमार्थिक । बाह्य चक्षुरादि तथा प्रकाश आदि सामग्रीसे उत्पन्न होनेवाला हम लोगोंका इन्द्रिय प्रत्यक्ष तथा मानस प्रत्यक्ष सांव्यवहारिक प्रत्यक्ष है । वस्तुतः यह इन्द्रियादिकके परतन्त्र होनेसे परोक्ष है—अपारमार्थिक है परन्तु लोकव्यवहारमें इसकी प्रत्यक्षरूपमें प्रसिद्धि होनेसे इसे सांव्यवहारिक प्रत्यक्ष कहते हैं । पारमार्थिक प्रत्यक्ष तो आत्ममात्रसे ही उत्पन्न होता है । यह अवधिज्ञान, मनःपर्ययज्ञान तथा केवलज्ञानके भेदसे तीन प्रकारका है ।

§ ३१४. सांव्यवहारिक प्रत्यक्ष दो प्रकारका है—एक तो चक्षुरादि इन्द्रियोंसे उत्पन्न होनेवाला इन्द्रिय प्रत्यक्ष और दूसरा मात्र मनसे उत्पन्न होनेवाला मानस प्रत्यक्ष । ये दोनों ही प्रत्यक्ष अवग्रह, ईहा, अवाय और धारणाके भेदसे चार प्रकारके होते हैं । इन्द्रिय और पदार्थके योग्य देश स्थितिरूप सम्बन्ध होनेपर सत्तामात्रका आलोचन करनेवाला दर्शन होता है । इस

---

१. – तमित्यस्य म. २ । २ "प्रत्यक्षं विशदं ज्ञानं मुख्यसंव्यवहारतः ।"—लघी. श्लो. ३ । ३. "इन्द्रियमणोभवं जं तं संववहारपच्चक्खम् ॥९५॥"—विशेषा. भा. । 'तत्र सांव्यवहारिकम् इन्द्रियानिन्द्रियप्रत्यक्षम् ।"—लघी. स्ववृ. श्लो. ४ । प्रमाणप. पृ. ६८ । सन्मति. टी. पृ. ५५२ । जैनतर्कवा. पृ. १०० । परीक्षामु. २।५। प्रमाणमी. १।१।१ । न्यायदी. पृ. ९ । ४. "अतीन्द्रियप्रत्यक्षं व्यवसायात्मकं स्फुटमवितथमतीन्द्रियमव्यवधानं लोकोत्तरमात्मार्थविषयम् ।"—लघी. स्ववृ. श्लो. ६१ । "सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम् ।" परीक्षामु. २।११ । "पारमार्थिकं पुनरुत्पत्तौ आत्ममात्रापेक्षम् ।"–प्रमा. नतत्त्वा. २।१८। प्रमाणमी. १।१।१५ । न्यायदी. पृ. १० । ५. "अवग्रहेहावायधारणाः ।" तत्त्वार्थसू. १।१५। ६. नाज्जातमवान्तर–म. १, २, प. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः[1]। अस्यार्थः—विषयो द्रव्यपर्यात्मकोऽर्थो, विषयी चक्षुरादिः, तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो निपातो योग्यदेशाद्यवस्थानं तस्मादनन्तरं समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं दर्शनं[2] निराकारो बोधस्तस्माज्जातमाद्यं सत्तासामान्याद्यवान्तरैर्मनुष्यत्वादिभिर्विशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रहः। पुनरवगृहीतविषयसंशयानन्तरं तद्विशेषाकाङ्क्षणमीहा[3]। तदनन्तरं तदीहितविशेषनिर्णयोऽवायः[4]। अवेतविषयस्मृतिहेतुस्तदनन्तरं धारणा।[5]

---

दर्शनसे उत्पन्न होनेवाला घटत्व आदि विशेष सत्तासे युक्त घट आदि पदार्थोंको विषय करनेवाले प्रथम ज्ञानको अवग्रह कहते हैं। विषय–द्रव्यपर्यायात्मक पदार्थ, विषयी चक्षु आदि इन्द्रियां, इनके समीचीन विपर्यय संशय आदिको उत्पन्न नहीं करनेवाले निपातसे योग्यदेश स्थिति रूप सम्बन्धसे सत्तामात्रका आलोचन करनेवाला निराकार ज्ञानरूपी दर्शन उत्पन्न होता है। इस सामान्य सत्ताका भान करनेवाले दर्शनके बाद ही उससे मनुष्यत्व आदि अवान्तर-विशेष सामान्यसे युक्त वस्तुको 'यह मनुष्य है' इत्यादि रूपसे जाननेवाला जो सबसे पहला ज्ञान उत्पन्न होता है उसे अवग्रह कहते हैं। अवग्रहके द्वारा जाने गये पदार्थमें उत्पन्न होनेवाले संशयके बाद विशेष निर्णयके लिए होनेवाला 'यह ऐसा होना चाहिए' ऐसा भवितव्यता प्रत्यय ईहा कहा जाता है। जैसे सामान्यरूपसे पुरुषको जान लेनेके बाद 'यह दक्षिणी है या उत्तरी' यह संशय होता है, इस संशयके बाद होनेवाले 'इसे दक्षिणी होना चाहिए' इस सम्भावना प्रत्ययको ईहा कहते हैं। ईहाके द्वारा सम्भावित विशेषका यथार्थ निर्णय अवाय कहलाता है। जिस पदार्थका पक्का निश्चय हो गया है उसका कालान्तरमें स्मरण करानेवाले कारणको धारणा कहते हैं। इतना दृढ़ निश्चय होना जिससे उसकी बहुत दिन तक याद बनी रहे।

---

१. "तत्र अव्यक्तं यथास्वमिन्द्रियैः विषयाणामालोचनावधारणमवग्रहः।" तत्त्वार्थाधि. भा. १।१५। "विषयविषयिसंनिपातसमयानन्तरमाद्यग्रहणमवग्रहः। विषयविषयिसंनिपाते सति दर्शनं भवति, तदनन्तरमर्थस्य ग्रहणमवग्रहः।"–सर्वार्थसि. १।१५। लघी. श्लो. ५। राजवा. १।१५। धवलाटी. सत्प्ररू.। प्रमाणप. पृ. ६८। सन्मति. टी. पृ. ५५२। प्रमा. नय. २।७। न्यायदी. पृ. १०। २. दर्शनाज्जातम् म. १, २, प. १, २। ३. "अवगृहीतेऽर्थे विषयार्थैकदेशाच्छेषानुगमनं निश्चयविशेषजिज्ञासा चेष्टा ईहा।"–तत्त्वार्थाधि. १।१५। "अवग्रहगृहीतेऽर्थे तद्विशेषाकाङ्क्षणमीहा।"–सर्वार्थ. १।१५। लघी. श्लो. ५। राजवा. १।१५। धवलाटी. सत्प्ररू.। तत्त्वार्थश्लो. पृ. २२०। प्रमाणप. पृ. ६८। सन्मति. टी. पृ. ५५३। प्रमा. नय. २।८। प्रमाणमी. १।१।२७। न्यायदी. पृ. ११। जैनतर्कभा. पृ. ५। ४. "अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाध्यवसायापनोदोपायः।"—तत्त्वार्थाधि. भा. १।१५। विशेषनिर्ज्ञानाद्याथात्म्यावगमनमवायः।"–सर्वार्थसि. १।१५। लघी. श्लो. ५। राजवा. १।१५। धवलाटी. सत्प्ररू.। तत्त्वार्थश्लो. पृ. २२०। प्रमाणप. पृ. ६८। सन्मति. टी. पृ. ५५३। प्रमा. नय. २।९। प्रमाणमी. १।१।२८। न्यायदी. पृ. ११। जैनतर्कभा. पृ. ५। ५. "धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च धारणा प्रतिपत्तिः अवधारणमवस्थानं निश्चयोऽवगमः अवबोधः इत्यनर्थान्तरम्।"–तत्त्वार्थाधि. भा. १।१५। "अथैतस्य कालान्तरेऽविस्मरणकारणं धारणा।" –सर्वार्थसि. १।१५। लघी. श्लो. ६। राजवा. १।१५। धवलाटी. सत्प्ररू.। प्रमाणप. पृ. ६८। सन्मति. टी. पृ. ५५३। प्रमा. नय. २।१०। प्रमाणमी. १।१।२९। न्यायदी. पृ. ११। जैनतर्कभा. पृ. ५।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३१५. अत्र च पूर्वपूर्वस्य[1] प्रमाणतोत्तरोत्तरस्य च फलतेत्येकस्यापि मतिज्ञानस्य चातुर्विध्यं कथंचित् प्रमाणफलभेदश्चोपपन्नः। तथा यद्यपि क्रमभाविनामवग्रहादीनां हेतुफलतया व्यवस्थितानां पर्यायार्थादभेदः तथाप्येकजीवतादात्म्येन द्रव्यार्थादिशावमीषामैक्यं कथंचिदविरुद्धम्, अन्यथा हेतुफलभावाभावप्रसक्तिर्भवेदिति प्रत्येयम् ।

§ ३१६. धारणास्वरूपा[2] च मतिरविसंवादस्वरूपस्मृतिफलस्य हेतुत्वात्प्रमाणं, स्मृतिरपि तथाभूतप्रत्यवमर्शस्वभावसंज्ञाफलजनकत्वात्, संज्ञापि तथाभूततर्कस्वभावचिन्ताफलजनकत्वात्, चिन्ताप्यनुमानलक्षणाभिनिबोधफलजनकत्वात्, सोऽपि हानादिबुद्धिजनकत्वात्। तदुक्तम्—"मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ।" [ त. सू. १।१३ ] अनर्थान्तरमिति—कथंचिदेकविषयं प्राक्शब्दयोजनान्मतिज्ञानमेतत्। शेषमनेकप्रभेदं शब्दयोजनादुपजायमानमविशदं[3]

---

§ ३१५. इन अवग्रहादि ज्ञानोंमें पहले-पहलेके ज्ञान उत्तरोत्तर ज्ञानोंमें कारण होनेसे प्रमाण रूप हैं तथा आगे-आगेके ज्ञान कार्य होनेसे फलरूप हैं। अवग्रह प्रमाण है तो ईहा फल, ईहाकी प्रमाणतामें वस्तुतः यह एक ही मतिज्ञान है परन्तु अवाय फल होता है। पर्याय भेदसे उसके ही ये चार रूप हो जाते हैं और इनमें परस्पर प्रमाण और फलरूपसे कथंचिद् भेद भी हो जाता है। इस तरह यद्यपि क्रमसे उत्पन्न होनेवाले इन अवग्रह आदि चारों ज्ञानोंमें, जो कि क्रमशः कारण कार्य रूप हैं, पर्यायार्थिक अवस्थाओंके भेदसे भेद है परन्तु ये सभी ज्ञान एक आत्मासे तादात्म्य अभेद रखते हैं अतः उस आधारभूत आत्मद्रव्यकी अपेक्षासे ये सभी ज्ञान कथंचिद् अभिन्न भी हैं। यदि इनमें आत्मद्रव्यकी अपेक्षा कथंचिदेकता तथा अवस्था भेदसे अनेकता न हो तो इनमें परस्पर उपादान-उपादेयभाव या कार्यकारणभाव नहीं बन सकेगा। कार्य और कारण ये दो अवस्था भेद होनेपर ही हो सकते हैं तथा उपादान-उपादेय भावके लिए एक द्रव्यात्मक होना आवश्यक ही है।

§ ३१६. धारणा नामका मतिज्ञान अविसंवादी स्मरणमें कारण होता है अतः वह प्रमाण है तथा स्मरण फल है। स्मरणसे 'यह वही है' इत्यादि संकलन रूप संज्ञा-प्रत्यभिज्ञान उत्पन्न होता है अतः प्रत्यभिज्ञान फल है और स्मरण प्रमाण। प्रत्यभिज्ञान भी अविनाभावको ग्रहण करनेवाले तर्क रूप चिन्ताको उत्पन्न करता है अतः वह प्रमाण है तथा तर्क फल। तर्कसे अविनाभावका परिज्ञान कर अभिनिबोध–अनुमान ज्ञान उत्पन्न होता है अतः तर्क प्रमाण है तथा अनुमान फल। अनुमानसे हेयोपादेय बुद्धि रूप फल उत्पन्न होता है अतः अनुमान भी प्रमाणरूप है। कहा भी है—"मति, स्मृति, संज्ञा, चिन्ता और अभिनिबोध ये अनर्थान्तर हैं। कथंचिद् अभिन्न हैं" अनर्थान्तर–कथंचिद् एकविषयक। अकलंकदेव इस सूत्रका निम्न तात्पर्य बताते हैं—जबतक इन ज्ञानोंका शब्द रूपसे उल्लेख नहीं किया जाता, इनमें शब्द योजना नहीं होती तबतक ये सब मतिज्ञान रूप हैं। शब्द योजनासे उत्पन्न होनेवाला अनेक प्रकारका अविशद ज्ञान

---

१. "पूर्वपूर्वप्रमाणत्वं फलं स्यादुत्तरोत्तरम् । प्रमाणफलयोः क्रमभेदेऽपि तादात्म्यमभिन्नविषयत्वं च प्रत्येयम् ।"—लघी. स्ववृ. श्लो. ७ । "पूर्वपूर्वप्रमाणमुत्तरोत्तरं फलमिति क्रमः ।"—प्रमाणवार्तिकालं. ३।३१० । "तथा पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलमिति ।"—न्यायवि. टी. टि. पृ. ४० । सन्मति. टी. पृ. ५५३ । "अवग्रहादीनां क्रमोपजनधर्माणां पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलम् ।"—प्रमाणमी. १।१।३९ । २. "अविसंवादस्मृतेः फलस्य हेतुत्वात् प्रमाणं धारणा । स्मृतिः संज्ञायाः प्रत्यवमर्शस्य । संज्ञा चिन्तायाः तर्कस्य । चिन्ता अभिनिबोधस्य अनुमानादेः ।"—लघी. स्ववृ. श्लो. ११ । सन्मति. टी. ५५३ । ३. –दं श्रुत–भ. २ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

ज्ञानं श्रुतमिति केचित्[1]। [2]सैद्धान्तिकास्त्ववग्रहेहावायधारणाप्रभेदरूपाया मतेर्वाचकाः पर्यायशब्दा मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्येते शब्दा इति प्रतिपन्नाः। स्मृतिसंज्ञाचिन्तादीनां च कथंचिद्गृहीतग्राहित्वेऽप्यविसंवादकत्वादनुमानवत्प्रमाणताभ्युपेया, अन्यथा व्याप्तिग्राहकप्रमाणेन[3] गृहीतविषयत्वेनानुमानस्याप्रमाणताप्रसक्तेः। [4]अत्र च यच्छब्दसंयोजनात्प्राक् स्मृत्यादिकमविसंवादि व्यवहारनिर्वर्तनक्षमं वर्तते तन्मतिः शब्दसंयोजनात्प्रादुर्भूतं[5] तु सर्वं श्रुतमिति विभागः। स्मृतिसंज्ञादीनां च स्मरणतर्कानुमानरूपाणां परोक्षभेदानामपि यदिह प्रत्यक्षाधिकारे भणनं तन्मतिश्रुतविभागज्ञानाय प्रसङ्गेनेति विज्ञेयम्।

§ ३१७. अथ परोक्षम्—अविशदमविसंवादि ज्ञानं परोक्षम्[7]। स्मरणप्रत्यभिज्ञानतर्कानु·

श्रुत है। तात्पर्य यह कि जबतक मति-स्मृति आदिमें शब्द योजना नहीं होती तबतक वे मतिज्ञान रूप हैं तथा शब्दयोजना होनेपर ये, तथा अन्य भी शब्द योजनासे उत्पन्न होनेवाले ज्ञान श्रुतज्ञान हैं। परन्तु सैद्धान्तिक तो इन मति, स्मृति, संज्ञा, चिन्ता और अभिनिबोधको अवग्रह, ईहा, अवाय और धारणा रूपसे चतुर्भेदवाले मतिज्ञानके पर्यायवाची शब्द ही मानते हैं। वे इनमें शब्दयोजनाके द्वारा मति और श्रुत रूपसे भेद नहीं करते। स्मृति, प्रत्यभिज्ञान और तर्क आदि यद्यपि पूर्व प्रत्यक्ष आदिके द्वारा जाने गये पदार्थोंको ही जानते हैं फिर भी कुछ विशेष अंशका परिच्छेद करनेके कारण तथा अविसंवादी होनेसे अनुमानकी तरह ही प्रमाण हैं। जिस प्रकार व्याप्तिज्ञान तर्कके द्वारा जाने गये सामान्य अग्नि और धूमको ही कुछ विशेष रूपसे जाननेवाला अनुमान कथंचिद् अगृहीतग्राही मानकर प्रमाण समझा जाता है उसी तरह स्मृति आदि ज्ञान भी प्रमाण ही हैं। अन्यथा अनुमान भी प्रमाण नहीं हो सकेगा। इनमें अविसंवादी तथा लोकव्यवहारके चलानेमें समर्थ स्मृति आदि ज्ञान शब्द योजनासे पहले मतिज्ञान रूप हैं तथा शब्द योजनासे उत्पन्न होनेवाला हर एक ज्ञान श्रुत रूप है। ये स्मृति आदि भी शब्द योजनाके अनन्तर श्रुत रूप हो जाते हैं। इस प्रत्यक्षके प्रकरणमें स्मृति-स्मरण, संज्ञा—प्रत्यभिज्ञान, चिन्ता—तर्क, अभिनिबोध—अनुमान आदि परोक्षके प्रकारोंका निरूपण इसलिए किया है जिससे इनमें मति और श्रुतका स्पष्ट विभाग मालूम हो जाय।

§ ३१७. अस्पष्ट अविसंवादि ज्ञानको परोक्ष कहते हैं। परोक्षके पांच भेद हैं—१ स्मृति,

१. "ज्ञानमाद्यं मतिः संज्ञा चिन्ता वा (चा) भिनिबोधकम्॥ प्राङ्नामयोजनाच्छेषं श्रुतं शब्दानुयोजनात्।....प्राक् शब्दयोजनात् शेषं श्रुतज्ञानमनेकप्रभेदम्॥"—लघी. स्ववृ. श्लो. १०। २. "आभिनिबोधिकज्ञानस्यैव त्रिकालविषयस्यैते पर्याया नार्थान्तरतेति मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यस्यानर्थान्तरमेतदिति।" —तत्त्वार्थाधि. भा. टी. १।१३। ३. –प्रमाणगृहीतवि–म. २। ४. "अत्र च यत् शब्दसंयोजनात् प्राक् स्मृत्यादिकमविसंवादिव्यवहारनिर्वर्तनक्षमं प्रवर्तते तन्मतिः, शब्दसंयोजनात् प्रादुर्भूतं तु सर्वं श्रुतमिति विभागः।" —सन्मति. टी. पृ. ५५३। ५. –तं सर्वं म. १, २. प. १, २। ६. –कारेण भणनं म. २। ७. "जं परदो विण्णाणं तं तु परोक्खत्ति भणिदमत्थेसु॥५९॥" प्रव. सार पृ. ७५। "पराणीन्द्रियाणि मनश्च प्रकाशोपदेशादि च बाह्यनिमित्तं प्रतीत्य तदावरणकर्मक्षयोपशमापेक्षस्य आत्मन उत्पद्यमानं मतिश्रुतं परोक्षम् इत्याख्यायते।" —सर्वार्थसि. पृ. ५९। "अक्खस्स पोग्गलकया जं दव्विंदियमणा परा तेणं। तेहिं जो जं णाणं परोक्खमिह तमणुमाणं व॥९०॥" —विशेषाव. भा.। "परोक्षं शेषविज्ञानम्।" —लघी. श्लो. ३। "अक्षाद् आत्मनः परावृत्तं परोक्षम्, ततः परैः इन्द्रियादिभिः ऊक्ष्यते सिञ्च्यते अभिवर्ध्यत इति परोक्षम्।" —तत्त्वार्थश्लो. पृ. १८१। "परोक्षमविशद् ज्ञानात्मकम्।" —प्रमाणप. पृ. ६९। सन्मति. टी. पृ. ५९५। "परोक्षमितरत्।" —परीक्षामु. ३।१। न्यायाव. श्लो. ४। प्रमाणनय. ३।१। प्रमाणमी. ३।१। पञ्चाध्या. श्लो. ६९६।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

मानागमभेदतस्तत्पञ्चधा[1]। संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं[2] वेदनं स्मरणम्[3], यथा तत्तीर्थंकरबिम्बमिति। अनुभवस्मरणकारणकं सङ्कलनं प्रत्यभिज्ञानम्, [4]तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि, यथा स एवायं देवदत्तः गोसदृशो गवयः गोविलक्षणो महिषः इदमस्माद्दीर्घं ह्रस्वमणीयो महीयो दवीयो वा दूरादयं तीव्रो वह्निः सुरभीदं चन्दनमित्यादि। अत्रादिशब्दात् स एव वह्निरनुमीयते स एवानेनाप्यर्थः कथ्यत इत्यादि स्मरणसचिवानुमानागमादिजन्यं च संकलनमुदाहार्यम्। उपलम्भानुपलम्भसंभवं [5]त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनं तर्कः[6], यथाग्नौ सत्येव धूमो भवति तदभावे न भवत्येवेति।

२ प्रत्यभिज्ञान, ३ तर्क, ४ अनुमान, ५ आगम। पहले देखे गये पदार्थके संस्कारके प्रबोधसे उत्पन्न होनेवाला, अनुभूत पदार्थको विषय करनेवाला, 'वह था' इत्यादि रूपमें 'वह' शब्दसे जिसका निरूपण होता है उस अविसंवादी ज्ञानको स्मरण कहते हैं। जैसे तीर्थंकरकी वह प्रतिमा कितनी मनोज्ञ थी। अनुभव और स्मरणसे उत्पन्न होनेवाले संकलन-ज्ञान पूर्व और उत्तरमें एकत्व सादृश्य आदि रूपसे सम्बन्ध, या उन दोनोंके जोड़को प्रत्यभिज्ञान कहते हैं। यह प्रत्यभिज्ञान अनेक प्रकारका है। एकत्व प्रत्यभिज्ञान–यह वही है, जैसे यह वही देवदत्त है। सादृश्य प्रत्यभिज्ञान–यह उसके समान है, जैसे गायके सदृश गवय है। वैलक्षण्य प्रत्यभिज्ञान–यह उससे विलक्षण है, जैसे भैंस गायसे विलक्षण है। प्रतियोगि प्रत्यभिज्ञान–यह उसकी अपेक्षा दूर-समीप, छोटा-बड़ा इत्यादि रूपसे होता है। जैसे यह इससे लम्बा है, यह छोटा है, कम वजनका है, बहुत दूर है। अग्नि तेज है, चन्दन सुगन्धि है। आदि शब्दसे स्मरण और अनुमानके द्वारा तथा स्मरण और आगमसे होनेवाले संकलनका भी प्रत्यभिज्ञानमें समावेश कर लेना चाहिए। जैसे 'यह उसी अग्निका अनुमान किया जा रहा है जिसे पहले देखा था' 'यह शब्द भी उसी अर्थको कह रहा है'। उपलम्भ और अनुपलम्भसे उत्पन्न होनेवाले त्रिकाल त्रिलोकवर्ती सभी साध्य-साधनोंके सम्बन्धको विषय करनेवाला ज्ञान तर्क कहलाता है। 'साध्यके होनेपर ही साधन होता है' इस साध्य और साधनके सद्भावरूप अन्वयको जाननेवाला ज्ञान उपलम्भ कहलाता है। 'साध्यके अभावमें साधन नहीं होता' इस साध्य और साधनके अभावरूप व्यतिरेकको जाननेवाला ज्ञान व्यतिरेक कहलाता है। 'यह इसके होनेपर ही होता है, इसके अभावमें तो कभी भी नहीं होता' यह तर्क प्रमाणका आकार है। जैसे अग्निके होनेपर ही धूम होता है, अग्निके अभावमें तो कभी भी नहीं होता। इस तरह साधारण रूपसे संसारके समस्त अग्नि और धूमोंके अविनाभाव सम्बन्धको तर्क प्रमाण जान लेता है।

१. "प्रत्यक्षादिनिमित्तं स्मृतिप्रत्यभिज्ञानतर्कानुमानागमं भेदम्।" —परीक्षामु. ३।२। लघी. स्ववृ. श्लो. १०। प्रमाणनय. ३।१। प्रमाणमी. १।२।३। २. –कारवेदनं म. २। ३. संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः। स देवदत्तो तथा।" —परीक्षामु. ३।३–४। "तत्र संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणमिति। तत्तीर्थंकरबिम्बमिति यथेति।" —प्रमाणनय.३।३–४। प्रमाणप. पृ. ६९। प्रमाणमी. १।२।३। ४. "दर्शनस्मरणकारणकं संकलनं प्रत्यभिज्ञानम्। तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादि। यथा स एवायं देवदत्तः। गोसदृशो गवयः। गोविलक्षणो महिषः। इदमस्माद् दूरम्। वृक्षोऽयमित्यादि।" —परीक्षामु. ३।५–१०। प्रमाणप. पृ. ६९। प्रमाणनय. ३।४–६। प्रमाणमी. १।२।४। ५. –कालकलित–आ., क.। ६. "उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः। इदमस्मिन्सत्येव भवत्यसति न भवत्येवेति च। यथाग्नावेव धूमस्तदभावे न भवत्येवेति च।" —परीक्षामु. ३।११–१३। "उपलम्भानुपलम्भसंभवं त्रिकालीकलितसाध्यसाधनसंबन्धाद्यालम्बनमिदमस्मिन्सत्येव भवतीत्याकारं संवेदनमूहापरनामा तर्क इति।" —प्रमाणनय. ३।७। प्रमाणसं. का. १२। प्रमाणप. पृ. ७०। प्रमाणमी. १।२।५।

Jain Education International	For Private & Personal Use Only	www.jainelibrary.org

§ ३१८. अनुमानं द्विधा, स्वार्थं परार्थं च। हेतुग्रहणसंबन्धस्मरणहेतुकं साध्यविज्ञानं स्वार्थम्[1]। निश्चितान्यथानुपपत्त्येकलक्षणो हेतुः[2]। इष्टमबाधितमसिद्धं साध्यम्[3]। साध्यविशिष्टः प्रसिद्धो धर्मो पक्षः[4]। पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात्[5]। मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि। दृष्टान्तो द्विधा, अन्वयव्यतिरेकभेदात्[7]। साधनसत्तायां यत्रावश्यं साध्यसत्ता प्रदर्श्यते सोऽन्वयदृष्टान्तः। साध्याभावेन साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः[9]। हेतोरुपसंहार उपनयः[10]। प्रतिज्ञायास्तूपसंहारो निगमनम्[11]। एते पक्षादयः पञ्चावयवाः

§ ३१८. साधनसे साध्यके ज्ञानको अनुमान कहते हैं। अनुमान दो प्रकारका है— १ स्वार्थानुमान, २ परार्थानुमान। हेतुका ग्रहण तथा अविनाभावके स्मरणसे होनेवाला साध्यका ज्ञान स्वार्थानुमान कहलाता है। जिसकी साध्यके साथ अन्यथानुपपत्ति–(अन्यथा साध्यके अभावमें अनुपपत्ति नहीं होना अर्थात् अविनाभाव) सुनिश्चित हो उस एक मात्र अविनाभाव लक्षणवाले पदार्थको हेतु कहते हैं। जिसे सिद्ध करना वादोको इष्ट है, जो प्रत्यक्षादि प्रमाणोंसे बाधित नहीं होता तथा जो अभी तक प्रतिवादीको असिद्ध है उसे साध्य कहते हैं। साध्यसे युक्त धर्मी पक्ष कहलाता है। धर्मी प्रसिद्ध होता है। पक्ष और हेतुके कथनको सुनकर श्रोताको उत्पन्न होनेवाला साध्यका ज्ञान परार्थानुमान कहलाता है। यद्यपि मुख्यरूपसे तो परार्थानुमान ज्ञानात्मक ही होता है फिर भी जिन वचनोंसे वह ज्ञान उत्पन्न होता है उन वचनोंको भी कार्यभूत ज्ञानका कारणभूत वचनोंमें उपचार करके परार्थानुमान कहते हैं। अनुमानके प्रतिज्ञा और हेतु ये दो ही अवयव

१. "तत्र हेतुग्रहणसंबन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थमिति।" —प्रमाणनय. ३।१०। २. "अन्यथानुपपन्नत्वं हेतोर्लक्षणमीरितम्।" —न्यायाव. श्लो. २२। "साधनं प्रकृताभावेऽनुपपन्नम्।" —प्रमाणसं. पृ. १०२। न्यायवि. श्लो. २६९। तत्त्वार्थश्लो. पृ. २१४। परीक्षामु. ३।१५। "तथा चाभ्यधायि कुमारनन्दिभट्टारकैः—अन्यथानुपपत्त्येकलक्षणं लिङ्गमङ्ग्यते। प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः॥" —प्रमाणप. पृ. ७२। प्रमाणनय. ३।११। ३. "पक्षः प्रसिद्धो धर्मी, प्रसिद्धविशेषणविशिष्टतया स्वयं साध्यत्वेनेप्सितः प्रत्यक्षाद्यविरुद्ध इति वाक्यशेषः।" —न्यायप्रवे. पृ. १। "साध्याभ्युपगमः पक्षः प्रत्यक्षाद्यनिराकृतः।" —न्यायाव. श्लो. १४। "स्वरूपेणैव स्वयमिष्टोऽनिराकृतः पक्षः इति।" —न्यायवि. पृ. ७९। "साध्यं शक्यमभिप्रेतमप्रसिद्धम्।"—न्यायवि. श्लो. १७२। परीक्षामु. ३।१५। प्रमाणनय. ३।१२। जैनतर्कभा. पृ. १३। प्रमाणमी. १।२।१३। ४. "साध्यं धर्मः क्वचित्तद्विशिष्टो वा धर्मी। पक्ष इति यावत्। प्रसिद्धो धर्मी।" —परीक्षामु. ३।२५–२७। न्यायप्र. पृ. १। प्रमाणमी. १।२।१५–१६। ५. "त्रिरूपलिङ्गाख्यानं परार्थानुमानम्।" —न्यायबि. ३।१। "साध्याविनाभुवो हेतोर्वचो यत्प्रतिपादकम्। परार्थमनुमानं तत्पक्षादिवचनात्मकम्॥" —न्यायाव. श्लो. १३। परीक्षामु. ३।५५। प्रमाणमी. २।१।१–२। "पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारादिति।" —प्रमाणनय. ५।२३। ६. "बालव्युत्पत्त्यर्थं तत्त्रयोपगमे शास्त्र एवासौ न वादेऽनुपयोगात्।" —परीक्षामु. ३।४६। "मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानीति।" —प्रमाणनय. ३।४२। प्रमाणमी. २।१।१०। ७. दृष्टान्तो द्वेधा। अन्वयव्यतिरेकभेदात्।" —परीक्षामु. ३।४७। न्यायप्र. पृ. १। प्रमाणनय. ३।४१। प्रमाणमी. १।२।२१। ८. "साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सोऽन्वयदृष्टान्तः।" —परीक्षामु. ३।४८। न्यायप्र. पृ. १। न्यायाव. श्लो. १८। प्रमाणनय. ३।४२, ४३। प्रमाणमी. १।२।२१। ९. "साध्याभावे साधनाभावो यत्र कथ्यते स व्यतिरेकदृष्टान्तः।" —परीक्षामु. ३।४९। न्यायप्र. पृ. २। न्यायाव. श्लो. १९। प्रमाणनय. ३।४४, ४५। प्रमाणमी. १।२।२२। १०. "हेतुरुपसंहार उपनयः।" परीक्षामु. ३।५०। प्रमाणनय. ३।४६, ४७। प्रमाणमी. २।१।१४। ११. "प्रतिज्ञायास्तु निगमनम्।" —परीक्षामु. ३।५१। प्रमाणनय. ३।४८, ४९। प्रमाणमी. २।१।१५।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कोत्स्यन्त इत्यादि । अत्रोदाहरणम्—परिणामी शब्दः कृतकत्वात्, यः कृतकः स परिणामी दृष्टो यथा घटः, कृतकश्चायम् तस्मात्परिणामी । यस्तु न परिणामी स न कृतको दृष्टः, यथा वन्ध्यास्तनन्धयः । कृतकश्चायम् तस्मात्परिणामी [2] इत्यादि ।

§ ३१९. नन्वत्र निश्चितान्यथानुपपत्तिरेवैकं हेतोर्लक्षणमभ्यधायि किं न [3]पक्षधर्मत्वादित्रैरूप्यमिति चेत्, उच्यते; पक्षधर्मत्वादौ त्रैरूप्ये सत्यपि तत्पुत्रत्वादेर्हेतोर्गमकत्वादर्शनात्[4], असत्यपि च त्रैरूप्ये हेतोर्गमकत्वदर्शनात्, तथाहि—जलचन्द्रात् नभश्चन्द्रः, कृतिकोदयात् शकटोदयः, पुष्पिते-

होते हैं परन्तु मोटी बुद्धिवाले मन्द शिष्योंको समझानेके लिए दृष्टान्त, उपनय और निगमन इन तीन अवयवोंका भी प्रयोग कर सकते हैं। दृष्टान्त दो प्रकारका है—१—अन्वय दृष्टान्त, २ व्यतिरेक दृष्टान्त। जहां साधनकी सत्तामें नियत रूपसे अवश्य ही साध्यकी सत्ता दिखायी जाय वह अन्वय दृष्टान्त है। जहाँ साध्यके अभावमें नियमसे साधनका अभाव बताया जाय वह व्यतिरेक दृष्टान्त है। दृष्टान्तका कथन करके पक्षमें हेतुकी सत्ताके दुहरानेको उपनय कहते हैं। पक्षमें हेतुकी सत्ताका उपसंहार करके साध्यके सद्भावको दुहराना निगमन कहलाता है। ये पक्ष, हेतु दृष्टान्त, उपनय और निगमन 'पंचावयव' कहे जाते हैं। जैसे, शब्द परिवर्तनशील है, परिणामी है, क्योंकि वह उच्चारणसे उत्पन्न किया गया है, कृतक है, जो कृतक होते हैं वे परिणामी होते हैं जैसे घड़ा, चूँकि यह शब्द भी कृतक है, अतः उसे परिणामी होना ही चाहिए, जो परिणामी नहीं होते वे कृतक भी नहीं होते जैसे वन्ध्याका लड़का, चूँकि शब्द कृतक है, अतः वह परिणामी होगा ही।

३१९. शंका—आपने एकमात्र अविनाभावको ही हेतुका लक्षण माना है। पर हेतुके लक्षणमें तो 'पक्षमें रहना, सपक्षमें रहना तथा विपक्षमें नहीं रहना' इन तीन रूपोंका भी विशिष्ट स्थान है अतः इन्हें लक्षणमें शामिल क्यों नहीं किया ?

समाधान—त्रैरूप्य हेतुका अव्यभिचारी लक्षण नहीं है। 'गर्भमें रहनेवाला मैत्रका लड़का साँवला है क्योंकि वह मैत्रका लड़का है जैसे कि उसके पाँच साँवले लड़के' इस मैत्रतनयत्व हेतुमें त्रैरूप्य पाया जाता है फिर भी यह सच्चा हेतु नहीं है, क्योंकि मैत्रतनयत्वका साँवलेपनसे कोई अविनाभाव नहीं। त्रैरूप्यके न होनेपर भी केवल अविनाभाव मात्रसे अनेकों हेतु अपने साध्यका

१. "परिणामी शब्दः, कृतकत्वात्...।"—परीक्षामु. ३।६५। प्रमाणनय. ३।७३। २. –णामी शब्द इत्यादि आ., क.। ३. "त्रैरूप्यं पुनर्लिङ्गस्यानुमेये सत्त्वमेव, सपक्ष एव सत्त्वम्, असपक्षे चासत्त्वमेव निश्चितम्।" –न्यायबि. २।५। ४. "न च सपक्षे सत्त्वं पक्षधर्मत्वं विपक्षे चासत्त्वमात्रं साधनलक्षणम्, स श्यामः तत्पुत्रत्वात् इतरतत्पुत्रवदित्यत्र साधनाभासे तत्सद्भावसिद्धेः। सपक्षे हीतरत्र तत्पुत्रे तत्पुत्रत्वस्य साधनस्य श्यामत्वव्याप्तस्य सत्त्वं प्रसिद्धम्, विवादाध्यासिते च तत्पुत्रे पक्षीकृते तत्पुत्रत्वस्य सद्भावात् पक्षधर्मत्वम्, विपक्षे चाश्यामे क्वचिदन्यपुत्रे तत्पुत्रत्वस्याभावात् विपक्षेऽसत्त्वमात्रं च। न च तावता साध्यसाधनत्वं साधनस्य।"—प्रमाणप. पृ. ७०। न्यायकुमु. पृ. ४४०। सन्मति. टी. पृ. ५९०। स्या. र. पृ. ५१८। प्रमेयर. ३।१५। प्रमाणमी. पृ. ४०। ५. "तत्सद्भावे पक्षधर्मत्वाद्यभावेऽपि साधनस्य सम्यक्त्वप्रतीतेः उदेष्यति शकटं कृत्तिकोदयादित्यस्य पक्षधर्मत्वाभावेऽपि प्रयोजकत्वव्यवस्थितेः।"—प्रमाणप. पृ. ७१। "तस्मात्प्रतीतिमाश्रित्य हेतुं गमकमिच्छता। पक्षधर्मत्वशून्योऽस्तु गमकः कृत्तिकोदयः॥ पल्वलोदकनैर्मल्यं तदागस्त्युदये स च। तत्र हेतुः सुनिर्णीतः पूर्वं शरदि सम्मतः॥ चन्द्रादौ जलचन्द्रादि सोऽपि तत्र तथाविधः। छायादिपादपादौ च सोऽपि तत्र कदाचन॥"—तत्त्वार्थश्लो. पृ. २०१।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

कचूततः पुष्पिताः शेषचूताः, शशाङ्कोदयात् समुद्रवृद्धिः, सूर्योदयात् पद्माकरबोधः, वृक्षात्छाया चैते पक्षधर्मताविरहेऽपि[1] सर्वजनैरनुमीयन्ते । कालादिकस्तत्र[2] धर्मी समस्त्येवेति चेत् । न; [3]अतिप्रसङ्गात् । एवं हि शब्दस्यानित्यत्वे साध्ये काककार्ष्ण्यादेरपि गमकत्वप्रसक्तेः, लोकादेर्धर्मिणस्तत्र कल्पयितुं शक्यत्वात् । [4]अनित्यः शब्दः श्रावणात्, मद्भ्रातायम् एवंविधस्वरान्यथानुपपत्तेः, सर्वं नित्यमनित्यं वा सत्त्वादित्यादिषु सपक्षे सत्त्वस्याभावेऽपि गमकत्वदर्शनाच्चेति ।

सफल अनुमान कराते हैं । जैसे—'आकाशमें चन्द्रमा उग आया है क्योंकि जलमें उसका प्रतिबिम्ब पड़ रहा है' इस अनुमानमें जलमें पड़ा हुआ चन्द्रका प्रतिबिम्ब रूप हेतु, 'रोहिणी नक्षत्र एक मुहूर्तके बाद उदय होगा क्योंकि अभी कृत्तिका नक्षत्रका उदय हो रहा है' इसमें कृतिकोदय हेतु, 'सभी आमोंमें बौर आ गये हैं क्योंकि वे आम हैं जैसे कि यह बौरवाला आम' इसमें पुष्पित आम्रत्व हेतु, 'समुद्र में ज्वारभाटा आ रहा है क्योंकि चन्द्रका उदय हो रहा है' इसमें चन्द्रोदय हेतु, 'कमल खिल गये क्योंकि सूर्यका उदय हो गया है' इसमें सूर्योदय हेतु, 'छाया पड़ रही है क्योंकि धूप भी है और वृक्ष भी' यहाँ वृक्षत्व हेतु, इत्यादि अनेक हेतुओंमें पक्षधर्मत्व नहीं पाया जाता, ये हेतु अपने पक्षमें नहीं रहते फिर भी अविनाभावके कारण सच्चे हेतु हैं । देखो कृत्तिकोदय हेतु शकट रूप पक्षमें नहीं पाया जाता, इसी तरह चन्द्रोदय हेतु समुद्र रूप पक्षमें नहीं रहता फिर भी अविनाभावी होनेसे अपने साध्यका यथार्थ अनुमान कराते ही हैं ।

शंका—कृतिकोदय हेतुमें आकाश या कालको धर्मी बनाकर पक्षधर्मता घटायी जा सकती है । जैसे काल या आकाश एक मुहूर्तमें रोहिणीके उदयसे युक्त होगा क्योंकि अभी उसमें कृत्तिकाका उदय हो रहा है ।

**समाधान**—इस तरह व्यापक चीजोंको पक्ष बनानेकी परम्परा कायम की जायेगी और इसके बलपर हेतुको सच्चा माना जायेगा; तो बड़ी गड़बड़ हो जायेगी । संसारमें कोई भी हेतु पक्षधर्मसे रहित नहीं हो सकेगा । 'शब्द अनित्य है क्योंकि कौआ काला है' यह पक्षधर्मसे रहित हेतु भी लोकको धर्मी मानकर पक्षधर्मवाला बनाया जा सकेगा—लोक अनित्यशब्दवाला है क्योंकि उसमें काला कौआ पाया जाता है । अतः काल आकाश आदि तटस्थ व्यापक पदार्थोंको धर्मी मानकर किसीमें पक्षधर्मत्व सिद्ध करना केवल कल्पना जाल है । इसमें अतिप्रसंग—अव्यवस्था नामका दूषण होता है । 'शब्द अनित्य है क्योंकि वह सुना जाता है' 'यहाँ मेरा भाई है क्योंकि इस प्रकारकी आवाज भाईके बोले बिना नहीं आ सकती' 'समस्त पदार्थ नित्य वा अनित्य हैं

१.—धर्मतो विरहेऽपि म. २ । "नो हि शकटे धर्मिणि उदेष्यतायां साध्यायां कृत्तिकाया उदयोऽस्ति तस्य कृत्तिकाधर्मत्वात् ततो न पक्षधर्मत्वम् ।"—प्रमाणप. पृ. ७१ । न्यायकुमु. पृ. ४४० । प्रमेयक. पृ. ३५४ । स्या. र. पृ. ५१९ । प्रमेयर. ३।१५ । प्रमाणमी. पृ. ४० । २. "तथा न चन्द्रोदयात् समुद्रवृद्ध्यनुमानं चन्द्रोदयात् (पूर्वं पश्चादपि ) तदनुमानप्रसङ्गात् । चन्द्रोदयकाल एव तदनुमानं तदैव व्याप्तेर्गृहीतत्वादिति चेत्, यद्येवं तत्कालसंबन्धित्वमेव साध्यसाधनयोः, तदा च स एव कालो धर्मी तत्रैव च साध्यानुमानं चन्द्रोदयश्च तत्संबन्धीति कथमपक्षधर्मत्वम् ।"—प्रमाणवा. स्ववृ. टी. १।३ । ३. "कालादिधर्मिकल्पनायामतिप्रसङ्गः ।"—प्रमाणसं. पृ. १०४ । "यदि पुनराकाशं कालो वा धर्मी तस्योदेष्यच्छकटवत्त्वं साध्यं कृत्तिकोदयसाधनं पक्षधर्म एवेति मतम्, तदा धरित्रीधर्मिणी महोदध्याधाराग्निमत्त्वं साध्यं महानसधूमवत्त्वं साधनं पक्षधर्मोऽस्तु तथा च महानसधूमो महोदधौ अग्निं गमयेदिति न कश्चिदपक्षधर्मो हेतुः स्यात् ।"—प्रमाणप. पृ. ७१ । तत्त्वार्थश्लो. पृ. २०० । "काककार्ष्ण्यादेरपि प्रासादधावल्ये साध्ये जगतो धर्मित्वेन पक्षधर्मत्वस्य कल्पयितुं सुशकत्वात् ।"—न्यायकुमु. पृ. ४४० । सन्मति. टी, पृ. ५९१ । स्या. र. पृ. ५१९ । जैनतर्कभा. पृ. १२ । ४. "अनित्यः शब्दः श्रावणत्वात्, सर्वं क्षणिकं सत्त्वात्, इत्यादेः सपक्षे सत्त्वाभावेऽपि गमकत्वप्रतीतेः ।"—न्यायकुमु. ४४० ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३२०. [1]आप्तवचनाज्जातमर्थज्ञानमागमः, [2]उपचारादाप्तवचनं च [3]यथाऽस्त्यत्र निधिः, [4]सन्ति मेर्वादयः। [5]अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते, स आप्तो [6]जनक-तीर्थंकरादिः। इत्युक्तं परोक्षम्[7]। तेन।

"मुख्यसंव्यवहारेण संवादिविशदं मतम्।
ज्ञानमध्यक्षमन्यद्धि, परोक्षमिति संग्रहः ॥१॥ इति।
यद्यथैवाविसंवादि प्रमाणं तत्तथा मतम्।
विसंवाद्यप्रमाणं च तदध्यक्षपरोक्षयोः ॥२॥" [सन्मतितर्कटीका, पृ. ५९]

§ ३२१. तत एकस्यैव ज्ञानस्य [8]यत्राविसंवादस्तत्र प्रमाणता, इतरत्र च तदाभासता, यथा [9]तिमिराद्युपप्लुतं ज्ञानं चन्द्रादावविसंवादकत्वात्प्रमाणं तत्संख्यादौ च तदेव विसंवादकत्वाद-

---

क्योंकि वे सत् हैं' इन अनुमानोंके श्रावणत्व आदि हेतु सपक्षमें नहीं रहते फिर भी अविनाभावके बलसे सच्चे हैं, और अपने साध्योंका प्रामाणिक ज्ञान कराते हैं।

§ ३२०. आप्तके वचनोंसे होनेवाले पदार्थके ज्ञानको आगम कहते हैं। उपचारसे आप्तके वचनोंको भी आगम कहते हैं; क्योंकि उन्हींके द्वारा ही तो ज्ञान उत्पन्न होता है। जो व्यक्ति जिस वस्तुका कथन करता है उसे अविसंवादी यथार्थरूपसे जानता हो तथा जिस प्रकार उसे जाना है ठीक उसी प्रकार उसका कथन करता हो उसे आप्त कहते हैं। जैसे माता-पिता या तीर्थंकर आदि। जैसे 'यहाँ धन गड़ा है' 'मेरु पर्वत है' इत्यादि वाक्योंके अर्थको पिता और तीर्थंकर अच्छी तरह जानते हैं अतः वे उक्त वाक्योंके आप्त हैं। एक बार आप्तताका निश्चय होनेपर उनके द्वारा कहे गये अन्य वाक्य भी आगम प्रमाण हैं। इस तरह परोक्ष प्रमाणका निरूपण हुआ। अतः "अविसंवादी विशद ज्ञान प्रत्यक्ष है, वह मुख्य और सांव्यवहारिक रूपसे दो प्रकारका है, प्रत्यक्षसे भिन्न समस्त ज्ञान परोक्ष हैं। यह सामान्य रूपसे प्रमाणोंका संग्रह है। जो ज्ञान वस्तुके जिस अंशका जिस रूपसे अविसंवादी ज्ञान कराता है वह उस अंशमें उस रूपसे प्रमाण है तथा जिस अंशमें विसंवादी है उस अंशमें अप्रमाण है। यही व्यवस्था प्रत्यक्ष और परोक्ष दोनों प्रकारके ज्ञानोंकी है। ये भी अविसंवादी अंशमें प्रमाण तथा विसंवादी अंशमें प्रमाणाभास हैं।"

§ ३२१. इसलिए एक ही ज्ञान जिस अंशमें अविसंवादी होगा उस अंशमें प्रमाण माना जायेगा तथा जिस अंशमें विसंवादी होगा उस अंशमें अप्रमाण या प्रमाणाभास समझा जायेगा।

---

१. "आप्तवचनादिनिबन्धनमर्थज्ञानमागमः।"—परीक्षामु. ३।९९। प्रमाणनय. ४।१। २. "उपचारादाप्तवचनं चेति।"—प्रमाणनय. ४।२। ३. "समस्त्यत्र प्रदेशे रत्नविधानं सन्ति रत्नसानुप्रभृतय इति।"—प्रमाणनय. ४।३। ४. "यथा मेर्वादयः सन्ति।"—परीक्षामु. ३।१०१। ५. "अभिधेयं वस्तु यथावस्थितं यो जानाति यथाज्ञानं चाभिधत्ते स आप्त इति।"—प्रमाणनय. ४।४। ६. "स च द्वेधा लौकिको लोकोत्तरश्चेति। लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादिरिति।"—प्रमाणनय. ४।६, ७। ७. तत् म. २। "तेन मुख्यसंव्यवहारेण...।"—सन्मति. टी. पृ. ५९५। ८. "यद्यथैवाविसंवादि प्रमाणं तत्तथा मतम्।"–लघी. श्लो. २२। सिद्धिवि.। तत्त्वार्थश्लो. पृ. १७०। अष्टसह. पृ. ११२। सन्मति. टी. पृ. ५९५। ९. "तिमिराद्युपप्लवज्ञानं चन्द्रादावविसंवादकं प्रमाणम् यथा तत्संख्यादौ विसंवादकत्वादप्रमाणं प्रमाणेतरव्यवस्थायाः तल्लक्षणत्वात्।" लघी. स्ववृ. श्लो. २२। "येनाकारेण तत्त्वपरिच्छेदः तदपेक्षया प्रामाण्यमिति। तेन प्रत्यक्षतदाभासयोरपि प्रायशः संकीर्णप्रामाण्येतरस्थिति-रुन्नेतव्या, प्रसिद्धानुपहतेन्द्रियदृष्टेरपि चन्द्रार्कादिषु देशप्रत्यासत्त्याद्य भूताकारावभासनात्, तथोपहताक्षा-देरपि संख्यासंख्यादिविसंवादेऽपि चन्द्रादिस्वभावतत्त्वोपलम्भात्। तत्प्रकर्षापेक्षया व्यपदेशव्यवस्था गन्धद्रव्यादिवत्।"—अष्टश., अष्टसह. पृ. २७७। तत्त्वार्थश्लो. पृ. १७०। सन्मति. टी. पृ. ५९५।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

प्रमाणम्। प्रमाणेतरव्यवस्थायाः[1] विसंवादाविसंवादलक्षणत्वादिति स्थितमेतत्—प्रत्यक्षं परोक्षं च द्वे एव प्रमाणे'। अत्र च मतिश्रुतावधिमनःपर्यायकेवलज्ञानानां[2] मध्ये मतिश्रुते परमार्थतः परोक्षं[3] प्रमाणम्, अवधिमनःपर्यायकेवलानि[4] तु प्रत्यक्षं[5] प्रमाणमिति। -

§ ३२२. अथोत्तरार्धं व्याख्यायते। 'अनन्तधर्मकं वस्तु' इत्यादि। इह प्रमाणाधिकारे प्रमाणस्य प्रत्यक्षस्य परोक्षस्य च विषयस्तु[6] ग्राह्यं पुनरनन्तधर्मकं वस्तु, अनन्तास्त्रिकालविषयत्वादपरिमिता धर्माः—स्वभावाः सहभाविनः क्रमभाविनश्च स्वपरपर्याया यस्मिंस्तदनन्तधर्ममेव स्वार्थे कप्रत्ययेऽनन्तधर्मकमनेकान्तात्मकमित्यर्थः। अनेकेऽन्ता अंशा धर्मा वात्मास्वरूपं यस्य तदनेकान्तात्मकमिति व्युत्पत्तेः, वस्तु—सचेतनाचेतनं सर्वं द्रव्यम्, अत्र अनन्तधर्मकं वस्त्विति पक्षः, प्रमाणविषय इत्यनेन प्रमेयत्वादिति केवलव्यतिरेकी हेतुः सूचितः, अन्यथानुपपत्त्येकलक्षणत्वाद्धेतोरन्तर्व्याप्त्यैवं साध्यस्य सिद्धत्वात् दृष्टान्तादिभिर्न प्रयोजनम्, यदनन्तधर्मात्मकं न भवति तत्प्रमेयमपि न भवति, यथा व्योमकुसुममिति केवलो व्यतिरेकः, साधर्म्यदृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वया-

---

जिस तरह तिमिर रोगीको एक ही चन्द्रमा दो दिखाई देते हैं। उसका यह द्विचन्द्र ज्ञान चन्द्र अंशमें यथार्थ तथा अविसंवादी ज्ञान पैदा करनेके कारण प्रमाण है, और वही द्वित्व अंशमें विसंवादी होनेसे अप्रमाण है। चन्द्र तो है पर दो चन्द्र नहीं हैं। प्रमाणकी व्यवस्था अविसंवादसे तथा अप्रमाणकी व्यवस्था विसंवादसे होती है। जिस ज्ञानमें अविसंवादी अंश अधिक होंगे वह ज्ञान प्रमाण कहा जायेगा तथा जिसमें विसंवादी अंश अधिक होंगे वह अप्रमाण। जैसे कि कस्तूरीमें गन्ध उत्कट होनेसे वह गन्ध द्रव्य कही जाती है। 'पर्वतपर चन्द्र ऊग रहा है' यह सत्य ज्ञान भी चन्द्रांशमें प्रमाण होकर भी 'पर्वतपर' इस अंशमें अप्रमाण है। अतः इस विवेचनसे यह बात सिद्ध हो जाती है कि प्रत्यक्ष और परोक्ष दो ही प्रमाण हैं। मति-श्रुत-अवधि-मनःपर्यय और केवलज्ञान इन पांच ज्ञानोंमें मतिज्ञान और श्रुतज्ञान वस्तुतः तो परोक्ष हैं, तथा अवधि-मनःपर्यय और केवलज्ञान प्रत्यक्ष हैं। हां, मतिज्ञानको लोक व्यवहारमें प्रत्यक्ष रूपसे प्रसिद्ध होनेके कारण सांव्यवहारिक प्रत्यक्ष भी कहते हैं।

§ ३२२. अब प्रमाणके विषयका निरूपण करते हैं—अनन्तधर्मवाली वस्तु प्रमेय है। इस प्रमाणके प्रकरणमें प्रत्यक्ष और परोक्ष दोनों ही प्रमाणोंका विषय जानने लायक अनन्तधर्मवाला पदार्थ होता है। जिसमें अनन्त तीनों कालोंमें रहनेवाले अपरिमित सहभावी तथा क्रमभावी धर्मस्वभाव पाये जाते हैं वह वस्तु अनन्तधर्मक या अनेकान्तात्मक कही जाती है। अनन्तधर्मसे स्वार्थमें 'क' 'प्रत्यय होनेसे 'अनन्तधर्मक' शब्द सिद्ध होता है। अनेकान्तात्मक—अनेक अन्तधर्म या अंश हो जिसका आत्मा—स्वरूप हों वह पदार्थ अनेकान्तात्मक कहा जाता है। 'चेतन या अचेतन सभी वस्तुएँ अनन्तधर्मवाली हैं' यह पक्ष है। 'प्रमाण विषयः' शब्दसे 'प्रमेयत्वात्–प्रमेय होनेसे' यह केवलव्यतिरेकी हेतु सूचित होता है। हेतुका अविनाभाव ही एकमात्र असाधारण लक्षण है तथा पक्षमें ही साध्य और साधनके अविनाभावको ग्रहण करनेवाली अन्तर्व्याप्तिके बलसे ही हेतु साध्यका ज्ञान कराता है अतः उक्त अनुमानमें दृष्टान्त आदिकी कोई आवश्यकता नहीं है। 'जो अनन्तधर्मवाला नहीं है वह प्रमेय भी नहीं है जैसे कि 'आकाशका फूल' यह व्यतिरेक व्याप्ति ही प्रमेयत्वहेतुको पायी जाती है अतः यह केवलव्यतिरेकी हेतु है। अन्वय-

---

१.– न्याः संवादावि भ. १, २, प. १, २, क.। २. "मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम्"–त. सू. १।९। ३. "आद्ये परोक्षम्"–त. सू. १।११। ४. –नि प्रत्य–भ. २। ५. "प्रत्यक्षमन्यत्" –त. सू. १।१२। ६. ग्राह्यं तत्पुनः भ. २। ७. "अन्तर्व्याप्त्यैव साध्यस्य सिद्धौ बहिरुदाहृतिः। व्यर्था स्यात्तदसद्भावेऽप्येवं न्यायविदो विदुः॥"—न्यायावता. श्लो. २०।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

योगादिति। अस्य च हेतोरसिद्धविरुद्धानैकान्तिकादिदोषाणां सर्वथानवकाश एव प्रत्यक्षादिना प्रमाणेनानन्तधर्मात्मकस्यैव सकलस्य प्रतीतेः ।

§ ३२३. ननु कथमेकस्मिन् वस्तुन्यनन्ता धर्माः[1] प्रतीयन्त इति चेत् । उच्यते; प्रमाणप्रमेयरूपस्य सकलस्य क्रमाक्रमभाव्यनन्तधर्माक्रान्तस्यैकरूपस्य वस्तुनो यथैव स्वपरद्रव्याद्यपेक्षया सर्वत्र सर्वदा सर्वप्रमातृणां प्रतीतिर्जायमानास्ति तथैव वयमेते सौवर्णघटदृष्टान्तेन सविस्तरं दर्शयामः । विवक्षितो हि घटः स्वद्रव्यक्षेत्रकालभावैर्विद्यते, परद्रव्यक्षेत्रकालभावैश्च[2] न विद्यते, तथाहि—स घटो यदा सत्त्वज्ञेयत्वप्रमेयत्वादिधर्मैश्चिन्त्यते तदा तस्य सत्त्वादयः स्वपर्याया एव सन्ति, न तु केचन [3]परपर्यायाः, सर्वस्य वस्तुनः, सत्त्वादीन्धर्मानधिकृत्य सजातीयत्वाद्विजातीयस्यैवाभावान्न कुतोऽपि व्यावृत्तिः । द्रव्यतस्तु यदा पौद्गलिको घटो विवक्ष्यते, तदा स पौद्गलिकद्रव्यत्वेनाऽस्ति, धर्माधर्माकाशादिद्रव्यत्वैस्तु नास्ति । अत्र पौद्गलिकत्वं स्वपर्यायः,[4] धर्मादिभ्योऽनन्तेभ्यो व्यावृत्तत्वेन [5]परपर्याया अनन्ताः, जीवद्रव्याणामनन्तत्वात्, पौद्गलिकोऽपि[6] स घटः पार्थिवत्वेनास्ति न पुनराप्यादित्वैः, अत्र पार्थिवत्वं स्वपर्यायः, आप्यादिद्रव्येभ्यस्तु बहुभ्यो व्यावृत्तिः ततः परपर्याया अनन्ताः । एवमग्रेऽपि स्वपरपर्यायव्यक्तिर्वेदितव्या । पार्थिवोऽपि स धातु-

---

दृष्टान्त तो पक्षमें ही आ गये हैं, क्योंकि संसारके सभी चेतन-अचेतन पदार्थोंको पक्ष बनाया गया है। यह प्रमेयत्वहेतु असिद्ध विरुद्ध या व्यभिचारी नहीं है, क्योंकि प्रत्यक्ष आदि सभी प्रमाण अनन्तधर्मवाली ही वस्तुको विषय करते हैं। अतः इस प्रमाण प्रसिद्ध अनेकान्तको सिद्ध करनेके लिए प्रमेयत्व हेतु सर्वथा उपयुक्त है।

§ ३२३. शंका—एक वस्तुमें परस्पर विरोधी अनन्तधर्म कैसे हो सकते हैं ? एक वस्तुको अनेकरूप मानना तो स्पष्ट ही विरोधी है।

समाधान—सभी प्रमाण या प्रमेय रूप वस्तुमें स्व-पर द्रव्यकी अपेक्षा क्रम और युगपत् रूपसे अनेक धर्मोंकी सत्ता पायी जाती है। वस्तुकी अनेकान्तात्मकता तो सभी प्राणियोंको सदा अनुभवमें आती है। हम उसी सर्वप्रसिद्ध अनेकान्तात्मकताको सोनेके घड़ेके उदाहरणसे विस्तारपूर्वक समझाते हैं। देखो, अमुक घड़ा अपने द्रव्यमें है अपनी जगह है, अपने समयमें है, तथा अपनी पर्यायसे है दूसरे पदार्थोंके द्रव्य-क्षेत्र-काल-भावकी दृष्टिसे नहीं है। घड़ा घड़ारूप ही है कपड़ा या चटाई रूप नहीं है, वह अपनी जगह है कपड़े और चटाईकी जगह नहीं है, वह अपने समयमें है दूसरेके समय या अतीत-अनागत समयमें नहीं है, वह अपनी घट पर्यायमें है कपड़ा चटाई आदिकी हालतमें नहीं है। जिस समय उसी घड़ेका सत्त्व-ज्ञेयत्व या प्रमेयत्व आदि सामान्य धर्मोंकी दृष्टिसे विचार करते हैं तब वे सत्त्व आदि सामान्य धर्म घड़ेके स्वपर्याय रूप ही हो जाते हैं, उस समय कोई भी पर-पर्याय नहीं रहती, क्योंकि सत् ज्ञेय या प्रमेय कहनेसे सभी वस्तुओंका ग्रहण हो जाता है। सत्की दृष्टिसे तो घट-पट आदि अचेतन तथा मनुष्य-पशु आदि चेतनमें कोई भेद नहीं है। सभी सत्की दृष्टिसे सजातीय हैं, कोई विजातीय नहीं है जिससे व्यावृत्ति की जाय। अतः घड़ेका सत् ज्ञेय प्रमेय आदि सामान्यदृष्टिसे विचार करनेपर सभी सत् रूपसे घड़ेके स्वपर्यायरूप फलित होते हैं सभी सजातीय हैं उस समय घड़ेकी किससे व्यावृत्ति की जाय ? व्यावृत्ति तो विजातीयसे होती है। सत् ज्ञेय आदिकी दृष्टिसे तो घड़ेका विजातीय कोई है ही नहीं। जब पुद्गल द्रव्यकी दृष्टिसे घड़ेका विचार करते हैं तो घड़ा पुद्गल द्रव्यकी दृष्टिसे सत् है धर्म-अधर्म

---

१. -नन्तधर्माः आ., क. । २. "सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् । असदेव विपर्यासात् न चैव्र व्यवतिष्ठते ॥" —आप्तमी॰ श्लो. १५ । -भावैर्न वि—म. १, प. १, २ । ३. -पर्यया: म. २ । ४. स्वपर्ययः म. २ । ५. परपर्यया म. २ । ६. -पि घटः म. २ ।



Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

रूपतयास्ति न पुनर्मृत्त्वादिभिः। धातुरूपोऽपि स सौवर्णत्वेनाऽस्ति न पुना राजतत्वादिभिः। सौवर्णोऽपि स घटितसुवर्णात्मकत्वेनास्ति न त्वघटितसुवर्णात्मकत्वादिना[1]। घटितसुवर्णात्मापि देवदत्तघटितत्वेनास्ति न तु यज्ञदत्तादिघटितत्वादिना[2]। देवदत्तघटितोऽपि पृथुबुध्नाद्याकारेणास्ति न पुनर्मुकुटादित्वेन। पृथुबुध्नोदराद्याकारोऽपि वृत्ताकारेणास्ति नावृत्ताकारेण। वृत्ताकारोऽपि स्वाकारेणास्ति न पुनरन्यघटाद्याकारेण। स्वाकारोऽपि स्वदलिकैरस्ति न तु परदलिकैः। एवमनया दिशा[3] परेणापि स येन येन पर्यायेण[4] विवक्ष्यते स तस्य स्वपर्यायः, तदन्ये तु [5]परपर्यायाः। तदेवं द्रव्यतः स्तोकाः [6]स्वपर्यायाः, परपर्यायास्तु व्यावृत्तिरूपा अनन्ता, [7]अनन्तेभ्यो द्रव्येभ्यो [8]व्यावृत्तत्वात्।

§ ३२४. क्षेत्रतश्च[9] स त्रिलोकीवर्तित्वेन विवक्षितो न कुतोऽपि व्यावर्तते। ततः स्वपर्यायोऽस्ति न परपर्यायः[10]। त्रिलोकीवर्त्यपि स तिर्यग्लोकवर्तित्वेनास्ति न पुनरूर्ध्वाधोलोकवर्तित्वेन।

---

आकाशादि द्रव्योंकी दृष्टिसे असत् है। पौद्गलिक घड़ेका पौद्गलिकत्व ही स्वपर्याय है तथा जिन धर्म, अधर्म, आकाश और अनन्त जीव द्रव्योंसे घड़ा व्यावृत्त होता है वे सब अनन्त ही पर-पदार्थ परपर्याय हैं। घड़ा पौद्गलिक है धर्मादिद्रव्यरूप नहीं है। घड़ा पुद्गल होकर भी पार्थिव—पृथिवीका बना है जल आग या हवा आदिसे नहीं बना है। अतः पार्थिवत्व घड़ेकी स्वपर्याय है तथा जल आदि अनन्त परपर्याय हैं जिनसे कि घड़ा व्यावृत्त रहता है। इस तरह आगे भी जिस रूपसे घड़ेकी सत्ता हो उसे स्वपर्याय तथा जिससे घड़ा व्यावृत्त होता हो उन्हें परपर्याय समझ लेना चाहिए। घड़ा पार्थिव होकर भी धातुका बना हुआ है मिट्टी या पत्थरका नहीं है अतः वह धातुरूपसे सत् है मिट्टी या पत्थर आदि अनन्तरूपसे असत् है। घड़ा धातुका बना होकर भी सुवर्णका है चाँदी-पीतल-ताँबे आदिका नहीं है अतः सुवर्ण रूपसे सत् है चाँदी या पीतल सैकड़ों धातुओंकी दृष्टिसे असत् है। सोनेका होकर भी जिस सोनेकी डलीको गढ़ा गया है वह उस गढ़े गये सुवर्णकी दृष्टिसे सत् है तथा नहीं गढ़े गये खदान आदिमें पड़े हुए अघटित सुवर्णकी दृष्टिसे असत् है। गढ़े गये सुवर्णकी दृष्टिसे होकर भी वह देवदत्तके द्वारा गढ़े गये उस सुवर्णकी दृष्टिसे सत् है। यज्ञदत्त आदि सुनारोंके द्वारा गढ़े गये सुवर्णकी दृष्टिसे असत् है। गढ़े हुए सुवर्णकी दृष्टिसे होकर भी वह मुँहपर सकरे तथा बीचमें चौड़े आकारसे सत् है तथा मुकुट आदिके आकारोंकी दृष्टिसे असत् है। घड़ा मुँहपर सकरा तथा बीचमें चौड़ा होकर भी वह गोल है अतः गोल आकारसे सत् है तथा अन्य लम्बे आदि आकारोंसे असत् है। गोल होकर भी घड़ा अपने नियत गोल आकारसे सत् है अन्य गोल घड़ोंके गोल आकारसे असत् है। अपने गोल आकारवाला होकर भी घड़ा अपने उत्पादक परमाणुओंसे बने हुए गोल आकारकी दृष्टिसे सत् है तथा अन्य परमाणुओंसे बने हुए गोल आकारसे असत् है। इस तरह घड़ेको जिस-जिस पर्यायसे सत् कहेंगे वे पर्यायें स्वपर्याय हैं तथा जिन अन्य पदार्थोंसे वह व्यावृत्त होगा वे सभी परपर्याय होंगी। इस तरह घड़ेकी द्रव्यकी दृष्टिसे कुछ पर्यायें बतायीं तथा स्वपर्यायें परपर्यायोंसे कम भी होती हैं। परपर्यायें तो अनन्त हैं क्योंकि अनन्त ही द्रव्योंसे वह घट व्यावृत्त होता है।

§ ३२४. क्षेत्रकी दृष्टिसे जब घड़ेको त्रिलोकमें रहनेवाले रूपसे व्यापक क्षेत्र दृष्टिसे विचार करते हैं तो वह किसीसे व्यावृत्त नहीं होता अतः त्रिलोक रूप व्यापक क्षेत्रकी दृष्टिसे स्वपर्याय तो बन सकती है परपर्याय नहीं। यद्यपि अलोकाकाशमें घड़ा नहीं रहता अतः अलोका-

---

१. –कादिना भ. २। २. –ना घाटितोऽपि भ. १, प. १, २, आ., क.। ३. –श येन भ. २। ४. पर्ययेण भ. २। ५. –पर्ययाः भ. २। ६. स्वपर्ययाः भ. २। ७. अनन्तेभ्यो व्या–भ. १, २, प. १, २। ८. व्यावृत्तित्वात् आ., क.। ९. –तश्च त्रि–भा. २। १०. –योऽस्ति त्रि–भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तिर्यग्लोकवर्त्यपि स जम्बूद्वीपवर्तित्वेनास्ति न पुनरपरद्वीपादिवर्तितया[1]। सोऽपि भरतवर्तित्वेनास्ति न पुनर्विदेहवर्तित्वादिना। भरतेऽपि स पाटलिपुत्रवर्तित्वेनास्ति न पुनरन्यस्थानीयत्वेन। पाटलिपुत्रेऽपि देवदत्तगृहवर्तित्वेनास्ति न पुनरपरथा। गृहेऽपि गृहैकदेशस्थतयास्ति न पुनरन्यदेशादितया। गृहैकदेशेऽपि स येष्वाकाशप्रदेशेष्वस्ति तत्स्थिततयास्ति न पुनरन्यप्रदेशस्थतया। एवं यथासंभवमपरप्रकारेणापि वाच्यम्। तदेवं क्षेत्रतः स्वपर्यायाः स्तोकाः परपर्यायास्त्वसंख्येयाः, लोकस्यासंख्येयप्रदेशत्वेन। अथवा मनुष्यलोकस्थितस्य घटस्य तदपरस्थानस्थितद्रव्येभ्योऽनन्तेभ्यो व्यावृत्तत्वेनानन्ताः परपर्यायाः[2]। एवं देवदत्तगृहादिवर्तिनोऽपि। ततः [3]परपर्याया अनन्ताः।

§ ३२५. कालतस्तु नित्यतया स स्वद्रव्येणावर्तत वर्तते वर्तिष्यते[4] च ततो न कुतोऽपि व्यावर्तते। स चैवंयुगीनत्वेन विवक्ष्यमाणस्तद्रूपत्वेनास्ति न त्वतीतानागतादियुगवर्तित्वेन। अस्मिन् युगेऽपि स [5]ऐषमस्त्यवर्षतयास्ति न पुनरतीतादिवर्षत्वादिना। ऐषमस्त्योऽपि स वासन्तिक-

काशको परपर्याय कह सकते हैं; परन्तु चाहनेपर भी अलोकमें घड़ा कभी भी नहीं रह सकता वह सर्वदा लोकमें ही रहता है अतः उस रूपसे परपर्यायकी विवक्षा नहीं की है। यदि विवक्षा की जाये तो फिर 'घड़ा आकाशमें रहता है' इस रूपमें जब आकाश स्वपर्याय होगी तब परपर्याय कुछ भी नहीं होगी। त्रिलोकवर्ती भी घड़ा मध्यलोकमें रहता है स्वर्ग या नरकमें नहीं अतः मध्यलोककी दृष्टिसे सत् है तथा ऊर्ध्व और अधोलोककी दृष्टिसे असत्। मध्यलोकवर्ती होकर भी घड़ा जम्बूद्वीपमें रहता है अतः जम्बूद्वीपकी दृष्टिसे सत् तथा अन्य द्वीपोंकी दृष्टिसे असत् है। जम्बूद्वीपमें भी वह भरत क्षेत्रमें रहता है विदेह आदि क्षेत्रोंमें नहीं अतः भरतक्षेत्रकी दृष्टिसे सत् है तथा विदेह आदिकी दृष्टिसे असत्। भरतक्षेत्रमें भी वह पटनामें रहता है अतः पटनेकी दृष्टिसे सत् है तथा अन्य शहरोंकी दृष्टिसे असत्। पटनेमें भी वह देवदत्तके घरमें रखा है, अतः देवदत्तके घरकी दृष्टिसे सत् तथा अन्य घरोंकी दृष्टिसे असत् है। देवदत्तके घरमें भी वह घरके एक कोनेमें रखा है, अतः उस कोनेकी दृष्टिसे वह सत् है तथा मकानके अन्य भागोंकी दृष्टिसे असत्। कोनेमें भी वह जिन आकाश प्रदेशोंमें रखा है उन आकाश प्रदेशोंकी दृष्टिसे सत् है तथा अन्य आकाशोंकी दृष्टिसे असत्। इस तरह यथासम्भव और भी प्रकारोंसे सदसत्त्वका विचार करना चाहिए। जिनकी अपेक्षा अस्तित्वका विचार किया जाता है वे स्वपर्यायें थोड़ी हैं तथा जिनकी अपेक्षा नास्तित्वका विचार होता है वे परपर्यायें तो असंख्य हैं; क्योंकि लोकके असंख्य प्रदेश होते हैं। घड़ा जिस समय कुछ अमुक प्रदेशोंमें रहेगा तब स्वपर्याय तो एक होगी तथा परपर्यायें तो लोकके बाकी असंख्य प्रदेश ही होंगे। अथवा मनुष्यलोकवर्ती घड़ा अन्य अनन्त क्षेत्रोंसे व्यावृत्त होगा अतः समस्त आकाशके अनन्त ही प्रदेश परपर्याय हो सकते हैं। इस तरह क्षेत्रकी अपेक्षा भी परपर्यायें अनन्त हो सकती हैं। देवदत्तके घरमें रहनेवाला भी घड़ा घरके बाहरके अनन्त आकाशप्रदेशोंमें नहीं रहता अतः परपर्यायें अनन्त हो सकती हैं।

§ ३२५. कालकी दृष्टिसे जब घड़ेको द्रव्यकी अपेक्षा नित्य मानते हैं तब वह वर्तमानमें रहता है अतीतमें था तथा आगे भी होगा इस तरह त्रिकालवर्ती होनेके कारण त्रिकाल तो स्वपर्याय है तथा कोई ऐसा काल है ही नहीं जिसमें घड़ा न रहता हो अतः त्रिकालको स्वपर्याय माननेपर कोई भी पर[र्या]य नहीं है। त्रिकालवर्ती भी घड़ा इस युगमें रहता है अतः वह इस युगकी दृष्टिसे सत् है तथा अतीत या अनागत युगकी दृष्टिसे असत्। इस युगमें भी वह इस वर्षमें सत् है तथा

१. -तया जम्बूद्वीपवर्त्यपि भरत-म. २। २-३. परपर्यया-म. २। ४. -ष्यति ततो म. १, २, प. १, २। ५. -मस्त्यतया-म. १, २, प. १, २।

तथास्ति न पुनरन्यर्तुनिष्पन्नतया। तत्रापि नवत्वेन विद्यते न पुनः पुराणत्वेन। तत्राप्यद्यतनत्वे-नास्ति न पुनरनद्यतनत्वेन। तत्रापि वर्तमानक्षणतयास्ति न पुनरन्यक्षणतया। एवं कालतो-ऽसंख्येयाः स्वपर्यायाः, एकस्य द्रव्यस्यासंख्यकालस्थितिकत्वात्। अनन्तकालवर्तित्वविवक्षायां तु तेऽनन्ता अपि वाच्याः। परपर्यायास्तु विवक्षितकालादन्यकालवर्तिद्रव्येभ्यो अनन्तेभ्यो व्यावृत्तत्वेना-नन्ता एव।

§ ३२६. भावतः पुनः स पीतवर्णेनाऽस्ति न पुनर्नीलादिवर्णैः। पीतोऽपि सोऽपरपीतद्रव्या-पेक्षयैकगुणपीतः, स एव च तदपरापेक्षया द्विगुणपीतः, स एव च तदन्यापेक्षया त्रिगुणपीतः, एवं तावद्वक्तव्यं यावत्कस्यापि पीतद्रव्यस्यापेक्षयानन्तगुणपीतः। तथा स एवापरापेक्षयैकगुणहीनः, तदन्यापेक्षया द्विगुणहीन इत्यादि तावद्वक्तव्यं यावत्कस्याप्यपेक्षयानन्तगुणहीनपीतत्वेऽपि स भवति। तदेवं पीतत्वेनानन्ताः स्वपर्याया लब्धाः। पीतवर्णवत्तरतमयोगेनानन्तभेदेभ्यो नीलादिवर्णेभ्यो व्यावृत्तिरूपाः परपर्याया अप्यनन्ताः। एवं रसतोऽपि स्वमधुरादिरसापेक्षया पीतत्ववत्स्वपर्याया अनन्ता ज्ञातव्याः, [1]नीलादित्ववत् क्षारादिपररसापेक्षया परपर्याया अप्यनन्ता [2]अवसातव्याः। एवं सुरभिगन्धेनापि स्वपरपर्याया अनन्ता अवसातव्याः। एवं गुरुलघुमृदुखरशीतोष्णस्निग्धरूक्षस्पर्शा-ष्टकापेक्षयापि तरतमयोगेन प्रत्येकमनन्ताः स्वपरपर्याया अवगन्तव्याः, यत एकस्मिन्नप्यनन्तप्रदेशके

---

अतीत आदि वर्षोंकी दृष्टिसे असत्। इस वर्षमें भी वह वसन्त ऋतुमें उत्पन्न होनेके कारण सत् है तथा अन्य ऋतुओंकी दृष्टिसे असत्। वसन्त ऋतुमें भी वह नया है अतः नूतन अवस्थाकी दृष्टिसे सत् है तथा जीर्ण या पुरानी अवस्थाकी दृष्टिसे असत्। नया होकर भी वह आज ही बनाया गया है अतः आजकी दृष्टि से सत् है कलकी दृष्टिसे असत्। आज भी वह अभी-अभी बनाया गया है अतः वर्तमान क्षणरूपसे सत् है तथा अन्य क्षणोंकी दृष्टिसे असत्। इस तरह कालकी दृष्टिसे असंख्य स्वपर्यायें होती हैं; क्योंकि एक द्रव्य असंख्य कालोंमें अपनी स्थिति रखता है। अनन्तकालकी विवक्षासे तो द्रव्य अनन्तकाल तक ठहरनेवाला है अतः अनन्त ही स्वपर्यायें हैं। विवक्षित कालसे भिन्न अन्य अनन्तकालोंसे तथा उनमें रहनेवाले अनन्त ही द्रव्योंसे घड़ा व्यावृत्त रहता है अतः परपर्यायें भी अनन्त ही हैं।

§ ३२६. भावकी दृष्टिसे घड़ा पीला है अतः पीले रंगकी अपेक्षा सत् है तथा अन्य नीले-लाल आदि रंगोंसे असत्। घड़ेका वह पीलापन किसी पीले द्रव्यसे दुगुना पीला है किसीसे तिगुना किसीसे चौगुना इस तरह किसीसे अत्यन्त कम पीले द्रव्यसे अनन्तगुना पीला भी होगा। इसी तरह घड़ेका वह पीलापन किसी एक गुना कम पीला है किसीसे दोगुना कम पीला है किसीसे तीनगुना कम। इस तरह किसी परिपूर्ण पीले द्रव्यसे अनन्तगुणा कम पीला भी तो है। तात्पर्य यह कि तरतम रूपसे पीलेपनके ही अनन्त भेद हो सकते हैं, वे सब उसकी स्वपर्यायें हैं। तथा पीलेपन-की ही तरह नीले और लाल आदि रंग भी तरतम रूपसे अनन्त प्रकारके होते हैं उन सब अनन्तनीलादि रंगोंसे इस घड़ेका पीलापन पृथक् है अतः परपर्यायें भी अनन्त ही हैं। इसी तरह उस घड़ेका अपना जो भी मीठा आदि रस होगा उसके भी रूपकी तरह तरतम रूपसे अनन्त भेद होंगे, ये सभी उसकी स्वपर्यायें हैं तथा नील आदि पररूपोंकी तरह खारे आदि पररस भी तरतम रूपसे अनन्त हैं, उन सबसे इसका रस व्यावृत्त होता है अतः परपर्यायें भी अनन्त हैं। इसी तरह उसकी सुगन्धके तरतम रूपसे अनन्त ही भेद होंगे जो कि उसकी स्वपर्यायें कहे जायेंगे तथा जो गन्ध उसमें नहीं पायी जाती उसके अनन्त भेद परपर्याय होंगे। इसी तरह भारी, हलका, कोमल, खुरदरा, ठण्डा, गरम, चिकना और रूखा इन आठ स्पर्शोंके भी प्रत्येकके तरतम रूपसे अनन्त भेद

---

१. नीलादिवत् म. २। २. अवेतव्याः भ. १, २। अचेतव्याः क.।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

स्कन्धेऽष्टावपि स्पर्शाः प्राप्यन्त इति सिद्धान्ते [1]प्रोचानम् । तेनात्रापि कलशेऽष्टानामभिधानम् ।

§ ३२७. अथवा सुवर्णद्रव्येऽप्यनन्तकालेन [2] पञ्चापि वर्णा द्वावपि गन्धौ षडपि रसा अष्टावपि स्पर्शाश्च सर्वेऽपि तरतमयोगेनानन्तशो भवन्ति । तत्तदपरापरवर्णादिभ्यो व्यावृत्तिश्च भवति । [3]तदपेक्षयापि स्वपरधर्मा अनन्ता अवबोधव्याः । शब्दतश्च घटस्य नानादेशापेक्षया घटाद्यनेकशब्दवाच्यत्वेनानेके स्वधर्मा घटावितत्तच्छब्दानभिधेयेभ्योऽपरद्रव्येभ्यो व्यावृत्तत्वेनानन्ताः परधर्माः । अथवा तस्य घटस्य ये ये स्वपरधर्मा उक्ता वक्ष्यन्ते च तेषां सर्वेषां वाचका [4]यावन्तो ध्वनयस्तावन्तो घटस्य स्वधर्माः, तदन्यवाचकाश्च परधर्माः । संख्यातश्च घटस्य तत्तदपरापरद्रव्यापेक्षया प्रथमत्वं द्वितीयत्वं तृतीयत्वं यावदनन्ततमत्वं स्यादित्यनन्ताः स्वधर्माः, तत्तत्संख्यानभिधेयेभ्यो व्यावृत्तत्वेनानन्ताः परधर्माः । अथवा परमाणुसंख्या पलादिसंख्या वा यावती तत्र घटे वर्तते सा स्वधर्मः, तत्संख्यारहितेभ्यो व्यावृत्तत्वेनानन्ताः परपर्यायाः । अनन्तकालेन तस्य घटस्य सर्वद्रव्यैः समं संयोगवियोगभावेनानन्ताः स्वधर्माः, संयोगवियोगाविषयीकृतेभ्यो व्यावृत्तस्यानन्ताः परधर्माश्च ।

---

होते हैं । इनमें जो स्पर्श जिस रूपसे उसमें पाये जाते हैं उनकी अपेक्षा अनन्त स्वपर्यायें तथा जो स्पर्श नहीं पाये जाते उनकी अपेक्षा अनन्त ही परपर्यायें समझ लेनी चाहिए । सिद्धान्तमें स्पष्ट कहा है कि—एक अनन्त प्रदेशवाले स्कन्धमें भारी आदि आठों ही स्पर्श पाये जाते हैं, अतः इस घड़ेमें भी आठों ही स्पर्शका कथन किया गया है ।

§ ३२७. अथवा उसी सुवर्ण द्रव्यमें, जिसका कि घड़ा बनाया गया है, अनादिकालसे अभी तक पाँचों ही रंग, दोनों गन्ध, छहों रस तथा आठों ही स्पर्श तरतम रूपसे अनन्त ही प्रकारके हुए हैं । तो उसमें जिस जातिका रूप-रस-गन्ध तथा स्पर्श होगा उसकी अपेक्षा अनन्त स्वधर्म तथा जो रूपादि उसमें नहीं रहते होंगे उनकी अपेक्षा अनन्त ही परधर्म समझ लेने चाहिए । घड़ेको भारतवर्षके विभिन्न प्रदेशोंमें घड़ा, झंझर, हँड़िया, कलश आदि अनेक शब्दोंसे कहते हैं इसी तरह विदेशोंमें उसे पाट ( Pot ) आदि अनेक शब्दोंसे पुकारते हैं इस तरह अनेकों शब्दोंके द्वारा वाच्य होनेसे अनेक ही स्वधर्म होंगे तथा जिन पटादि अनन्त पदार्थोंमें घटके वाचक शब्दोंका प्रयोग नहीं होता उन सबसे घड़ा व्यावृत्त होता है अतः अनन्त ही परधर्म होते हैं । अथवा, घड़ेके जितने स्वधर्म कहे हैं तथा कहे जायेंगे उनके वाचक जितने भी शब्द हैं उतने ही घड़ेके स्वधर्म हैं तथा अन्य पदार्थोंके वाचक जितने शब्द हैं उतने ही परधर्म हैं । संख्याकी अपेक्षा भी घड़ेमें स्वधर्म और परधर्मका इस प्रकार विचार करना चाहिए । भिन्न-भिन्न द्रव्योंकी अपेक्षा घड़ेमें पहला, दूसरा, तीसरा, चौथा अनन्तसंख्या तकके व्यवहार हो सकते हैं ये सभी स्वधर्म हैं तथा इन संख्याओंके अविषय भूत पदार्थोंसे व्यावृत्त होनेके कारण वे सब परधर्म हैं । अथवा, घड़ेके परमाणुओंकी जितनी संख्या तथा उसके वजनके रत्तियोंकी जितनी संख्या है वह संख्या स्वधर्म है और वह संख्या जिन अनन्त पदार्थोंमें नहीं पायी जाती वे सब परधर्म हैं । अनन्तकालसे उस घड़ेका सभी द्रव्योंके साथ संयोग तथा विभाग होता रहा है अतः वे संयोग और विभाग स्वधर्म हैं तथा जिनमें वे संयोग और विभाग नहीं पाये जाते उन अनन्त पदार्थोंसे घड़ेकी व्यावृत्ति होती है अतः वे परधर्म हैं ।

---

१. "अत्र च स्निग्धरूक्षशीतोष्णाश्चत्वार एवाणुषु संभवन्ति, स्कन्धेष्वष्टावपि-यथासंभवमभिधानीयाः ।" —तत्त्वार्थाधि. भा. टी. ५।२३ । २. -काले पञ्चापि म. २ । ३. तत्तदपेक्षयापि म. १ । ४. -वन्तो घटस्य म. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ३२८. परिमाणतश्च तत्तद्द्रव्यापेक्षया तस्याणुत्वं महत्त्वं ह्रस्वत्वं दीर्घत्वं चानन्तभेदं स्यादित्यनन्ताः स्वधर्माः। ये सर्वद्रव्येभ्यो व्यावृत्त्या तस्य[1] परपर्यायाः संभवन्ति ते सर्वे पृथक्त्वतो ज्ञातव्याः। दिग्देशतः परत्वापरत्वाभ्यां तस्य घटस्यान्यान्यानन्तद्रव्यापेक्षयासन्नतासन्नतरतासन्नतमता दूरता दूरतरता दूरतमता एकद्व्याद्यसंख्यपर्यन्तयोजनैरासन्नता दूरता च भवतीति [2]स्वपर्याया अनन्ताः। अथवा परवस्त्वपेक्षया स पूर्वस्यां तदन्यापेक्षया[3] पश्चिमायां स इत्येवं दिशो विदिशश्चाश्रित्य दूरासन्नादितयाऽसंख्याः [4]स्वपर्यायाः।

§ ३२९. कालतश्च परत्वापरत्वाभ्यां सर्वद्रव्येभ्यः क्षणलवघटीदिनमासवर्षयुगादिभिर्घटस्य पूर्वत्वेन परत्वेन चानन्तभेदेनानन्ताः स्वधर्माः।

§ ३३०. ज्ञानतोऽपि घटस्य ग्राहकैः सर्वजीवानामनन्तैर्मत्यादिज्ञानैर्विभङ्गाद्यज्ञानैश्च स्पष्टास्पष्टस्वभावभेदेन ग्रहणाद्ग्राह्यस्याप्यवश्यं स्वभावभेदः संभवी, अन्यथा तद्ग्राहकाणामपि स्वभावभेदो न स्यात्तथा च तेषामैक्यं भवेत्। ग्राह्यस्य स्वभावभेदे च ये स्वभावाः ते स्वधर्माः। सर्वजीवानामपेक्षयाल्पबहुबहुतराद्यनन्तभेदभिन्नसुखदुःखहानोपादानोपेक्षा गोचरेच्छापुण्यापुण्य-

---

§ ३२८. परिमाण—मापकी अपेक्षा भी घड़ेमें स्वधर्म और परधर्म होते हैं। घड़ा किन्हीं बड़े मकान आदि द्रव्योंकी अपेक्षा छोटा, छोटे लोटा आदिकी अपेक्षा बड़ा, लम्बा ठिगना आदि अनन्त प्रकारके मापवाला कहा जा सकता है ये सब स्वधर्म हैं तथा अन्य परधर्म। घड़ा जिन समस्त परपदार्थोंसे पृथक् है.वे सब परपर्याय हैं तथा जिनसे पृथक् नहीं है वे स्वपर्याय हैं। यह पृथक्त्वकी अपेक्षा स्व-परधर्मोंका निरूपण है इसी घड़ेमें अन्य अनन्त द्रव्योंकी अपेक्षा पास, बहुत पास, अत्यन्त पास, दूर, बहुत दूर, अत्यन्त दूर, एक योजन दो योजन आदि अनन्त योजन दूर, तथा एक दो या चार योजन पास इत्यादि दिशा और देशकी अपेक्षा अनन्त ही व्यवहार होते हैं ये सभी स्वधर्म हैं। अथवा, वही घड़ा किसी वस्तुकी अपेक्षा पूर्वमें, किसीकी अपेक्षा पश्चिममें किसीकी अपेक्षा उत्तरमें तो किसीकी अपेक्षा दक्षिणमें रहता है। तात्पर्य यह कि दिशाओं और विदिशाओंकी अपेक्षा परत्व और अपरत्वका विचार करनेसे असंख्य स्वपर्यायें हो सकती हैं।

§ ३२९. कालकी अपेक्षा वही घड़ा किसीसे एक क्षण पुराना है तो किसीसे दो क्षण, किसीसे एक घड़ी दो घड़ी एक दिन माह वर्ष युगादि पुराना है, तो वही घड़ा किसीसे एक दो चार क्षण नया किसीसे एक दिन माह वर्ष या युग भर नया होता है। तात्पर्य यह कि घड़ा अन्य पदार्थोंकी अपेक्षा एक क्षणसे लेकर अनन्त वर्ष तकका नया या पुराना होता है अतः ये सब उसके स्वधर्म हैं।

§ ३३०. ज्ञानकी दृष्टिसे वही घड़ा संसारके अनन्त जीवोंके अनन्त ही प्रकारके मतिज्ञान, श्रुतज्ञान, विभंगादि अवधिज्ञान आदिका स्पष्ट या अस्पष्ट रूपसे विषय होता है। ग्राहक ज्ञानमें भेद होनेसे उसकी अपेक्षा ग्राह्य-विषयभूत पदार्थमें भी भेद होता ही है। यदि पदार्थ एकरूप ही रहे तो उसको जाननेवाले ज्ञानोंमें भी स्वभाव भेद नहीं होगा, वे सर्वथा एकरूप ही हो जायेंगे। इस तरह घड़ेको जाननेवाले अनन्त ज्ञानोंकी अपेक्षा घड़ेमें भी अनन्त ही स्वभाव भेद हैं और ये सब उसके स्वधर्म हैं। एक ही घड़ा किसीको थोड़ा सुख किसीको अधिक तथा किसीको बहुत अधिक सुख उत्पन्न करता है। इस तरह अनन्त जीवोंकी अपेक्षा अनन्त प्रकारके ही सुख-दुःखको उत्पन्न करनेके कारण, अनन्त जीवोंको हान उपादानता उपेक्षा बुद्धिका विषय होनेसे, अनन्त जीवोंकी अनन्त इच्छाओंका अवलम्बन होनेसे, अनन्त ही प्रकारके पुण्य और पापके बन्धका कारण होनेसे, अनन्त ही जीवोंपर अपना भिन्न-भिन्न असर डालनेके कारण, उसे देखकर किसीको

---

१. तस्यापरपर्या–म. २। २. स्वपर्यया म. २। ३. तदनपेक्षया म. २। ४. स्वपर्यया म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ५०८. अथात्राप्यनुक्तं किंचिदुच्यते। व्योमादिकं नित्यम्। प्रदीपादि कियत्कालावस्थायि। बुद्धिसुखादिकं च क्षणिकम्। चैतन्यादयो रूपादयश्च धर्माः आत्मादेर्घटादेश्च धर्मिणोऽत्यन्तं व्यतिरिक्ता अपि समवायसंबन्धेन संबद्धाः, स च समवायो नित्यः [1]सर्वंगत एकश्च। सर्वगत आत्मा। बुद्धिसुखदुःखेच्छाधर्माधर्मप्रयत्नभावनाख्यसंस्कारद्वेषाणां नवानामात्मविशेषगुणानामुच्छेदो मोक्षः। परस्परविभक्तौ सामान्यविशेषौ द्रव्यपर्यायौ च प्रमाणगोचरः। द्रव्यगुणादिषु षट्सु पदार्थेषु स्वरूपसत्त्वं वस्तुत्वनिबन्धनं विद्यते। द्रव्यगुणकर्मसु च सत्तासंबन्धो वर्त्तते सामान्यविशेषसमवायेषु च स नास्तीति ॥६७॥

§ ५०९. [2]षट्पदार्थी कणादकृता तद्भाष्यं प्रशस्तकरकृतं तट्टीका कन्दली श्रीधराचार्यीया, किरणावली तूदयनसंदृब्धा, व्योमवतिर्व्योमशिवाचार्यविरचिता, लीलावतीतर्कः श्रीवत्साचार्यीयः, आत्रेयतन्त्रं चेत्यादयो वैशेषिकतर्काः।

[3]इति श्रीतपागगनभोङ्गणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मोपजीविश्रीगुणरत्नसूरिकृतायां तर्करहस्यदीपिकायां षड्दर्शनसमुच्चयटीकायां वैशेषिकमतनिर्णयो नाम पञ्चमोऽधिकारः ॥

---

§ ५०८. मूल ग्रन्थकारने जिन बातोंका निर्देश नहीं किया है, उनका भी कुछ वर्णन इस प्रकार है—आकाश आदि नित्य हैं। दीपक आदि कुछ काल तक ठहरनेवाले—कालान्तरस्थायी हैं। बुद्धि, सुख आदि क्षणिक हैं। चैतन्य आदि धर्म आत्मासे तथा रूपादि धर्म घट आदिसे अत्यन्त भिन्न होकर भी उनमें समवाय सम्बन्धसे रहते हैं। समवाय नित्य, एक तथा सर्वगत है। आत्मा सर्वव्यापी है। बुद्धि, सुख, दुःख, इच्छा, धर्म, अधर्म, प्रयत्न, भावना नामक संस्कार और द्वेष इन आत्माके नौ विशेष गुणोंका अत्यन्त उच्छेद होना मोक्ष है। सामान्य और विशेष-द्रव्य गुण कर्म परस्पर भिन्न हैं। ये ही द्रव्य-सामान्य और पर्याय-विशेष परस्पर विभिन्न रहकर भी प्रमाणके विषय होते हैं। द्रव्य, गुण आदि छहों पदार्थोंमें 'वस्तु' व्यवहार करानेवाला स्वरूप सत्त्व होता है। सत्ताका समवाय मात्र द्रव्य, गुण और कर्ममें ही होता है। सामान्य विशेष और समवायमें सत्ताका समवाय नहीं होता, ये स्वरूप सत् हैं।

५०९. कणादकृत षट्पदार्थी—वैशेषिकसूत्र, प्रशस्तकरकृत प्रशस्तपादभाष्य, श्रीधराचार्यविरचित प्रशस्तभाष्यकी न्यायकन्दली टीका, उदयनाचार्यरचित किरणावली टीका, व्योमशिवाचार्यकृत व्योमवती टीका, श्रीवत्साचार्यकृत लीलावतीतर्क, आत्रेयतन्त्र आदि वैशेषिकोंके प्रमुख तर्कग्रन्थ हैं ॥६७॥

इति तपागणरूपी आकाशके सूर्य श्री देवसुन्दर सूरिके चरण सेवक श्री गुणरत्नसूरिके द्वारा रची गयी षड्दर्शन समुच्चयकी तर्करहस्य दीपिका नामकी टीकामें वैशेषिकमतके स्वरूपका निर्णय करनेवाला पाँचवाँ अधिकार पूर्ण हुआ।

---

१. सर्वगतश्च भा. २। २. सप्तपदार्थी भा. २। ३. इति तर्करहस्यदीपिकायां गुणरत्नसूरिविरचितायां वैशेषिकमतप्रकटनो नाम पञ्चमः प्रकाशः भा. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अर्हम्

# अथ षष्ठोऽधिकारः

§ ५१०. अथ मीमांसकमतं जैमिनीयापराह्वयं प्रोच्यते। जैमिनीया वेषेण सांख्या इवैक-दण्डास्त्रिदण्डा धातुरक्तवाससो मृगचर्मोपवेशनाः कमण्डलुधरा मुण्डशिरसः संन्यासिप्रभृतयो द्विजाः। तेषां वेद एव गुरुर्न पुनरन्यो वक्ता गुरुः। ते एव स्वयं तव संन्यस्तं संन्यस्तमिति भाषन्ते। यज्ञो-पवीतं च प्रक्षाल्य त्रिर्जलं पिबन्ति।

§ ५११. ते द्विधा, एके याज्ञिकादयः पूर्वमीमांसावादिनः, अपरे तूत्तरमीमांसावादिनः। तत्र पूर्वमीमांसावादिनः कुकर्मविवर्जिनो, यजनादिषट्कर्मकारिणो, ब्रह्मसूत्रिणो गृहस्थाश्रमसंस्थिताः शूद्रान्नादिवर्जका भवन्ति। ते च द्वेधा भाट्टाः प्राभाकराश्च षट् पञ्च प्रमाणप्ररूपिणः।

§ ५१२. ये तूत्तरमीमांसावादिनः, ते वेदान्तिनो ब्रह्माद्वैतमेव मन्यन्ते। "सर्वमेतदिदं ब्रह्म" [ छान्दो. ३।१४।१ ] इति भाषन्ते प्रमाणं च यथा तथा वदन्ति। एक एवात्मा सर्वशरीरेषूपलभ्यत इति जल्पन्ति।

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥१॥ [ त्रि. ता. ५।१२ ]

§ ५१०. अब मीमांसक—जैमिनीय मतका वर्णन करते हैं। ये सांख्य परिव्राजकोंकी तरह एक-दण्डधारी और त्रिदण्डधारी होते हैं, ये गेरुआ वस्त्र पहनते हैं, मृगचर्मपर बैठते हैं, कमण्डलु रखते हैं तथा सिर मुँड़ाते हैं। इनके संन्यासी आदि द्विज होते हैं। इनका वेद ही गुरु है, वेदके सिवाय अन्य कोई वक्ता सर्वज्ञ आदि गुरु नहीं है। इसलिए ये अपने-आप संन्यासदीक्षा लेते हैं। स्वयं संन्यास लेते समय ये 'तुम्हें संन्यास दीक्षा दी गयी' इस वाक्यका उच्चारण करते हैं। यज्ञोपवीतको धोकर तीन बार जल पीते हैं।

§ ५११. ये पूर्व मीमांसावादी तथा उत्तर मीमांसावादीके भेदसे दो प्रकारके होते हैं। पूर्व-मीमांसावादी यज्ञ आदि क्रियाकाण्डमें मुख्य रूपसे प्रवृत्ति करते हैं, याज्ञिक क्रियाकाण्डी हैं। ये कुकर्मोंसे निवृत्त होकर यजन-याजन, अध्ययन-अध्यापन, दान और प्रतिग्रह इन छह ब्राह्मण कर्मोंका अनुष्ठान करनेवाले तथा ब्रह्मसूत्रको धारण करनेवाले होते हैं। ये गृहस्थाश्रममें रहते हैं तथा शूद्रके अन्न, जल आदिका परहेज रखते हैं। मीमांसकोंमें कुमारिल भट्टके शिष्य भाट्ट प्रत्यक्ष आदि छह प्रमाणोंको मानते हैं तथा प्रभाकर गुरुके शिष्य प्राभाकर अभाव प्रमाणके सिवाय बाकी पाँच प्रमाणोंको स्वीकार करते हैं।

§ ५१२. उत्तरमीमांसावादी वेदान्ती मात्र अद्वैत ब्रह्मको मानते हैं। उनका कौमी नारा है 'सर्वमेतदिदं ब्रह्म—यह सब कुछ ब्रह्मरूप है'। अपनी शक्ति-भर इस अद्वैतको युक्तियोंसे सिद्ध करनेका प्रयत्न भी करते हैं। उनका कहना है कि एक ही ब्रह्म सभी प्राणियोंके शरीरमें भासमान होता है। कहा भी है—"एक ही भूतात्मा सिद्ध ब्रह्म प्रत्येक भूत–प्राणी आदिमें रम रहा है। वही

१. तत एव म. १, २ प. २। २. वर्जिता यज –म. १, २। ३. कर्मणां का – म. २। ४. सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ..."—छान्दोग्योप. ३।१४।१। त्रि. म. ना. १।३। "ब्रह्म खल्विदं वाव सर्वम्'''।"—मैत्र्युप. ४।६।३।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति[1] वचनात् । "पुरुष एवेदं[2] सर्वं यद्भूतं यच्च भाव्यम्" [ ऋक्. १०।९०।२ ] इति वचनाच्च । आत्मन्येव लयं मुक्तिमाचक्षते, न त्वपरां कामपि मुक्तिं मन्यन्ते[3] । ते च द्विजा एव भगवन्नामधेयाश्चतुर्धाभिधीयन्ते कुटीचर–बहूदक–हंस–परमहंस–भेदात् । तत्र त्रिदण्डी सशिखो ब्रह्मसूत्री गृहत्यागी यजमानपरिग्रही सकृत्पुत्रगृहेऽश्नन् कुट्यां निवसन् कुटीचरः[4] उच्यते । कुटीचरतुल्यवेषो विप्रगेहनैराश्यभिक्षाशनो विष्णुजापपरो नदीनीरस्नायी बहूदकः कथ्यते । ब्रह्मसूत्रशिखाभ्यां रहितः कषायाम्बरदण्डधारी ग्रामे चैकरात्रं नगरे च त्रिरात्रं निवसन् विधूमेषु विगताग्निषु विप्रगेहेषु भिक्षां भुञ्जानस्तपःशोषितविग्रहो देशेषु भ्रमन् हंसः समुच्यते । हंस एवोत्पन्नज्ञानश्चातुर्वर्ण्यगेहभोजी स्वेच्छया दण्डधार[5] ईशानीं[6] दिशं गच्छन् शक्तिहीनतायामनशनग्राही वेदान्तैकध्यायी परमहंसः

---

एक रूपसे तथा अनेक रूपसे जलमें चन्द्रमाकी तरह चमचमाता है।" "जो कुछ हो चुका तथा जो होनेवाला है वह सब ब्रह्म ही है" ब्रह्ममें लय हो जाना ही मुक्ति है। इस ब्रह्मलयावस्थाके सिवाय अन्य किसी प्रकारकी मुक्ति वेदान्तियोंको इष्ट नहीं है। ये ब्राह्मण ही होते हैं तथा 'भगवत्' शब्दसे पुकारे जाते हैं। इनके कुटीचर, बहूदक, हंस और परमहंस ये चार भेद होते हैं। त्रिदण्डधारी, शिखा रखनेवाले, ब्रह्मसूत्रको धारण करनेवाले, यजमानोंके यहाँ भोजन करनेवाले, घरको त्यागकर कुटिया बनाकर रहनेवाले कुटीचर कहे जाते हैं। ये एकाध बार अपने पुत्रके यहाँ भी भोजन कर लेते हैं। बहूदकोंका वेष कुटीचरोंके समान ही होता है। ये ब्राह्मणोंके घर भिक्षावृत्तिसे नीरस भोजन करते हैं, विष्णुको जपते हैं। बहूदक—बहुत जलवाली नदीमें स्नान करनेके कारण बहूदक कहे जाते हैं। हंस साधु ब्रह्मसूत्र तथा शिखा नहीं रखते, ये कषायले वस्त्र पहनते हैं, दण्ड धारण करते हैं, गाँवमें एक रात तथा नगरमें तीन रात निवास करते हैं, धुआँ निकलना बन्द हो जानेपर, आग बुझ जानेपर ब्राह्मणोंके घर भिक्षावृत्तिसे भोजन करते हैं। ये कठिन तपस्याओंसे शरीरको कृश करके देश-विदेश विहार करते रहते हैं। हंस साधुओंको जब तत्त्वज्ञान उत्पन्न हो जाता है तब वे ही परमहंस कहे जाते हैं। परमहंस साधु ब्राह्मण-शूद्र चारों वर्णोंके यहाँ भिक्षा-भोजन करते हैं। ये इच्छानुसार कभी दण्ड ले भी लेते हैं कभी नहीं भी लेते। जब ये अशक्त हो जाते हैं तब ईशान दिशामें जाकर अनशन—उपवास ग्रहण कर लेते हैं। इनके अध्ययनका एकमात्र

---

१. ब्र. वि. ११। २. एवेदं क.। ३. मन्वते भ. २। ४. "कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत्। पात्रं विसृजेत्। पवित्रं विसृजेत्। दण्डाँल्लोकांश्च विसृजेदिति होवाच। अत ऊर्ध्वममन्त्रवदाचरेत्। ऊर्ध्वगमनं विसृजेत्। औषधवदशनमाचरेत्। त्रिसंध्यादौ स्नानमाचरेत्। संधिं समाधावात्मन्याचरेत्। सर्वेषु वेदेष्वारण्यकमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेदिति ॥"—आरुणि. २। "कुटीचको बहूदको हंसः परमहंसः तुरीयातीतोऽवधूतश्चेति। कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः। बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याष्टकवलाशी हंसो जटाधारी त्रिपुण्ड्रोऽर्ध्वपुण्ड्रधारी असंक्लृप्तमाधुकरान्नाशी कौपीनखण्डतुण्डधारी। परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकरात्रान्नादनपरः करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी। तुरीयातीतो गोमुखः फलाहारी। अन्नाहारी चेद्गृहत्रये देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः। अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः। आतुरो जीवति चेत् क्रमसंन्यासः कर्तव्यः कुटीचकबहूदकहंसानां ब्रह्मचर्याश्रमादितुरीयाश्रमवत् कुटीचकादीनां संन्यासविधिः। परमहंसादित्रयाणां च कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलुर्न दण्डः सार्ववर्णैकभैक्षाटनपरत्वं जातरूपधरत्वं विधिः।" —ना. प. उ. ५।१। शाट्यायनी. ११। ५. दण्डधार आ.। ६. ऐशानीं म. २।

समाख्यायते। एतेषु चतुर्षु परः परोऽधिकः। एते च चत्वारोऽपि केवलब्रह्माद्वैतवादसाधनैकव्यसनिनः शब्दार्थयोर्निरासायानेका युक्तीः स्फोरयन्तोऽनिर्वाच्यतत्त्वे यथा व्यवतिष्ठन्ते तथा खण्डनतर्कादभियुक्तैरवसेयम्। नात्र तन्मतं वक्ष्यते इह तु सामान्येन शास्त्रकारः पूर्वमीमांसावादिमतमेव विभणिषुरेवमाह—

§ ५१३. जैमिनीयाः पुनः प्राहुः सर्वज्ञादिविशेषणः।
देवो न विद्यते[2] कोऽपि यस्य मानं वचो भवेत् ॥६८॥

§ ५१४. व्याख्या—जैमिनीयास्तु ब्रुवते। सर्वज्ञादीनि विशेषणानि यस्य स सर्वज्ञादिविशेषणः सर्वज्ञः सर्वदर्शी वीतरागः सृष्टयादिकर्ता चेत्यादिविशेषणवान्[3] कोऽपि प्रागुक्तदर्शनसंमतदेवानामेकतरोऽपि देवो—दैवतं[4] न विद्यते, यस्य देवस्य वचो—वचनं मानं—प्रमाणं भवेत्। प्रथमं तावद्देव एव वक्ता न वर्तते, कुतस्तत्प्रणीतानि वचनानि संभवेयुरिति भावः। तथाहि—पुरुषो न सर्वज्ञः मानुषत्वात् रथ्यापुरुषवत्।

§ ५१५. अथ किंकरायमाणसुरासुरसेव्यमानता त्रैलोक्यसाम्राज्यसूचकछत्रचामरादिविभूत्यन्यथानुपपत्तिरस्ति सर्वज्ञे विशेष इति चेत्; मायाविभिरपि कीर्तिपूजालिप्सुभिरिन्द्रियजालवशेन तत्प्रकटनात्। यदुक्तं त्वद्यूथ्येनैव समन्तभद्रेण—

---

विषय है वेदान्त। दिन-रात ब्रह्मके स्वरूपका विचार करते रहते हैं। इन चारोंमें क्रमशः कुटीचरसे बहूदक, बहूदकसे हंस तथा हंससे परमहंस उत्कृष्ट होते हैं। ये चारों ही मात्र ब्रह्माद्वैतकी सिद्धिमें अपनी सारी शक्ति लगा देते हैं। इन्हें ब्रह्माद्वैतके साधनकी चिरकालीन आदत हो जाती है। ये ब्रह्मके सिवाय अन्य शब्द या पदार्थोंके निराकरणके लिए अनेकों युक्तियोंका जाल फैलाकर आखिरमें अनिर्वचनीय ब्रह्मकी सिद्धिमें वादकी समाप्ति करते हैं। अनिर्वचनीय तत्त्वकी सिद्धि तथा परपदार्थ खण्डनका युक्तिजाल खण्डनखण्डखाद्य नामक तर्क ग्रन्थ देखना चाहिए। यहाँ उनके मतका कथन नहीं किया जायेगा। यहाँ तो ग्रन्थकार सामान्य रूपसे पूर्वमीमांसक मतके व्याख्यानकी इच्छासे उसीका निरूपण करते हैं—

**§ ५१३. जैमिनीय मतानुयायी कहते हैं कि सर्वज्ञत्व आदि गुणोंका धारक कोई देवता ही नहीं है, जिसके वचन प्रमाण माने जा सकें ॥६८॥**

§ ५१४. जैमिनीय तो कहते हैं कि—सर्वज्ञत्व आदि विशेषणोंवाले कोई सर्वज्ञ सर्वदर्शी वीतराग या सृष्टिकर्ता आदि विशेषणशाली, जैन आदि दर्शनोंमें बताये हुए एक भी देवकी सत्ता नहीं है जिसके वचनोंको सच्चा प्रमाणभूत माना जाय। जब बोलनेवाला अतीन्द्रियार्थका प्रतिपादन करनेवाला यथार्थवक्ता कोई देव ही नहीं है तब कोई भी आगम सर्वज्ञ प्रणीत कैसे कहा जा सकता है? अतः यह अनुमान स्पष्ट ही किया जा सकता है कि—कोई भी पुरुष सर्वज्ञ नहीं है क्योंकि वह मनुष्य है जैसे कि गली-गली चक्कर काटनेवाला कोई अवारा मूर्ख आदमी।

§ ५१५. शंका—भाई, साधारण गलीके घुमक्कड़ अवारेको हम भी सर्वज्ञ नहीं कहते। हम तो उस महान् व्यक्तिको सवज्ञ मानते हैं, जिसकी सुर और असुर सेवा—चाकरी करते हैं तथा जिसके पास त्रिलोकके साम्राज्यका सूचन करनेवाली छत्र, चमर, सिंहासन आदि विभूतियाँ पायी जाती हैं। देव और दानवोंका सेवक होना तथा छत्र, चमर आदि लोकोत्तर विभूतियाँ सर्वज्ञताके बिना हो ही नहीं सकतीं। अतः इन अविनाभावी विभूतियोंके आधारसे आप सर्वज्ञकी सत्ता क्यों नहीं मानते?

---

१. शब्दाशब्दयोर्निरासानिरासयोरनेका म. २। २. कश्चित् यस्य म. २। ३. वान्न कोऽपि म. २। ४. –वतं विद्य–म. २। ५. तावदेव वक्ता म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"देवागमनभोयानचामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान् ॥१॥" [ आप्तमी. श्लो. १ ]

अथ यथानादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिप्रक्रियया विशोध्यमानस्य निर्मलत्वम्, एवमात्मनोऽपि निरन्तरज्ञानाद्यभ्यासेन[1] विगतमलत्वात्सर्वज्ञत्वं किं संभवेदिति मतिः, तदपि न; अभ्यासेन हि शुद्धेस्तारतम्यमेव भवेत्, न पुनः परमः प्रकर्षः। न हि नरस्य लङ्घनमभ्यासतस्तारतम्यवदप्युपलभ्यमानं सकललोकविषयमुपलभ्यते। उक्तं च[2]—

"दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति।
न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि ॥१॥"

§ ५१६. अथ मा भून्मानुषस्य[3] सर्वज्ञत्वं, ब्रह्मविष्णुमहेश्वरादीनां तु तदस्तु। ते हि देवाः, संभवत्यपि तेष्वतिशयसंपत्। यत्कुमारिलैः[4]—

"अथापि दिव्यदेहत्वाद्ब्रह्मविष्णुमहेश्वराः।
कामं भवन्तु सर्वज्ञाः सार्वज्ञ्यं मानुषस्य किम् ॥१॥"

---

**समाधान**—आपकी बुद्धि बाहरी चमत्कारोंसे चमत्कृत हो रही है। मायावी इन्द्रजालिया जादूगर भी अपनी कीर्ति, पूजा आदिके लोभसे इन्द्रजालके द्वारा छत्र-चमर आदि विभूतियोंको प्रकट कर सकते हैं तथा करते भी हैं। वे देवोंके द्वारा अपनी सेवा-टहल भी दिखा सकते हैं। तो क्या इन बाहरी चमत्कारोंसे उन्हें भी सर्वज्ञ मान लिया जाय? आपके ही आचार्य श्रीसमन्तभद्रने कहा है कि—"देवोंका आना, आकाशमें अधर विहार करना तथा छत्र, चमर आदि विभूतियाँ तो मायावी जादूगरोंमें भी पायी जाती हैं। अतः मात्र इन विभूतियोंसे आप हम जैसे परीक्षकोंके महान् पूज्य नहीं हो सकते।"

**शंका**—जिस तरह कोई अनादिकालका मलीन भी सोना, सुहागा, तेजाब आदिसे मिट्टीकी घरियामें पकानेसे साफ करते-करते सोटंचका निर्मल आबदार सोना हो जाता है उसी तरह सतत ज्ञानाभ्यास तथा योग आदि प्रक्रियाओंसे आत्मा भी धीरे-धीरे कर्ममलसे रहित होकर शुद्ध हो सकती है। ऐसी शुद्ध आत्मा ज्ञानावरणरूप मलके हट जानेसे क्या सर्वज्ञ नहीं बन सकती? सर्वज्ञताके लिए ज्ञानावरणका नाश ही मुख्य रूपसे अपेक्षित होता है।

**समाधान**—अभ्याससे शुद्धिकी तरतमता—कमोवेशी तो हो सकती है पर उसका परम प्रकर्ष होना अत्यन्त असम्भव है। अभ्यास करनेसे थोड़ा-बहुत हेर-फेर ही सम्भव है। कोई मनुष्य ऊँचा कूदनेका कितना ही अभ्यास क्यों न करे, पर वह कभी भी सारे लोकको नहीं लाँघ सकता। यह तो हो सकता है कि उसकी ऊँचा कूदनेकी शक्तिमें तरतमता—कुछ अधिक विकास हो जाय, वह चार हाथकी जगह आठ हाथ कूदने लगे, पर सारे लोकके कूदनेका परम प्रकर्ष कभी भी नहीं हो सकता। कहा भी है—"जो मनुष्य अभ्यास करते-करते दस हाथ ऊँचा उछल जाता है, वह सैकड़ों अभ्यास करनेपर भी सौ योजन ऊँचा नहीं कूद सकता।"

§ ५१६. **शंका**—अच्छा, यदि साधारण मनुष्योंको अभ्याससे सर्वज्ञता उत्पन्न नहीं हो सकती, तो न सही; पर ब्रह्मा, विष्णु और महेश्वर आदि तो देव हैं, उनमें तो सर्वज्ञतारूपी अतिशय हो ही सकता है। वे अलौकिक दिव्य पुरुष हैं। कुमारिलने स्वयं ही कहा है कि "यदि दिव्य देहवाले ब्रह्मा, विष्णु और महेश्वर आदि सर्वज्ञ हो भी जायें तो भी साधारण मनुष्यमें सर्वज्ञता कैसे सिद्ध

---

१. -द्यभासेन म. १, प. १, २।—द्यवभासेन म. २। २. श्लोकोऽयं कुमारिलोक्तमिति कृत्वा तत्त्वसंग्रहे (पृ. ८२६) उद्धृतः। ३. अथ मानुष्यस्य न सर्वज्ञत्वं म. २। ४. श्लोकोऽयं कुमारिलोक्तत्वेन तत्त्वसंग्रहे (का. ३२०८) उद्धृतः। प्रमाणमी. पृ. १२।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति तदपि न रागद्वेषमूलनिग्रहानुग्रहग्रस्तानां कामासेवनविह्वलानामसंभाव्यमिदमेषामिति ।

§ ५१७. न च प्रत्यक्षं तत्साधकम् "संबद्धं वर्त्तमानं च गृह्यते चक्षुरादिना" [ मी. प्रत्यक्ष. सू. श्लो. ८४ ] इति वचनात् । न चानुमानम्; प्रत्यक्षदृष्ट एवार्थे तत्प्रवृत्तेः । न चागमः, सर्वज्ञस्यासिद्धत्वेन तदागमस्यापि विवादास्पदत्वात् । न चोपमानम्, तदपरस्यापि सर्वज्ञस्याभावादेव । न चार्थापत्तिरपि, सर्वज्ञसाधकस्यान्यथानुपपन्नपदार्थस्यादर्शनात् । ततः प्रमाणपञ्चकाप्रवृत्तेरभावप्रमाणगोचर एव सर्वज्ञः । प्रयोगश्चात्र–नास्ति सर्वज्ञः, प्रत्यक्षादिगोचरातिक्रान्तत्वात्, शशशृङ्गवदिति ॥६८॥

§ ५१८. यदि देवस्तद्वचनानि च न सन्ति, तर्हि कुतोऽतीन्द्रियार्थज्ञानमित्याशङ्क्याह–

तस्मादतीन्द्रियार्थानां साक्षाद्द्रष्टुरभावतः ।
नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिश्चयः ॥६९॥

§ ५१९. व्याख्या– तस्मात् ततः कारणात् । कुतो हेतुतः । इत्याह–अतीन्द्रियार्थानाम् इन्द्रिय-

---

हो सकती है?" तात्पर्य यह कि कुमारिलका झुकाव स्पष्ट रूपसे ब्रह्मा, विष्णु आदि दिव्य शरीरियोंको सर्वज्ञ माननेकी ओर है । अतः इन्हें सर्वज्ञ मान ही लेना चाहिए ।

**समाधान**—राग-द्वेष मूलक शिष्टानुग्रह तथा दुष्ट निग्रह करनेवाले कामसेवन आदि विकारोंसे युक्त सरागी ब्रह्मा, विष्णु आदिमें सर्वज्ञताकी बात करना सचमुच सर्वज्ञताका परिहास करना ही है ।

§ ५१७. सर्वज्ञकी सत्ता सिद्ध करनेकी शक्ति प्रत्यक्ष आदि किसी भी सदुपलम्भक प्रमाणमें नहीं है । प्रत्यक्ष तो असम्बद्ध तथा अवर्तमान सर्वज्ञकी सत्ता नहीं साध सकता; क्योंकि "सम्बद्ध और वर्तमान पदार्थ ही चक्षुरादि इन्द्रियोंसे गृहीत होते हैं ।" यह एक सर्वसम्मत सिद्धान्त है । प्रत्यक्षके द्वारा देखे गये पदार्थमें ही अनुमानकी प्रवृत्ति होती है अतः अत्यन्त परोक्ष सर्वज्ञको जाननेकी हिम्मत अनुमान भी नहीं कर सकता । जब सर्वज्ञ ही विचाराधीन है तब सर्वज्ञप्रणीत आगम असिद्ध होनेके कारण सर्वज्ञका साधक नहीं हो सकता । दूसरा कोई सर्वज्ञ नहीं दिखाई देता, जिससे उपमान सर्वज्ञकी सदृशता मिलाकर उसकी सत्ता साध सके । सर्वज्ञका साधक कोई अविनाभावी पदार्थ भी नहीं दिखाई देता, जिसके बलपर अर्थापत्ति सर्वज्ञकी सत्ता साधनेको तैयार हो सके । इस तरह सद्भावको साधनेवाले प्रत्यक्ष आदि पांच प्रमाणोंका विषय न होनेके कारण प्रमाणपंचकाभावमूलक अभाव प्रमाण ही सर्वज्ञको विषय करके उसकी सत्ता समूल उखाड़ फेंकेगा । इस तरह यह निर्बाध रूपसे कहा जा सकता है कि—सर्वज्ञ है ही नहीं, क्योंकि वह सदुपलम्भक प्रत्यक्ष आदि पांच प्रमाणोंका विषय नहीं होता, जैसे कि खरगोशका सींग ॥६८॥

§ ५१८. यदि सर्वज्ञ और सर्वज्ञप्रणीत आगम नहीं हैं तब अतीन्द्रिय पदार्थोंका परिज्ञान कैसे होगा ? इस शंकाका परिहार करते हुए कहते हैं—

**इस तरह जब अतीन्द्रिय पदार्थोंको कोई साक्षात्कार करनेवाला है ही नहीं, तब नित्य वेदवाक्योंसे ही अतीन्द्रियार्थोंका यथावत् परिज्ञान हो सकता है ॥६९॥**

§ ५१९. जब इन्द्रियोंके अगोचर अतीत अनागतकालीन पदार्थ, आत्मा, पुण्य-पाप, काल, स्वर्ग, नरक, परमाणु आदि देश काल स्वभावसे विप्रकृष्ट अतीन्द्रिय पदार्थोंका साक्षात्कार करने-

---

१. "सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः । निराकरणवच्छक्या न चासीदिति कल्पना ॥ न चागमेन सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् । नरान्तर प्रणीतस्य प्रामाण्यं गम्यते कथम् ॥"—मी. श्लो. चोदनासू. श्लो. ११७–८।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

विषयातीतपदार्थानामात्मधर्माधर्मकालस्वर्गनरकपरमाणुप्रभृतीनां साक्षात् [1]स्पष्टप्रत्यक्षावबोधेन द्रष्टुः ज्ञातुरभावतः असद्भावाद्धेतोः नित्येभ्यः अप्रच्युतानुत्पन्नस्थिरैकस्वभावेभ्यः अवधारणस्येष्टविषयत्वाद्वेदवाक्येभ्य एव यथार्थत्वविनिश्चयः अर्थानामनतिक्रमेण यथार्थं तस्य भावो यथार्थत्वं यथावस्थितपदार्थत्वं तस्य विशेषेण निश्चयो भवति। नित्यत्वेनापौरुषेयेभ्यो वेदवचनेभ्य एव यथावदतीन्द्रियाद्यर्थज्ञानं भवति, न पुनः सर्वज्ञप्रणीतागमादिभ्यः सर्वज्ञादीनामेवाभावादिति भावः। यथाहुस्ते[2]—

"अतीन्द्रियाणामर्थानां साक्षाद्द्रष्टा न विद्यते।
वचनेन हि नित्येन यः पश्यति स पश्यति ॥१॥"

§ ५२०. [3]नन्वपौरुषेयानां वेदानां कथमर्थपरिज्ञानमिति चेत्। अव्यवच्छिन्नानादिसंप्रदायेनेति ॥६९॥

§ ५२१. अथैतदेव दृढयन्नाह—

**अत एव पुरा कार्यो वेदपाठः प्रयत्नतः।**
**ततो धर्मस्य जिज्ञासा कर्तव्या धर्मसाधनी ॥७०॥**

§ ५२२. व्याख्या—अत एव सर्वज्ञाद्यभावादेव पुरा पूर्वं वेदपाठः ऋग्यजुः[4]सामाथर्वणानां पाठः प्रयत्नतः कार्यः। ततः किं कर्तव्यमित्याह–'ततो धर्मस्य' इति। ततो वेदपाठादनन्तरं धर्मस्य

---

वाला कोई पुरुषविशेष ही नहीं है तब उत्पाद-विनाशसे रहित सदा स्थिर रहनेवाले वेदवाक्योंसे ही जिस प्रकार पदार्थ स्थित हैं ठीक उसी रूपसे उनका यथावत् वास्तविक निश्चय होता है। सभी वाक्य इष्टका अवधारण करते हैं अतः वेदवाक्योंका ही अतीन्द्रियार्थ प्रतिपादनमें एकमात्र अधिकार समझना चाहिए। वेद अपौरुषेय हैं, इन्हें किसी पुरुषने नहीं बनाया है, ये नित्य हैं। इन सदा एकरूप रहनेवाले अपौरुषेय नित्य वेदवाक्योंसे ही धर्म आदि अतीन्द्रिय पदार्थोंका यथावत् परिज्ञान हो सकता है न कि सर्वज्ञके द्वारा कहे गये किसी आगमसे; क्योंकि जब सर्वज्ञ ही नहीं है तब तत्प्रणीत आगमकी सम्भावना हो नहीं की जा सकती। कहा भी है—"अतीन्द्रिय पदार्थोंका साक्षात्कार करनेवाला कोई सर्वद्रष्टा नहीं है। अतः नित्य वेदवाक्योंसे जो अतीन्द्रिय पदार्थोंको देखता है, जानता है वही सच्चा देखनेवाला है—अतीन्द्रियदर्शी है।"

§ ५२०. यद्यपि वेद अपौरुषेय हैं उनका कोई आदि प्रणेता नहीं है फिर भी उनके अर्थ तथा पाठकी परम्परा अनादिकालसे अविच्छिन्न रूपसे बराबर चली आती है, उसमें कभी कोई व्यवधान या विच्छेद नहीं पड़ा अतः उसके अर्थका यथार्थ निर्णय हो जाता है।

§ ५२१. इसी बातको और भी स्पष्ट करते हैं—

**इसीलिए सबसे पहले प्रयत्नपूर्वक वेदोंका स्वरोंके अनुसार पाठ करना चाहिए। इसके बाद धर्मको सिद्ध करनेके लिए धर्मकी जिज्ञासा—जाननेकी इच्छा उत्पन्न करनी चाहिए ॥७०॥**

§ ५२२. चूँकि सर्वज्ञ आदिका अभाव है इसलिए सर्वप्रथम ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद इन चारों वेदोंका ह्रस्वदीर्घादि स्वरोंके अनुसार पाठ करना चाहिए, इन्हें कण्ठस्थ कर लेना चाहिए। वेदोंको घोक लेनेके बाद धर्मको जाननेकी इच्छा करनी चाहिए। धर्म तो अतीन्द्रिय

---

१. स्पष्टं प्र–म. २। २. "तस्मादतीन्द्रियार्थानां...." इति पाठभेदेन श्लोकोऽयं कुमारिलोक्तमिति कृत्वा तत्त्वसंग्रहे (पृ. ८२८) उद्धृतः। ३. नन्वपौरुषेयानां कथं परि–म. २। ४. सामाथर्वणां वेदानां म. १, २, प. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

जिज्ञासा कर्तव्या। धर्मो ह्यतीन्द्रियः, ततः स कीदृक्केन प्रमाणेन[1] वा ज्ञास्यत इत्येवं ज्ञातुमिच्छा कार्या। सा कीदृशी धर्मसाधनी–धर्मसाधनस्योपायः ॥७०॥

§ ५२३. यतश्चैवं ततस्तस्य निमित्तं परीक्ष्यं निमित्तं च नोदना[2]। निमित्तं हि द्विविधं जनकं ग्राहकं च। अत्र तु ग्राहकं ज्ञेयम्। एतदेव विशेषिततरं प्राह—

**नोदनालक्षणो [3]धर्मो नोदना तु क्रियां प्रति।**
**प्रवर्तकं वचः प्राहुः स्वःकामोऽग्निं यथा यजेत् ॥७१॥**

§ ५२४. व्याख्या—नोद्यन्ते प्रेर्यन्ते श्रेयःसाधकद्रव्यादिषु प्रवर्त्यन्ते जीवा अनयेति नोदना–वेदवचनकृता प्रेरणेत्यर्थः। धर्मो नोदनया लक्ष्यते ज्ञायत इति नोदनालक्षणः। धर्मो ह्यतीन्द्रियत्वेन नोदनयैव लक्ष्यते नान्येन प्रमाणेन, प्रत्यक्षादीनां विद्यमानोपलम्भकत्वात्, धर्मस्य तु कर्तव्यतारूपत्वात्, कर्तव्यतायाश्च त्रिकालशून्यार्थरूपत्वात्, त्रिकालशून्यकार्यरूपार्थविषयविज्ञानोत्पादिका [4]चोदनेति [5]मीमांसकाभ्युपगमात्। अथ नोदनां व्याख्याति 'नोदना तु क्रियां' प्रति इत्यादि। नोदना पुनः क्रियां हवनसर्वभूताहिंसनादानादिक्रियां प्रति प्रवर्तकं वचो वेदवचनं प्राहुर्मीमांसका भाषन्ते।

है अतः वह 'किस प्रमाणसे कैसे जाना जा सकता है?' यह जिज्ञासा करनी चाहिए। यही धर्म-जिज्ञासा, धर्मसाधनका आद्य उपाय है। जब धर्म-जिज्ञासा हो जायेगी तब धर्मके जाननेके उपायोंकी खोज की जानी चाहिए। अतीन्द्रिय धर्मके जाननेके उपाय प्रत्यक्ष आदि तो हो ही नहीं सकते ॥७०॥

§ ५२३. उसके जाननेका एकमात्र निमित्त है नोदना—वेद। निमित्त दो प्रकारके होते हैं—एक तो जनक—उत्पन्न करनेवाले और दूसरे ग्राहक—ज्ञान करानेवाले। यहाँ वेद धर्मका ग्राहक-निमित्त ही विवक्षित है।

अब इसीका विशेष विवेचन करते हैं—

**धर्म नोदना रूप है। क्रियाके प्रवर्तक वचनोंको नोदना या चोदना कहते है। जैसे 'स्वर्ग चाहनेवाला अग्निहोत्र यज्ञ करे' यह वचन अग्निहोत्र यज्ञरूपी क्रियामें पुरुषको प्रवृत्ति कराता है अतः यह वचन नोदना—प्रेरणात्मक है ॥७१॥**

§ ५२४. जिसके द्वारा जीव कल्याणकारी द्रव्य आदिमें प्रेरित होकर प्रवृत्त होते हैं उस वैदिक वचनोंसे होनेवाली प्रेरणाको नोदना या चोदना कहते हैं। नोदनाके द्वारा धर्म लक्षित होता है अतः धर्मको नोदना लक्षण कहा है। धर्म अतीन्द्रिय होनेके कारण नोदना—वैदिक वचनोंसे ही जाना जाता है, अन्य प्रत्यक्ष आदि प्रमाणोंसे नहीं; क्योंकि प्रत्यक्ष आदि प्रमाण विद्यमान पदार्थोंके जाननेवाले हैं। धर्म कर्तव्यतारूप है तथा कर्तव्यता त्रिकालशून्य अर्थरूप है। मीमांसकोंने स्वयं बताया है कि चोदना—नोदना त्रिकालशून्य शुद्ध कार्यरूप अर्थका ज्ञान उत्पन्न करती है। तात्पर्य यह कि कर्तव्यता शुद्ध कार्यरूप है उसमें भूत-भविष्यत् या वर्तमान कालका कोई सम्पर्क नहीं है; अतः वह प्रत्यक्षादि प्रमाणोंका विषय नहीं हो सकती, वह तो वेदवाक्योंके द्वारा ही जानी जा सकती है। हवन, सब प्राणियोंपर दया, दान आदि क्रियाओंमें प्रवर्तक—प्रवृत्ति करानेवाले वेद वचनोंको नोदना या चोदना कहते हैं। तात्पर्य यह कि हवन आदि क्रियाओंमें उनकी सामग्री जुटानेमें जो वेदवाक्य प्रेरक होते हैं उन्हें नोदना कहते हैं। वचनोंकी प्रवर्तकता दृष्टान्तसे बताते

१. न विज्ञास्य–म. १, २, प. १, २। २. चोदना भ. २। ३. "चोदनालक्षणोऽर्थो धर्मः ॥२॥ चोदना—इति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमि—इति दृश्यते।" —मी. सू. शाबरभा. १।१।२। ४. नोदनेति भ. २। ५. मीमांसाभ्युप–म. १, २, प. १, २, क.। ६. पुनर्हवन म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

हवनादिक्रियाविषये यदेव प्रेरकं वेदस्य वचनं सैव नोदनेति भावः। प्रवर्तकं तद्वचनमेव निदर्शनेन दर्शयति 'स्वःकामोऽग्निं यथा यजेत्' इति। यथेत्युपदर्शनार्थः। स्वः स्वर्गो कामो यस्य स स्वःकामः पुमान् स्वःकामः सन्। अग्निं–वह्निं यजेत्–तर्पयेत्। अत्रेदं श्लोकबन्धानुलोम्येनेत्थमुपन्यस्तम्। अन्यथा त्वेवं भवति। "अग्निहोत्रं जुहुयात्स्वर्गकामः" [ मैत्र्यु. ६।३ ] इति प्रवर्तकवचनस्योपलक्षणत्वात्। निवर्तकमपि वेदवचनं नोदना ज्ञेया, यथा "न हिंस्यात्सर्वभूतानि" [ ] इति। एवं न वै हिंस्रो भवेत् इत्याद्यपि। आभिर्नोदनाभिर्नोदितो यदि यथा नोदनं यैर्द्रव्यगुणकर्मभिर्वा हवनादौ प्रवर्तते निवर्तते वा[1], तदा तेषां द्रव्यादीनां तस्याभीष्ट[2]स्वर्गादिफलसाधनयोग्यतैव धर्म इत्यभिधीयते। एतेन वेदवचनैः प्रेरितोऽपि यदि न प्रवर्तते[3] न निवर्तते वा विपरीतं वा प्रवर्तते, तदा तस्य नरकाद्यनिष्टफलसंसाधनयोग्यतैव द्रव्यादिसंबन्धिनी पापमित्युच्यत इत्यपि ज्ञापितं[4] द्रष्टव्यम्। इष्टानिष्टार्थसाधनयोग्यतालक्षणौ धर्माधर्माविति हि मीमांसकाः। उक्तं च शाबरे— "य एव श्रेयस्करः स एव धर्मशब्देनोच्यते" [ शाबरभा. १।१।२ ] अनेन द्रव्यादीनामिष्टार्थसाधनयोग्यता धर्मः इति प्रतिपादितं शबरस्वामिना। भट्टोऽप्येतदेवाह[5]—

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
नोदनालक्षणैः साध्या तस्मादेष्वेव धर्मता ॥१॥" [मी. श्लो. चोदना सू. श्लो. १९१ ]

है। 'यथा' शब्द उदाहरण दिखानेके लिए प्रयुक्त होता है। स्वः—स्वर्ग चाहनेवाला पुरुष अग्निका तर्पण करे। श्लोकमें अक्षरोंकी संख्या नियत रहती है अतः 'स्वःकामोऽग्निं यजेत्' यह कह दिया है। वास्तविक रूपमें वह कथन 'अग्निहोत्रं जुहुयात् स्वर्गकामः'—स्वर्गाभिलाषी अग्निहोत्र यज्ञ करे, इस प्रवर्तक वेदवाक्यका ही द्योतक है। वेदवचन निवर्तक भी होते हैं अतः नोदना प्रवर्तक तथा निवर्तक दोनों ही रूप होती है। जैसे 'किसी प्राणीको न मारे', 'हिंसक न बने' इत्यादि। इन नोदना—प्रेरणात्मक वाक्योंसे प्रेरित होकर जो पुरुष प्रेरणाके अनुसार जिन द्रव्य, गुण और क्रियाओंसे हवन आदिमें प्रवृत्ति तथा हिंसा आदिसे निवृत्ति करता है उन द्रव्य, गुण और क्रियाओंमें रहनेवाली इष्ट स्वर्गादिफलोंके साधन होनेकी योग्यता ही धर्म है। पुरुष रूप द्रव्य, जिन बुद्धि आदि गुणोंसे समिध तथा हवनीय द्रव्यको इकट्ठा करनेकी हलन-चलन क्रिया करता है उन सब द्रव्य, गुण और क्रियाओंमें स्वर्गादिफलके साधन होनेकी जो योग्यता—शक्ति है वही धर्म कहलाती है। इससे यह भी सूचित होता है कि वैदिक वचनोंको सुनकर उनसे प्रेरणा पाकर भी जो पुरुष जब हवन आदिमें प्रवृत्ति या हिंसा आदिसे निवृत्ति नहीं करता अथवा अन्य कार्योंमें प्रवृत्ति करता है तब उसको अन्यथा प्रवृत्तिमें साधनभूत द्रव्य, गुण और क्रियाओंकी जो नरक आदि अनिष्ट फलोंमें साधन होनेकी योग्यता—शक्ति है उसे पाप या अधर्म कहते हैं। तात्पर्य यह कि इष्ट साधन पदार्थोंकी योग्यताको धर्म तथा अनिष्ट साधन पदार्थोंकी योग्यता—शक्तिको अधर्म कहते हैं। यह शक्ति तो अतीन्द्रिय होनेसे प्रत्यक्षादि प्रमाणोंका विषय न होकर वेदसे ही जानी जाती है। शाबर-भाष्यमें कहा है कि—"जो श्रेयस्कर हो वही धर्म है।" इस वाक्यसे शबर स्वामीने द्रव्य, गुण आदिकी इष्ट अर्थको सिद्ध करनेकी योग्यता ही धर्म शब्दके द्वारा प्रतिपादित की है। कुमारिल भट्टने भी यही कहा है कि—"पुरुषकी प्रीतिको श्रेय कहते हैं। यह प्रीति नोदना—वेदवाक्यके द्वारा प्रतिपादित यागादिमें उपयुक्त होनेवाले द्रव्य, गुण और क्रियाओंसे उत्पन्न होती है अतः स्वर्गादिरूप प्रीतिके साधन द्रव्य, गुण आदिमें ही धर्मरूपता है। यद्यपि ये द्रव्य, गुण और क्रियाएँ इन्द्रियगम्य

१. वा तेषां तदा द्र–म. २। २. –ष्टफलस्वर्गादिफल भ. १. २, प. २, क। –३. ते विप –म. २।
४. ज्ञातव्यं भ. २। ५. तदाह म. २।

Jain Education International  For Private & Personal Use Only  www.jainelibrary.org

"[1]एषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता।
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ॥२॥
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः।" [मी. श्लो. चोदना सू. श्लो. १३-१४]

इति ॥७१॥

**§ ५२५. अथ विशेषलक्षणं प्रमाणस्याभिधानीयं, तच्च सामान्यलक्षणाविनाभूतम्, ततः प्रथमं प्रमाणस्य [2]सामान्यलक्षणमभिधीयते। 'अनधिगतार्थाधिगन्तृ प्रमाणम्' इति। अनधिगतः अगृहीतो योऽर्थो बाह्यः स्तम्भादिस्तस्याधिगन्तृ आधिक्येन संशयादिव्युदासेन परिच्छेदकम्। अनधिगतार्थाधिगन्तृ प्रागज्ञातार्थपरिच्छेदकम्, समर्थविशेषणोपादानाज्ज्ञानं विशेष्यं लभ्यते, अगृहीतार्थग्राहकं ज्ञानं प्रमाणमित्यर्थः। अत्र 'अनधिगत' इति पदं धारावाहिज्ञानानां गृहीतग्राहिणां प्रामाण्यपराकरणार्थम्। 'अर्थ' इति ग्रहणं संवेदनं स्वसंविदितं भवति, स्वात्मनि क्रियाविरोधात्, किन्तु, नित्यं परोक्षमेवेति ज्ञापनार्थम्। तच्च परोक्षं ज्ञानं [3]भाट्टमतेऽर्थप्राकट्यफलानुमेयम्[4] प्रभाकरमते[5] संवेदनाख्यफलानुमेयं वा प्रतिपत्तव्यम्।**

---

हैं फिर भी उनका इन्द्रियगम्य रूप धर्म नहीं है। किन्तु वेदके द्वारा प्रतिपादित उनकी श्रेयः-साधनता ही धर्म है। वेद द्रव्यगुणादिकी श्रेयः-साधनताका सदा प्रतिपादन करता है अतः द्रव्य, गुण आदि श्रेयःसाधन रूपसे ही धर्म कहे जाते हैं। यही कारण है कि उनकी वह श्रेयःसाधनता रूप शक्ति, जिसे धर्म कहते हैं, इन्द्रियोंका विषय नहीं होती" ॥७१॥

§ ५२५. प्रमाणोंके विशेष लक्षणका कथन सामान्य लक्षणके कथन पूर्वक होता है, पहले प्रमाणका सामान्य लक्षण कहते हैं। "नहीं जाने गये अनधिगत पदार्थको जाननेवाला ज्ञान प्रमाण है" अनधिगत—नहीं जाने गये खम्भा आदि बाह्य पदार्थोंको संशय आदिका निराकरण कर अधिकतासे विशेषताके साथ जाननेवाला ज्ञान प्रमाण है। यद्यपि लक्षण वाक्य में 'ज्ञान' पद नहीं है फिर 'अगृहीत पदार्थको जाननेवाला' इस समय विशेषणकी सामर्थ्यसे विशेष्यभूत ज्ञानका बोध हो जाता है। तात्पर्य यह कि अगृहीत पदार्थको जाननेवाला ज्ञान प्रमाण है। अनधिगत पदसे गृहीत—जाने गये पदार्थोंको जाननेवाले गृहीतग्राहिधारावाहि ज्ञानोंकी प्रमाणताके निराकरणके लिए दिया गया है। 'अर्थ' पदसे सूचित होता है कि ज्ञान केवल अर्थको ही जानता है अपने स्वरूपको नहीं। ज्ञान स्वसंवेदी नहीं है, क्योंकि अपने-आपमें क्रियाका विरोध है। वह तो नित्य ही परोक्ष है। भाट्टमतमें इस परोक्ष ज्ञानका अर्थ प्राकट्य नामक फलसे अनुमान होता है। ज्ञानके द्वारा जब पदार्थ जाना जाता है तब वह ज्ञात होता है और उसमें ज्ञातता या प्राकट्य नामका धर्म उत्पन्न होता है। इसी प्राकट्यसे ज्ञानके स्वरूपका अनुमान होता है। यदि ज्ञान न होता तो पदार्थमें ज्ञातता या प्राकट्य उत्पन्न नहीं हो सकता। प्राभाकर मतमें उस परोक्ष ज्ञानका प्रमाणके संवेदन रूप फलसे अनुमान होता है।

---

१. एषामिन्द्रिय –भ. २। २. "एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमाणम् इति प्रमाणलक्षणं सूचितम्।"–शास्त्रदी. पृ. १५२। "अनधिगतार्थगन्तृ प्रमाण इति भट्टमीमांसका आहुः।"–सि. चन्द्रोदय, पृ. १०। ३. मते प्राकट्य –भ. २। ४. यं भाट्टप्रभा –म. १, प. १, २, आ., क.। "अप्रत्यक्षा नो बुद्धिः प्रत्यक्षोऽर्थः, स हि बहिर्देशसंबद्धः प्रत्यक्षमनुभूयते, ज्ञाते त्वनुमानादवगच्छति बुद्धिम्।" –शाबरभा. १।१।५ "अर्थापत्तिः ज्ञानस्य प्रमाणम्, सा च अर्थस्य ज्ञातत्वान्यथानुपपत्तिप्रभवा। प्रागर्थस्य ज्ञातत्वाभावान्नोत्पद्यते। ज्ञाते त्वर्थे पश्चात्तज्ज्ञातत्वानुपपत्त्या अर्थापत्तिप्रमाणमुपजायते" –मी. श्लो. टी. सू. १।१।५। शून्यवाद श्लो. १८१-१८२। "ज्ञानक्रिया हि सकर्मिका कर्मभूतेऽर्थे फलं जनयति पाकादिवत्।...तदेव च फलं कार्यभूतं कारणभूतं विज्ञानमुपकल्पयतीति सिद्धयत्यप्रत्यक्षमपि ज्ञानम्।" –शास्त्रदी. १।१।५। ५. "तस्मान्न बुद्धिविषयं प्रत्यक्षम्, अर्थविषयं हि तत् अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः।" –शाबरभा., पृ. ६७। बृहती. १।१।५।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ५२६. अथ प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं तन्नामानि तत्संख्यां चाह[1]—

प्रत्यक्षमनुमानं च शाब्दं चोपमया सह ।
अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥७२॥

§ ५२७. व्याख्या — प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावलक्षणानि[2] षट् प्रमाणानि जैमिनिमुनेः संमतानीत्यध्याहारः । चकाराः समुच्चयार्थाः । तत्राद्यानि पञ्चैव प्रमाणानीति प्रभाकरोऽभावस्य प्रत्यक्षेणैव ग्राह्यतां मन्यमानोऽभिमन्यते । षडपि तानीति भट्टो भाषते ॥७२॥

§ ५२८. अथ प्रत्यक्षस्य लक्षणमाचष्टे—

तत्र प्रत्यक्षमक्षाणां संप्रयोगे सतां सति ।
आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥७३॥

§ ५२९. व्याख्या—'तत्र' इति निर्धारणार्थः । इयमत्राक्षरघटना—सतां संप्रयोगे सति आत्मनोऽक्षाणां बुद्धिजन्मप्रत्यक्षमिति । [3]श्लोके तु बन्धानुलोम्येन व्यस्तनिर्देशः । सतां विद्यमानानां वस्तूनां संबन्धिनि [4]संप्रयोगे संबन्धे सति आत्मनो जीवस्येन्द्रियाणां यो बुद्धयुत्पादः तत्प्रत्यक्षमिति । सतामित्यत्र सत इत्येकवचनेनैव प्रस्तुतार्थसिद्धौ षष्ठीबहुवचनाभिधानम् बहूनामप्यर्थानां संबन्ध इन्द्रियस्य[5] संयोगः क्वचन भवतीति ज्ञापनार्थम् । अत्र जैमिनीयं सूत्रमिदम्—"सत्संप्रयोगे सति पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् ।" [ मी. सू. १।१।४ ] इति । व्याख्या—सता विद्यमानेन वस्तुनेन्द्रियाणां संप्रयोगे संबन्धे सति पुनरस्य यो ज्ञानोत्पादः, तत्प्रत्यक्षम् ।

---

५२६. अब प्रमाण विशेषके लक्षणोंकी या प्रमाणके विशेष लक्षणोंको कहनेकी इच्छासे पहले उनके नाम तथा उनकी संख्या बताते हैं—

**जैमिनिमतमें प्रत्यक्ष, अनुमान, शाब्द, उपमान, अर्थापत्ति और अभाव ये छह प्रमाण हैं ॥७२॥**

§ ५२७. जैमिनि मुनि ने प्रत्यक्ष, अनुमान, आगम, उपमान, अर्थापत्ति और अभाव इन छह प्रमाणोंको माना है । 'च' शब्द समुच्चयार्थक है । प्रभाकर अभावको प्रत्यक्षके द्वारा ग्राह्य मानकर अर्थापत्ति पर्यन्त पांच ही प्रमाण स्वीकार करते हैं । भाट्ट अभावको भी प्रमाण मानते हैं, इनके मतमें छह ही प्रमाण हैं ॥७२॥

§ ५२८. अब प्रत्यक्षका लक्षण कहते हैं—

**विद्यमान पदार्थोंसे इन्द्रियोंका सम्बन्ध—सन्निकर्ष होनेपर आत्माको जो बुद्धि उत्पन्न होती है उसे प्रत्यक्ष कहते हैं । लैङ्गिक—लिंगसे उत्पन्न होनेवाले ज्ञानको अनुमान कहते हैं ॥७३॥**

§ ५२९. तत्र—जैमिनि मतमें । श्लोकमें छन्द रचनाके अनुरोधसे प्रत्यक्षके लक्षण शब्दोंका बेसिलसिले निर्देश किया है, पर वस्तुतः उनका क्रम इस प्रकार है—'सतां संप्रयोगे सति आत्मनोऽक्षाणां बुद्धिजन्म प्रत्यक्षम्' विद्यमान वस्तुओंके सम्बन्ध होनेपर आत्माको इन्द्रियोंके द्वारा जो बुद्धि उत्पन्न होती है वह प्रत्यक्ष है । यद्यपि 'सतः' ऐसा एकवचनका प्रयोग करनेसे भी वर्तमान पदार्थोंसे इन्द्रियोंके सन्निकर्षका सूचन हो सकता था फिर भी 'सताम्' यह बहुवचनका प्रयोग इस बातकी खास सूचना देता है कि—कभी-कभी, कहीं-कहीं बहुत पदार्थोंके साथ भी इन्द्रियोंका सम्बन्ध होता है । जैमिनिका प्रत्यक्षसूत्र यह है—"सत्संप्रयोगे सति पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" विद्यमान वस्तुसे इन्द्रियोंका सम्बन्ध होनेपर पुरुषको जो ज्ञान उत्पन्न होता है उसे प्रत्यक्ष कहते हैं ।

---

१. च प्राह भ. २ । २. –नि जै–भ. २ । ३. श्लोकेऽनुबन्धानु–भ. २ । ४. —नि प्रयोगे भ. १, २, प. १, २, क. । ५. इन्द्रियसं –भ. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

§ ५३०. अयमत्र भावः—यद्विषयं विज्ञानं तेनैवार्थेन संप्रयोगे इन्द्रियाणां प्रत्यक्षम्, प्रत्यक्षाभासं त्वन्यसंप्रयोगजं यथा मरुमरीचिकादिसंप्रयोगजं जलाविज्ञानमिति। अथवा सत्संप्रयोगजत्वं विद्यमानोपलम्भनत्वमुच्यते। तत्र सति–विद्यमाने सम्यक्प्रयोगः अर्थेष्विन्द्रियाणां व्यापारो योग्यता वा, न तु नैयायिकाभ्युपगत एव संयोगादिः। तस्मिन्सति शेषं प्राग्वत्। इतिशब्दः प्रत्यक्षलक्षणसमाप्तिसूचकः।

§ ५३१. अथानुमानं लक्षयति पुनःशब्दस्य व्यस्तसंबन्धात्। अनुमानं पुनर्लैङ्गिकम् लिङ्गाङ्कितं लैङ्गिकम्। लिङ्गाल्लिङ्गिज्ञानमनुमानमित्यर्थः। तत्रेदमनुमानलक्षणस्य सूचामात्रमुक्तम्। संपूर्णं त्विदं तल्लक्षणम् "ज्ञातसंबन्धस्यैकदेशदर्शनादसंनिकृष्टेऽर्थे बुद्धिरनुमानम्" [ शाबर भा. १।१।५ ] इति शाबरमनुमानलक्षणम्। व्याख्या—अवगतसाध्यसाधनाविनाभावसंबन्धस्य पुंस एकदेशस्य साधनस्य दर्शनादसंनिकृष्टे परोक्षेऽर्थे बुद्धिर्ज्ञानमनुमानमिति ॥७३॥

§ ५३२. अथ शाब्दमाह—

**शाब्दं शाश्वतवेदोत्थमुपमानं तु कीर्तितम्।**
**प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य साधनम् ॥७४॥**

§ ५३३. व्याख्या—शाश्वतः अपौरुषेयत्वान्नित्यो यो वेदः तस्मादुत्था उत्थानं यस्य तच्छाश्वतवेदोत्थम्। अर्थाद्वेदशब्दजनितं ज्ञानं शाब्दं प्रमाणम्। अस्येदं लक्षणम्—"शब्दज्ञानादसंनि-

---

§ ५३०. भावार्थ—जिस पदार्थका ज्ञान होता है उसी अर्थसे इन्द्रियोंका सम्बन्ध होनेपर प्रत्यक्ष होता है। अन्य पदार्थसे सम्बन्ध होनेपर अन्य पदार्थका ज्ञान होना प्रत्यक्षाभास है जैसे मरुस्थलकी रेत और सूर्यकी किरणों आदिसे सम्बन्ध होनेपर उत्पन्न होनेवाले भ्रान्त जल ज्ञान आदि। अथवा, सत्सम्प्रयोगजका अर्थ है विद्यमान पदार्थोंकी उपलब्धि करनेवाला। विद्यमान पदार्थमें इन्द्रियोंके सम्यक् प्रयोग-व्यापार या योग्यताको सत्सम्प्रयोग कहते हैं न कि नैयायिकके द्वारा माने गये संयोग आदि सन्निकर्षोंको ही। श्लोकमें आया हुआ 'इति' शब्द प्रत्यक्षके लक्षणकी समाप्तिका सूचक है।

§ ५३१. पुनः शब्द पहले कहे गये अनुमानका सूचन करता है। लिंगसे उत्पन्न होनेवाले लैंगिक ज्ञानको अनुमान कहते हैं। लिंगसे लिंगी—साध्यका ज्ञान अनुमान है। यह अनुमानके लक्षण की साधारण सूचना है। पूरा लक्षण तो शाबर भाष्यमें इस प्रकार बताया है—'ज्ञातसंबन्धस्यैकदेशदर्शनादसंनिकृष्टेऽर्थे बुद्धिरनुमानम्'—साध्य और साधनके अविनाभावका यथार्थ परिज्ञान रखनेवाले पुरुषको एकदेश-साधनके देखनेसे असन्निकृष्ट—परोक्ष साध्य अर्थका ज्ञान होना अनुमान कहलाता है ॥७३॥

§ ५३२. अब आगमका लक्षण कहते हैं—

**नित्य वेदसे उत्पन्न होनेवाले ज्ञानको शाब्द–आगम कहते हैं। प्रसिद्ध अर्थकी सदृशतासे अप्रसिद्धकी सिद्धि करना उपमान है ॥७४॥**

§ ५३३. शाश्वत—अपौरुषेय नित्य वेदसे उत्पन्न होनेवाला, अर्थात् वेदके शब्दोंसे होनेवाला ज्ञान शाब्द प्रमाण है। शाबरभाष्यमें शब्दका यह लक्षण किया है—'शब्दज्ञानादसंनिकृष्टेऽर्थे

---

१. –संयोगजं म. १, २, प. १, २। २. सत्प्रयोग–म. २। ३. व्यस्तं–म. २। ४. –कं यल्लिंगिज्ञानमनु–म. २। ५. सूत्रामात्र—प. १, २; सूत्रमात्र—म. २। ६. –कृष्टे परोक्षेऽर्थे बुद्धिरनुमानलक्षणम् म. २। ७. परोक्षार्थे म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कृष्टेऽर्थे बुद्धिः शाब्दम्" [ शाबरभा. १।१।५ ] इति[1] । अयं शब्दोऽस्यार्थस्य वाचक इति यज्ज्ञानं तच्छब्दज्ञानम् । तस्मादनन्तरं शब्दे श्रुते ज्ञानादसंनिकृष्टेऽर्थे अप्रत्यक्षेऽप्यर्थे घटादौ बुद्धिज्ञानं शाब्दं प्रमाणम् । शब्दादप्रत्यक्षे वस्तुनि यज्ज्ञानमुदेति तच्छाब्दमित्यर्थः । अत्र मते शब्दस्येदं स्वरूपं प्ररूप्यते । नित्या आकाशवत्सर्वगताश्च वर्णाः । ते च ताल्वोष्ठादिभिरभिव्यज्यन्ते न पुनरुत्पाद्यन्ते । विशिष्टानुपूर्वीका वर्णाः शब्दः । नित्यः[2] शब्दार्थयोर्वाच्यवाचकसंबन्ध इति ।

§ ५३४. अथोपमानमाह 'उपमानं तु' इत्यादि । उपमानं पुनः कीर्तितम् । तत्किंरूपमित्याह 'प्रसिद्धार्थस्य' इत्यादि । प्रसिद्ध उपलब्धोऽर्थो गवादिर्यस्य पुंसः स प्रसिद्धार्थः ज्ञातगवादिपदार्थ इत्यर्थः । तस्य गवयदर्शने साधर्म्याद्गवयगतसादृश्यात्परोक्षे गवि अप्रसिद्धस्य पुरानुपलब्धस्य सादृश्यसाधनं ज्ञानम् । अस्येदं सूत्रं "उपमानमपि सादृश्यादसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" [ शाबरभा. १।१।८ ] इति । गवयसादृश्यादसंनिकृष्टेऽर्थे परोक्षस्य गोः सादृश्ये गोस्मरणस्येति । गवि स्मरणं यस्य पुंसः स गोस्मरणः तस्य गोस्मरणवत इत्यर्थः । शेषं स्पष्टम् । तत्रेदं तात्पर्यम्—येन प्रतिपत्त्रा गौरुपलब्धो न गवयो न चातिदेशवाक्यं 'गौरिव गवय' इति श्रुतम्, तस्यारण्ये पर्यटतो गवयदर्शने प्रथम उपजायते परोक्षे गवि सादृश्यज्ञानं यदुत्पद्यते 'अनेन सदृशो गौः' इति, तदुपमानमिति । तस्य[3] विषयः सादृश्यविशिष्टः परोक्षो गौः, तद्विशिष्टं वा

---

बुद्धिः शाब्दम्' 'यह शब्द इस अर्थका वाचक है' इस संकेतज्ञानको शब्दज्ञान कहते हैं। इस संकेत ग्रहणके बाद शब्दको सुननेपर जो परोक्ष अर्थका भी ज्ञान होता है उसे शाब्द प्रमाण कहते हैं। प्रत्यक्ष भी घट-पटादि पदार्थोंका शाब्द ज्ञान होता है। तात्पर्य यह कि शब्दसे होनेवाले अप्रत्यक्ष वस्तुविषयक ज्ञानको शाब्द कहते हैं। मीमांसक लोग वर्णोंको आकाशकी तरह नित्य तथा सर्वगत मानते हैं। तालु, मुख, नासिका आदिसे ये वर्ण प्रकट होते हैं, इनकी उत्पत्ति नहीं होती। विशिष्ट आनुपूर्वी-रचनावाले वर्ण ही शब्द कहलाते हैं। शब्द भी नित्य हैं। शब्द और अर्थका वाच्यवाचक सम्बन्ध भी नित्य है।

§ ५३४. उपमानका लक्षण—प्रसिद्ध—उपलब्ध हैं गौ आदि पदार्थ जिसको उस प्रसिद्धार्थ—गौ आदिको अच्छी तरहसे जाननेवाले पुरुषको गवय—रोजको देखते ही गवयमें रहनेवाली समानतासे परोक्ष गौमें गवयके सादृश्यका ज्ञान होना उपमान है। यद्यपि गौमें गवयकी समानता मौजूद थी परन्तु उपमानके पहले पुरुषको उसकी समानताका ज्ञान नहीं था। उपमान प्रमाणसे 'गौ इस गवयके समान है' यह सादृश्य ज्ञान हो जाता है। उपमानका लक्षणसूत्र यह है 'उपमानमपि सादृश्यादसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोस्मरणस्य'—गवयकी सदृशतासे परोक्ष—सामने अविद्यमान गौके सादृश्यका ज्ञान होना उपमान है। यह उपमान गौका स्मरण करनेवाले पुरुषको ही होता है। तात्पर्य-जिस प्रतिपत्ता—जाननेवाले ज्ञाताने गौको तो देखा है पर आज तक गवयको नहीं देखा और न 'गायके समान गवय होता है' इस अतिदेश—परिचय वाक्यको ही सुना है उस पुरुषको एक दिन जंगलमें घूमते समय एकाएक गवय दिखाई देता है। वह पहले ही पहले गवयको देखकर उससे परोक्ष गौकी समानता मिलाता है और समझ लेता है कि—'इसके समान गौ है' यह परोक्ष गौमें होनेवाला गवय-सादृश्यज्ञान उपमान कहलाता है।

---

१. "शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम् ।"—शाबर भा. १।१।५। २. "अपौरुषेयः शब्दस्यार्थेन संबन्धः ।" —शाबरभा. १।१।५। ३. "तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥"—मी. श्लो. उपमान. श्लो. ३७–३८ ।



Jain Education International　For Private & Personal Use Only　www.jainelibrary.org

सादृश्यमिति। अस्य चानधिगतार्थाधिगन्तृतया प्रामाण्यमुपपन्नं, यतोऽत्र गवयविषयेण प्रत्यक्षेण गवय एव विषयीकृतो न पुनरसंनिहितस्य गोः सादृश्यम्। यदपि तस्य पूर्वं गौरिति प्रत्यक्षमभूत्, तस्यापि गवयोऽत्यन्तमप्रत्यक्ष एवेति कथं गवि तदपेक्षं तत्सादृश्यज्ञानम्। तदेवं गवयसदृशो गौरिति प्रागप्रतिपत्तेरनधिगतार्थाधिगन्तृपरोक्षे गवि गवयदर्शनात्सादृश्यज्ञानम् ॥७४॥

§ ५३५. अथार्थापत्तिलक्षणमाह—

**दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना।**
**क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥७५॥**

§ ५३६. व्याख्या—प्रत्यक्षादिभिः षड्भिः प्रमाणैर्दृष्टः प्रसिद्धो योऽर्थः, तस्यानुपपत्त्या-अन्यथासंभवेन तु-पुनः कस्याप्यन्यस्य अदृष्टस्यार्थस्य कल्पना यद्बलेन यस्य ज्ञानस्य बलेन सामर्थ्येन क्रियते। 'दृष्टाद्यनुपपत्त्या' इति पाठे तु दृष्टः प्रमाणपञ्चकेन आदिशब्दात् श्रुतः शाब्दप्रमाणेन तस्य दृष्टस्य श्रुतस्य चार्थस्यानुपपत्त्या कस्याप्यर्थस्य कल्पना यद्बलेन क्रियत इति प्राग्वत्। असावदृष्टार्थकल्पनारूपं ज्ञानमेवार्थापत्तिरुदाहृता। अत्रेदं सूत्रम्—"अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यदृष्टार्थकल्पना" [ शाबरभा. १।१।५ ] इति। अत्र प्रमाणपञ्चकेन दृष्टः शब्देन श्रुतश्चार्थौ मिथोवैलक्षण्यज्ञापनार्थं पृथक्कृत्योक्तौ स्तः। शेषं तुल्यम्। इदमुक्तं भवति-प्रत्यक्षादिप्रमाणषट्कविज्ञातोऽर्थो येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिः।

§ ५३७. तत्र प्रत्यक्षपूर्विकार्थापत्तिः यथा[3]ग्नेः प्रत्यक्षेणोष्णस्पर्शमुपलभ्य दाहकशक्तियोगोऽ-

---

सादृश्यविशिष्ट गौ या गौविशिष्ट सादृश्य उपमानका प्रमेय—विषय है। यह उपमान अनधिगत—अभी तक अज्ञात—पदार्थको जाननेके कारण प्रमाण है; क्योंकि गवयको जाननेवाले प्रत्यक्षने तो मात्र गवयको ही जाना है, वह परोक्ष गौकी सदृशताको नहीं जानता। पहले जो गायविषयक प्रत्यक्ष हुआ था उसने तो गवयको स्वप्नमें भी नहीं जाना था। गायविषयक प्रत्यक्षके लिए जब गवय अत्यन्त परोक्ष था, तब उसके द्वारा गवयकी अपेक्षा गौमें सादृश्यज्ञान हो ही नहीं सकता था। इस तरह 'गवयके समान गौ है' यह प्रतीति न तो गवय प्रत्यक्षके द्वारा ही पहले हुई है और न गो प्रत्यक्षके द्वारा ही। अतः गवयको देखकर परोक्ष गौमें होनेवाला सादृश्य ज्ञान अगृहीत-ग्राही होनेसे प्रमाण है ॥७४॥

§ ५३५. अब अर्थापत्तिका लक्षण कहते हैं—

**दृष्ट पदार्थकी अनुपपत्तिके बलसे किसी अदृष्ट अर्थकी कल्पनाको अर्थापत्ति कहते हैं ॥७५॥**

§ ५३६. प्रत्यक्ष आदि छह प्रमाणोंसे प्रसिद्ध अर्थके अविनाभावसे किसी अन्य अदृष्ट—परोक्ष पदार्थकी कल्पना जिस ज्ञानके बलपर की जावे वह अर्थापत्ति है। 'दृष्टाद्यनुपपत्त्या' ऐसा पाठ भी कहीं-कहीं मिलता है। इसका अर्थ है—दृष्टप्रत्यक्ष आदि पांच प्रमाणोंसे प्रसिद्ध तथा आदि शब्दसे श्रुत—शाब्द प्रमाणसे प्रसिद्ध किसी भी अर्थकी अनुपपत्ति-असम्भवता दिखाकर जिस किसी अर्थकी कल्पना जिस ज्ञानसे की जाय उसे अर्थापत्ति कहते हैं। इस पाठमें प्रत्यक्षादि पांच प्रमाणों-से प्रसिद्ध दृष्ट पदार्थ तथा शाब्दप्रमाणसे प्रसिद्ध श्रुतपदार्थकी परस्पर विलक्षणता बतायी है। तात्पर्य यह कि प्रत्यक्ष आदि छह प्रमाणोंसे जाना गया पदार्थ जिसके बिना नहीं होता उस अविनाभावी परोक्ष पदार्थकी कल्पना अर्थापत्ति कहलाती है।

§ ५३७. प्रत्यक्षपूर्विका अर्थापत्ति—स्पार्शन प्रत्यक्षसे उष्णताका अनुभव कर अग्निको

---

१. तथापि तस्य गव—आ. क.। २. —न तु पुनः आ.। —न पुनः क.। ३. "तत्र प्रत्यक्षतो ज्ञानाद्दाहाद्दहनशक्तता।"—मी. श्लो. अर्थापत्ति. श्लो. ३।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

र्थापत्त्या प्रकल्प्यते । न हि शक्तिरध्यक्षपरिच्छेद्या नाप्यनुमानादिसमधिगम्या[1] अप्रत्यक्षया शक्त्या सह कस्यचिदर्थस्य संबन्धासिद्धेः । [2]अनुमानपूर्विकार्थापत्तिः यथादित्यस्य देशान्तरप्राप्त्या देवदत्तस्येव गत्यनुमाने ततोऽनुमानाद्गमनशक्तियोगोऽर्थापत्त्यावसीयते । [3]उपमानपूर्विकार्थापत्तिः यथा 'गवयवद्गौः' इत्युक्तेरर्थाद्वाहदोहादिशक्तियोगस्तस्य प्रतीयते, अन्यथा गोत्वस्यैवायोगात् । शब्दपूर्विकार्थापत्तिः श्रुतार्थापत्तिरितीतरनामिका यथा शब्दादर्थप्रतीतौ शब्दस्यार्थेन संबन्धसिद्धिः । [5]अर्थापत्तिपूर्विकार्थापत्तिः यथोक्तप्रकारेण शब्दस्यार्थेन[6] संबन्धसिद्धावर्थान्नित्यत्वसिद्धिः पौरुषेयत्वे शब्दस्य संबन्धायोगात् । [7]अभावपूर्विकार्थापत्तिः यथा जीवतो देवदत्तस्य गृहेऽदर्शनादर्थाद्बहिर्भावः । अत्र च चतसृभिरर्थापत्तिभिः शक्तिः साध्यते, पञ्चम्या नित्यता, षष्ठ्या गृहाद्बहिर्भूतो देवदत्त एव साध्यत इत्येवं षट्प्रकारार्थापत्तिः । अन्ये तु श्रु[8]तार्थापत्तिमन्यथोदाहरन्ति, पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणाद्रात्रिभोजनवाक्यप्रतीतिः[10], श्रुतार्थापत्तिः ।[11] § गवयोपमितस्य गोस्त-

छू करके अग्निमें दाहक—जलानेकी शक्तिकी कल्पना 'अग्निमें दाहक शक्ति है अन्यथा दाह नहीं हो सकता था' इस अर्थापत्तिसे की जाती है। अतीन्द्रिय शक्तिका प्रत्यक्षसे तो परिज्ञान हो ही नहीं सकता। अतीन्द्रिय परोक्ष शक्तिके साथ किसी पदार्थका अविनाभाव भी पहलेसे गृहीत नहीं है, अतः शक्तिका अनुमान भी नहीं किया जा सकता। अनुमानपूर्विका अर्थापत्ति—देवदत्तका एक देशसे दूसरे देशमें पहुँचना गतिपूर्वक देखकर सूर्यके भी एक देशसे देशान्तर पहुँचनेसे गमन करनेका अनुमान होता है। इस अनुमित गतिके द्वारा गमन शक्तिकी कल्पना 'सूर्यमें गमन शक्ति है अन्यथा वह गति नहीं कर सकता' इस अर्थापत्तिसे की जाती है। उपमानपूर्विका अर्थापत्ति—'गवयकी तरह गौ है' इस उपमानवाक्यके अर्थसे गौमें बोझा ढोना तथा दूध देने आदिकी शक्तिकी कल्पना करना। यदि उसमें बोझा ढोने और दूध देनेकी शक्ति नहीं है तो वह गाय ही नहीं हो सकती। शब्दपूर्विका अर्थापत्ति—शब्दसे अर्थकी प्रतीति देखकर शब्द और अर्थके वाच्यवाचक सम्बन्धकी कल्पना करना। इसे श्रुतार्थापत्ति भी कहते हैं। अर्थापत्तिपूर्विका अर्थापत्ति—शब्दपूर्विका अर्थापत्तिसे शब्द और अर्थके सम्बन्धको जानकर उस सम्बन्धके बलसे शब्दको नित्य और अपौरुषेय सिद्ध करना। शब्द यदि पौरुषेय—पुरुषकृत होगा तो उसमें नित्यसम्बन्ध नहीं बन सकेगा। अभावपूर्विका अर्थापत्ति—जीवित देवदत्तको घरमें न देखकर उसके बाहर होनेकी कल्पना करना। इनमें उपमानपूर्विका अर्थापत्तिपर्यन्त चार श्रुतार्थापत्तियोंसे शक्तिकी सिद्धि की जाती है। पाँचवीं अर्थापत्तिपूर्वक अर्थापत्तिसे नित्यता तथा छठीं अभावपूर्विका

१. -गम्या प्रत्यक्षश -भ. २। -गम्या प्रत्यक्षया श -प. १, २, क., आ.। २. "वह्नेरनुमिता सूर्ये यानात्तच्छक्तियोग्यता।" —मी. श्लो. अर्थापत्ति. श्लो. ३। ३. "गवयोपमिता या गोस्तज्ज्ञानग्राह्यता मता।" —मी. श्लो. अर्थापत्ति. श्लो. ४। ४. -शब्दयो भ. २। ५. "अभिधानप्रसिद्ध्यर्थमर्थापत्त्यावबोधितात्। शब्दे बोधकसामर्थ्यात्तन्नित्यत्वप्रकल्पनम्॥ अभिधा नान्यथा सिद्ध्येदितिवाचकशक्तताम्। अर्थापत्त्यावगम्यैवं तदनन्यगते पुनः॥ अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः॥" —मी. श्लो. अर्थापत्ति. श्लो. ५-७। ६. -न सिद्धा- भ. २। ७. "प्रमाणाभावनिर्णीतचैत्राभावविशेषितात्। गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता॥ तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत्।" —मी. श्लो. अर्थापत्ति. श्लो. ८-९। ८. "पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ। रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते॥" —मी. श्लो. अर्थापत्ति श्लो. ५१। ९. -त्तिमेवेदा- भ. २। १०. -प्रतिपत्तिः भ. १, २, प. १, २। ११. § एतदन्तर्गतः पाठो नास्ति भ. १, २, प. १, २।

Jain Education International　　For Private & Personal Use Only　　www.jainelibrary.org

ज्ञानग्राह्यताशक्तिरुपमानपूर्विकार्थापत्तिरिति §। इयं च षट्प्रकाराप्यर्थापत्तिर्नाध्यक्षम्, अतीन्द्रियशक्त्याद्यर्थविषयत्वात्। अत एव नानुमानमपि, प्रत्यक्षपूर्वकत्वात्तस्य, ततः प्रमाणान्तरमेवार्थापत्तिः सिद्धा ॥७५॥

§ ५३८. अथाभावप्रमाणं स्वरूपतः प्ररूपयति—

प्रमाणपञ्चकं[1] यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥७६॥

§ ५३९. व्याख्या—सदसदंशात्मके वस्तुनि प्रत्यक्षादीनि पञ्च प्रमाणानि सदंशं गृह्णते न पुनरसदंशम्। प्रमाणाभावलक्षणस्त्वभावोऽसदंशं गृह्णीते न पुनः सदंशम्। "अभावोऽपि प्रमाणाभावलक्षणो नास्तीत्यर्थस्यासंनिकृष्टस्य प्रसिद्धयर्थं प्रमाणम् [ शा. भा. १।१ ] इति वचनात्।

§ ५४०. अन्ये पुनरभावाख्यं प्रमाणं त्रिधा वर्णयन्ति[2]। प्रमाणपञ्चकाभावलक्षणोऽनन्तरोऽभावः प्रतिषिध्यमानाद्वा तदन्यज्ज्ञानम्[3], आत्मा[4] वा विषयग्रहणरूपेणानभिनिर्वृत्तस्वभाव[5] इति। ततः प्रस्तुतश्लोकस्यायमर्थः—प्रमाणपञ्चकं प्रत्यक्षादिप्रमाणपञ्चकं यत्र भूतलादावाधारे घटादेराधे-

---

अर्थापत्तिसे घरसे बाहर देवदत्तकी सत्ता सिद्ध की जाती है। कुछ आचार्य श्रुतार्थापत्तिका दूसरा ही उदाहरण देते हैं—'मोटा देवदत्त दिनको भोजन नहीं करता' इस वाक्यको सुनकर उसके रात्रिमें भोजन करनेकी कल्पना करना श्रुतार्थापत्ति है। इसी तरह गवयसे उपमित होनेवाली गायमें उपमान ज्ञानके ग्राह्य होनेकी शक्तिकी कल्पना करना उपमानपूर्विका अर्थापत्ति मानते हैं। यह छहों प्रकारकी अर्थापत्ति अतीन्द्रियशक्ति आदिको विषय करनेके कारण प्रत्यक्ष रूप नहीं हो सकती। चूँकि अनुमान भी प्रत्यक्ष पूर्वक ही होता है, अतः यह अनुमान रूप भी नहीं है। इस तरह अर्थापत्ति स्वतन्त्र प्रमाण ही है ॥७५॥

§ ५३८. अब अभाव प्रमाणका स्वरूप बताते हैं—

**वस्तुकी सत्ताके ग्राहक प्रत्यक्षादि पाँच प्रमाण जिस वस्तुमें प्रवृत्ति नहीं करते उसमें अभावप्रमाणकी प्रवृत्ति होती है ॥७६॥**

§ ५३९. वस्तु भावाभावात्मक है, उसमें सदंशकी तरह असदंश भी रहता है। प्रत्यक्षादि पाँचों प्रमाण वस्तुके सदंशको ही ग्रहण करते हैं असदंशको नहीं। प्रत्यक्षादि प्रमाण पंचकके अभावमें प्रवृत्त होनेवाला अभावप्रमाण वस्तुके असदंशको ही जानता है सदंशको नहीं। कहा भी है—"प्रमाणोंके अभावको अभावप्रमाण कहते हैं। यह 'नास्ति—नहीं है' इस अर्थकी सिद्धि करता है। इसे अभावको जाननेके लिए किसी प्रकारके सन्निकर्षकी आवश्यकता नहीं होती।"

§ ५४०. कोई आचार्य अभावप्रमाणको तीन रूपसे मानते हैं—१. प्रमाणपंचकका अभाव, २. जिसका निषेध करना है उस पदार्थके मात्र आधारभूत पदार्थका ज्ञान, ३. आत्माका विषयज्ञान रूपसे परिणत ही न होना। वे इस श्लोकका यह अर्थ करते हैं—प्रत्यक्षादि पाँच प्रमाण जिस

---

१. तुलना—"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते। वस्तुसत्ताऽवबोधार्थं तत्राभावप्रमाणता ॥" —मी. श्लो. अभाव. श्लो. १। २. "प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते। सात्मनः परिणामो वा विज्ञानं वान्यवस्तुनि ॥" —मी. श्लो. अभाव. श्लो. ११। "तत्र कुमारिलेन त्रिविधोऽभावो वर्णितः—आत्मनोऽपरिणाम एकः पदार्थान्तरविशेषज्ञानं द्वितीयः...प्रमाणनिवृत्तिमात्रात्मकस्तृतीयः" —तत्त्वसं. पं. पृ. ४७३। ३. तदज्ञानं म. २। ४. आत्मा वि —म. २। ५. —णामिनि —म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति श्रीतपागणनभोऽङ्गणदिनमणिश्रीदेवसुन्दरसूरिपदपद्मोपजीविश्रीगुणरत्नसूरिविरचितायां तर्करहस्यदीपिकायां षड्दर्शनसमुच्चयटीकायां जैमिनीयचार्वाकीयमततत्त्वस्वरूपनिर्णयो नाम षष्ठोऽधिकारः ॥

तत्समाप्तौ च समाप्तेयं तर्करहस्यदीपिकानाम्नी षड्दर्शनसमुच्चयवृत्तिः ।

---

इति श्री तपागच्छरूपी आकाशके सूर्य श्री देवसुन्दरसूरिके चरणोपजीवी श्री गुणरत्न सूरि द्वारा रची गयी षड्दर्शनसमुच्चयकी तर्करहस्यदीपिका नामकी टीकामें जैमिनीय और चार्वाकके मतके स्वरूपका निर्णय करनेवाला छठवाँ अधिकार पूर्ण हुआ ।

इस अधिकारकी समाप्तिके साथ ही साथ यह तर्करहस्यदीपिका नामकी षड्दर्शनसमुच्चय की वृत्ति भी समाप्त होती है ।

---

१. तपागणनभोंगण –प. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

# परिशिष्ट १

## श्रीसोमतिलककृता लघुवृत्तिः

सज्ज्ञानदर्पणतले विमलेऽत्र यस्य ये केचिदर्थनिवहाः प्रकटीबभूवुः ।
तेऽद्यापि भान्ति कलिकालजदोषभस्मप्रोद्दीपिता इव शिवाय स मेऽस्तु वीरः ॥१॥
जैनं यदेकमपि बोधविधायि वाक्यमेवं श्रुतिः फलवती भुवि येन चक्रे ।
चारित्रमाप्य वचनेन महत्तरायाः श्रीमान् स नन्दतु चिरं हरिभद्रसूरिः ॥२॥
संनिधेहि तथा वाणि षड्दर्शनाङ्कषड्भुजे । तथा षड्दर्शनव्यक्तिस्पष्टने प्रभवाम्यहम् ॥३॥
व्यासं विहाय संक्षेपरुचिसत्त्वानुकम्पया । टीका विधीयते स्पष्टा षड्दर्शनसमुच्चये ॥४॥

इह[1] हि श्रीजिनशासनप्रभावना[2]विभावकप्रभोदयभूरियशाश्चतुर्दशशतप्रकरणकरणोपकृतजिनधर्मो भगवान् श्रीहरिभद्रसूरिः षड्दर्शनप्रमाणपरिभाषास्वरूपजिज्ञासुशिष्यहितहेतवे प्रकरणमारिप्समानो [3]निर्विघ्नशास्त्रपरिसमाप्त्यर्थं स्वपरश्रेयोऽर्थं च समुचितेष्टदेवतानमस्कारपूर्वकमभिधेयमाह[4]—

**सद्दर्शनं जिनं नत्वा वीरं स्याद्वाददेशकम् ।**
**सर्वदर्शनवाच्योऽर्थः संक्षेपेण निगद्यते ॥१॥**

[5]अर्थो निगद्यतेऽभिधीयत इति संबन्धः । अर्थशब्दोऽत्र अभिधेयवाचको ग्राह्यः ।

**"अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु"** [ ] इत्यनेकार्थवचनात् । 'मया' इत्यनुक्तस्यापि गतार्थत्वात् । किंविशिष्टोऽर्थः । **सर्वदर्शनवाच्य** इति । सर्वाणि च तानि दर्शनानि बौद्धनैयायिकजैन[6]वैशेषिकसांख्यजैमिनीयादीनि समस्तमतानि वक्ष्यमाणानि तेषु वाच्यः कथनीयः । किं कृत्वा । **जिनं नत्वा** । सामान्यमुक्त्वा विशेषमाह । कं जिनम् । **वीरं** वर्द्धमानस्वामिनम् । वीरमिति साभिप्रायम् । प्रमाणवक्तव्यस्य परपक्षोच्छेदादिसुभटवृत्तित्वात् । भगवतश्च दुःखसंपादिविषमोपसर्गसहिष्णुत्वेन सुभटरूपत्वात् । तथा चोक्तम्—

**"विदारणात्कर्मततेर्विराजनात्तपःश्रिया विक्रमतस्तथाद्भुतात् ।**
**भवत्प्रमोदः किम[7]नाकनायकश्चकार ते वीर इति स्फुटाभिधाम् ॥"** [ ] इति ।

युक्तियुक्तं [8]ग्रन्थारम्भे वीरजिननमस्करणं प्रकरणकृतः । यद्वा आसन्नोपकारित्वेन युक्ततरमेव श्रीवर्द्धमानतीर्थकृतो नमस्करणम् । तमेव विशिनष्टि । किंभूतम् । **सद्दर्शनं** सत् शोभनं[9] दर्शनं शासनं सामान्यावबोधलक्षणं ज्ञानं सम्यक्त्वं वा यस्य स तमिति । ननु दर्शनचारित्रयोरुभयोरपि मुक्तयङ्गत्वात् किमर्थं सद्दर्शनमित्येकमेव विशेषणमाविष्कृतम् । न,[10] दर्शनस्यैव प्राधान्यात् । यत्सूत्रम्—

**"भट्ठेण चरित्ताउ[11] दंसणमिह दिढयरं गहेयव्वं ।**
**सिज्झंति चरणरहिया दंसणरहिया न सिज्झंति ॥"** [ ]

इति तद्विशेषणमेव युक्तम् । पुनः [12]किंभूतम् । **स्याद्वाददेशकम्** । स्यात् विकल्पितो वादः स्याद्वादः सदसन्नित्यानित्याभिलाप्यानभिलाप्यसामान्यविशेषात्मकस्तं दिशति भविकेभ्य उपदिशति यस्तम् । अत्रादिमार्द्धे

---

१. इह हि श्री—म. १ । २. नाविर्भाव—प. १, २ । ३. निर्विघ्नं प. १, २ । ४. —ह तथाहि प. १, २ । ५. व्याख्या अ—प. १, २ । ६. —कसांख्यजैनवै—प. १, २ । ७. नाकिना—मु., म. २ । ८. ग्रन्थप्रारम्भे म. २ । ९. शोभमानं मु., म. १, २ । १० ननु प. २ । ११. सुट्ठु-अरं दंसणं च गहियव्वं प. २ । १२. —नः कथम्भू —प. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भगवतोऽतिशयचतुष्टयमाक्षिप्तम् । सद्दर्शनमिति दर्शनज्ञानयोः[1] सहचारित्वा[2]ज्ज्ञानातिशयः । जिनं वीरमिति रागादिजेतृत्वात् अष्टकर्माद्यपायनिराकर्तृत्वाच्च अपायापगमातिशयः । स्याद्वाददेशकमिति वचनातिशयः । ईदृग्विधस्य निरन्तरभक्तिभरनिर्भरसुरासुरनिकायनिषेव्यत्वमानुषङ्गिकमिति पूजातिशयः, इति प्रथमश्लोकार्थः ॥१॥

कानि तानि दर्शनानीति व्यक्तितस्तत्संख्यामाह—

**दर्शनानि षडेवात्र मूलभेदव्यपेक्षया ।**
**देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभिः ॥२॥**

अत्र जगति प्रसिद्धानि **षडेव दर्शनानि** । एवशब्दोऽवधारणे । यद्यपि भेदप्रभेद[3]तया बहूनि दर्शनानि प्रसिद्धानि । यदुक्तं सूत्रे--

**"असियसयं किरियाणं अकिरियवाईण हुंति चुलसीई ।**
**अन्नाणिय सत्तट्ठी वेणइआणं च बत्तीसं ॥" [ ]**

इति त्रिषष्टयधिका त्रिशती[4] पाषण्डिकानाम् । बौद्धानां चाष्टादश निकायभेदाः, वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकादयो भेदाः । जैमिनेश्च शिष्यकृता बहवो भेदाः ।

**"उत्पलः कारिकां वेत्ति तन्त्रं वेत्ति प्रभाकरः ।**
**वामनस्तूभयं वेत्ति न किंचिदपि रेवणः ॥"**

अपरेऽपि बहूदककुटीचरहंसपरमहंसभाट्टप्राभाकरादयो बहवोऽन्तर्भेदाः । अपरेषामपि दर्शनानां देवतातत्त्वप्रमाणादिभिन्नतया बहुभेदाः प्रादुर्भवन्ति, तथापि परमार्थतस्तेषामेष्वेवान्तर्भावात् षडेवेति सावधारणं पदम् । ननु संघटमानानियतो भेदानुपेक्ष्य किमर्थं षडेवेत्याह । **मूलभेदव्यपेक्षया** । मूलभेदास्तावत् षडेव षट्संख्यास्तेषां व्यपेक्षया तानाश्रित्येत्यर्थः । [5]तानि च दर्शनानि **मनीषिभिः** पण्डितै**र्ज्ञातव्यानि** बोद्धव्यानि । केन प्रकारेणेति । **देवतातत्त्वभेदेन** । देवता दर्शनाधिष्ठायिकाः, तत्त्वानि च मोक्षसाधनानि रहस्यानि, तेषां भेदस्तेन पृथक्-पृथक् दर्शनदेवतादर्शनतत्त्वानि च ज्ञेयानीत्यर्थः ॥२॥

तेषामेव दर्शनानां नामान्याह—

**बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा ।**
**जैमिनीयं च नामानि दर्शनानाममून्यहो ॥३॥**

**अहो** इति इष्टामन्त्रणे । **दर्शनानां** मतानाम**मूनि नामानी**ति संग्रहः । ज्ञेयानीति क्रिया, अस्तिभवत्यादिवदनुक्ताप्यवगन्तव्या । तत्र **बौद्ध**मिति बुद्धो देवतास्येति बौद्धं सौगतदर्शनम् । **नैयायिकं** पाशुपतदर्शनम् । तत्र न्यायः प्रमाणमार्गस्तस्मादनपेतं नैयायिकमिति [6]व्युत्पत्तिः । **सांख्य**मिति कापिलदर्शनम् । आदिपुरुषनिमित्तेयं संज्ञा । **जैन**मिति जिनो देवतास्येति जैनमार्हतं दर्शनम् । **वैशेषिकम्** इति काणाददर्शनम् । दर्शनदेवतादिसाम्येऽपि नैयायिकेभ्यो द्रव्यगुणादिसामग्र्या विशिष्टमिति वैशेषिकम् । **जैमिनीयं** जैमिनिऋषिमतं भाट्टदर्शनम् । **चः** समुच्चयस्य[7] दर्शकः । एवं तावत् षड्दर्शननामानि ज्ञेयानि शिष्येणेत्यवसेयम् ॥३॥

अथ द्वारश्लोके प्रथममुपन्यस्तत्वाद्बौद्धदर्शनमेवादावाचष्टे—

**तत्र बौद्धमते तावद्देवता सुगतः किल ।**
**चतुर्णामार्यसत्यानां दुःखादीनां प्ररूपकः ॥४॥**

---

१. दर्शनज्ञानयोः **प. १, मु.** । २. –रित्वेन ज्ञा–**प. २** । ३. –भेदेन ब–**म. १** । ४. पाषण्डिनां **प. १, २** । ५. तानि द–**मु., म. १, २, प. २** । ६. इदं चिन्त्यम् । इत्थं हि न्याय्यमिति स्यात् । नैयायिकेति पदं तूक्थादिगणघटकन्यायशब्दादध्यववेदित्रन्यतरार्थकठका निष्पद्यते । **मु. टि.** । ७. –यस्पर्शकः **प. १, २** ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**तत्र** तस्मिन् बौद्धमते सौगतशासने । तावदिति प्रक्रमे सुगतो देवता बुद्धो देवता बुद्धभट्टारको दर्शनादिकरः किलेत्याप्तप्रवादे । तमेव विशिनष्टि[1] । कथंभूतस्तत्त्वनिरूपकत्वेन । प्ररूपको दर्शकः कथयितेति यावत् । केषामित्याह—**आर्यसत्यानाम्** । आर्यसत्यनामधेयानां तत्त्वानाम् । कतिसंख्यानामिति चतुर्णां चतूरूपाणाम् । किंरूपाणामित्याह । **दुःखादीनां** दुःखसमुदयमार्गनिरोधलक्षणानाम् । आदिशब्दोऽवयवार्थोऽत्र । यदुक्तम्—

**"सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा ।**
**चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत् ॥"** [ ]

एवंविधः सुगतो बौद्धमते देवता ज्ञेय इत्यर्थः ॥४॥

आदिममेव तत्त्वं विवृण्वन्नाह—

**दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।**
**विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥५॥**

**दुःखं** किमुच्यत इत्याशङ्कायां **संसारिणः स्कन्धाः** । संसरन्तीति संसारिणो विस्तरणशीलाः स्कन्धाः प्रचयविशेषाः । संसारेऽमी चयापचयरूपा भवन्तीत्यर्थः । ते च स्कन्धाः **पञ्च प्रकीर्तिताः** पञ्चसंख्याः कथिताः । के त इत्याह । **विज्ञानं वेदना संज्ञा संस्कारो रूपमेव चेति** । तत्र विज्ञानमिति-विशिष्टं ज्ञानं विज्ञानं सर्वक्षणिकत्वज्ञानम् । यदुक्तम्—

**"यत् सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे**
**सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा च सा ।**
**नाप्येकैव विधान्यथापि परकृन्नैव क्रिया वा भवेद्**
**द्वेधापि क्षणभङ्गसंगतिरतः साध्ये च विश्राम्यति ॥"** [ ] इति ।

विज्ञानम् । वेदनेति-वेद्यत इति वेदना पूर्वभवपुण्यपापपरिणामबद्धाः सुखदुःखानुभवरूपाः । तथा च भिक्षुर्भिक्षामटंश्चरणे कण्टके लग्ने प्राह—

**"इत एकनवतेः कल्पे शक्त्या मे पुरुषो हतः ।**
**तेन[2] कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥"** [ ] इत्यादि ।

संज्ञेति-संज्ञानामकोऽर्थः । सर्वमिदं सांसारिकं सचेतनाचेतनस्वरूपव्यवहरणं संज्ञामात्रं नाममात्रम् । नात्र कलत्रपुत्रमित्रभ्रात्रादिसंबन्धो घटपटादिपदार्थसार्थो वा पारमार्थिकः । तथा च तत्सूत्रम् । **"पञ्चेमानि भिक्षवः संज्ञामात्रं व्यवहारमात्रं कल्पनामात्रं संवृति-मात्रमतीतोऽध्वानागतोऽध्वा सहेतुको विनाश आकाशं पुद्गलाः"** [ ] इति । संस्कार इति-इह परभवविषयः संतानपदार्थनिरीक्षणप्रबुद्धपूर्वानुभूतसंस्का[3]रस्य प्रमातुः स एवायं देवदत्तः, सैवेयं दीपकलिके साद्याकारेण ज्ञानोत्पत्तिः संस्कारः । यदाह—

**"यस्मिन्नेव हि संतान आहिता कर्मवासना ।**
**फलं तत्रैव संधत्ते कार्पासे रक्तता यथा ॥"** [ ] इति

रूपमिति-रगरगायमाणपरमाणुप्रचयः । बौद्धमते हि स्थूलरूपस्य जगति विवर्तमानपदार्थजातस्य तद्दर्शनोपपत्तिभिर्निराक्रियमाणत्वात् परमाणव एव तात्त्विकाः । च पुनरर्थः[4] । एवेति पूरणार्थः[5] ॥५॥

दुःखनामधेयमार्यसत्यं पञ्चभेदतया निरूप्य अथ समुदयतत्त्वस्य स्वरूपमाह—

**समुदेति यतो लोके रागादीनां गणोऽखिलः ।**
**आत्मात्मीयस्वभावाख्यः[6] समुदयः स संमतः ॥६॥**

**यतो** यस्माल्लोके **रागादीनां** रागद्वेषमोहानाम**खिलः** समस्तो **गणः समुदेत्युद्भवति** ।[7] कीदृगित्याह ।

१. -ष्टि तत्त्वनिरूपकत्वेन कथंभूतो देवता प्ररू-प. १, २ । २. तत्कर्मणो विपा-प. १, २ । ३. पूर्वभवानुरूपसं. भ. १, २, मु. । ४-५. -र्थे- प. १, २ । ६. -स्वभावा- प. १, २ । ७. कीदृक्ष इ- प. १, २ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

**आत्मात्मीयस्वभावाख्यः** । अयमात्मा, अयं चात्मीयः, पदे पदसमुदायोपचारादयं परः अयं च परकीय इत्यादिभावो रागद्वेषनिबन्धनं तदाख्यस्तन्मूलो रागादीनां गणः । आत्मात्मीयरूपेण रागरूपः, परपरकीयपरिणामेन च द्वेषरूपो **यतः समुदेति स समुदयः** समुदयो नाम तत्त्वं **संमतो** बौद्धदर्शनेऽभिमत इति ॥६॥

अथ तृतीयचतुर्थतत्त्वे प्रपञ्चयन्नाह—

**क्षणिकाः सर्वसंस्कारा इत्येवं वासना तु या ।**
**स मार्ग इति विज्ञेयो निरोधो मोक्ष उच्यते ॥७॥**

**सर्वसंस्काराः क्षणिकाः** । सर्वेषां विश्वत्रयविवरविवर्तमानानां घटपटस्तम्भाम्भोरुहादीनां द्वितीयादिक्षणेषु स एवायं स एवायमित्याद्युल्लेखेन ये संस्कारा ज्ञानसंताना उत्पद्यन्ते ते विचारगोचरगताः क्षणिकाः । यत्प्रमाणयन्ति, सर्वं सत् क्षणिकम्, अक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधादिति वादस्थलमभ्यूह्यं क्षणिकत्वाविशेषकम् । विशेषोपपत्तिश्च समग्रं तावदौत्पत्तिकं पदार्थकदम्बकं घटपटादिकं मुद्गरादिसामग्रीसाकल्ये विनश्वरमाकलय्यते ।[1] तत्र योऽस्य प्रान्त्यावस्थायां विनाशस्वभावः स पदार्थोत्पत्तिसमये विद्यते, न वा । अथ विद्यते चेत्; आपतितं तदुत्पत्तिसमयानन्तरमेव विनश्वरत्वम् । अथेदृश एव स्वभावो यत्कियन्तमपि कालं स्थित्वा विनष्टव्यम् । एवं चेन्मुद्गरादिसंनिधानेऽप्येष एव तस्य स्वभाव इति भूयोऽपि तावत्कालं स्थेयम् । एवं मुद्गरादिघातशतपातेऽपि न विनाशो जातं कल्पान्तस्थायित्वं घटस्य । तथा च जगद्व्यवहारव्यवस्थालोपपातकपङ्किलतेत्यभ्युपेयमनिच्छताऽपि[2] क्षणक्षयित्वं पदार्थानाम् । प्रयोगस्त्वेवम् ।[3] वस्तु उत्पत्तिसमयेऽपि विनश्वररूपं, विनश्वरस्वभावत्वाद्, यद्विनश्वरं तदुत्पत्तिसमयेऽपि तत्स्वरूपं यथा अन्त्यक्षणवर्तिघटस्य स्वरूपम्, विनश्वरस्वभावं च रूपरसादिकमुदयत आरभ्येति स्वभावहेतुः ।

ननु यदि क्षणक्षयिणो भावाः कथं तर्हि स एवायमिति वासनाज्ञानम् । उच्यते—निरन्तरसदृशापरापरक्षणनिरीक्षणचैतन्योदयादविद्यानुबन्धाच्च पूर्वक्षणप्रलयकाल एव दीपकलिकायामिव सैवेयं दीपकलिकेति संस्कारमुत्पाद्य तत्सदृशमपरक्षणान्तरमुदयते । तेन समानाकारज्ञानपरम्परापरिचयचिरतरपरिणामान्निरन्तरोदयाच्च पूर्वक्षणानामत्यन्तोच्छेदेऽपि स एवायमित्यध्यवसायः प्रसभं प्रादुर्भवति । दृश्यते[4] चावलूनपुनरुत्पन्नेषु नखकेशकलापादिषु स एवायमिति प्रतीतिः । तथेहापि किं न संभाव्यते सुजनेन । **तस्मात्सिद्धं** साधनमिदं यत्सत्तत् क्षणिकमिति । युक्तियुक्तं **च क्षणिकाः सर्वसंस्कारा इत्येवं वासना** इति । प्रस्तुतार्थमाह । एवं **या वासना स मार्गो** नामार्यसत्यम्; **इह** बौद्धमते, **विज्ञेयो**ऽवगन्तव्यः । **तु**शब्दः पाश्चात्यार्थसंग्रहः पूर्वसमुच्चयार्थे । चतुर्थमार्यसत्यमाह । **निरोधः** किमित्याशङ्कायां **मोक्ष उच्यते** । मोक्षोऽपवर्गः । सर्वक्षणिकत्वसर्वनैरात्म्यवासनारूपो निरोधो नामार्यसत्यमभिधीयत इत्यर्थः ॥७॥

अथ तत्त्वानि व्याख्याय तत्संलग्नान्येवायतनान्याह—

**पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।**
**धर्मायतनमेतानि द्वादशायतनानि च ॥८॥**

**पञ्चसंख्यानीन्द्रियाणि** स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि । **शब्दाद्या विषयाः पञ्च,** शब्दरूपरसस्पर्शगन्धरूपाः पञ्च विषया इन्द्रियव्यापारा इत्यर्थः । **मानसं** चित्तम् । **धर्मायतन**मिति धर्मप्रधानमायतनं [5]धर्मायतनं चैत्यस्थानमिति । **एतानि** द्वादशसंख्यानि ज्ञातव्यानि न केवलमेतानि **द्वादशायतनानि**[6] जातिजरामरणभवोपादानतृष्णावेदनास्पर्शनामरूपविज्ञानसंस्कारा[7][8] अविद्यारूपाणि द्वादशायतनानि । **चः** समुच्चये । अमी सर्वेऽपि संस्काराः क्षणिकाः । शेषं तदेवेति ॥८॥

---

१. –कल्यते **प. १, २** । २. –निच्छुनापि **प. १, २** । ३. –वम्–वस्तु उत्पत्तिसमयेऽपि विनश्वररूपं विनश्वरस्वभावत्वात् यद्विन— **मु.** । ४. च लून– प. १, २ । ५. 'धर्मायतनं' नास्ति **प. १, २, मु.** । ६. षडायत–**म. १, २** । ७. स्पर्शषडायतननाम—**म. १, २, प. १** । ८. —काराविः–**म. १, २** ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तत्त्वानि व्याख्यायाधुना प्रमाणमाह—

**प्रमाणे द्वे च विज्ञेये यथा सौगतदर्शने ।**
**प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा यतः ॥९॥**

**तथेति** प्रस्तुतानुसंधाने । **सौगतदर्शने** बौद्धमते । **द्वे प्रमाणे विज्ञेये** । **च** शब्दः पुनरर्थे । तदेवाह—**प्रत्यक्षमनुमानं च** । अक्षमक्षं प्रति गतं प्रत्यक्षमैन्द्रियकमित्यर्थः । अनुमीयत इत्यनुमानं लैङ्गिकमित्यर्थः । **यतः सम्यग्ज्ञानं** निश्चितावबोधो **द्विधा** द्विप्रकारः[1] । सम्यग्ग्रहणं मिथ्याज्ञाननिराकरणार्थम् । प्रत्यक्षानुमानाभ्यामेवेत्यर्थः ॥९॥

पृथक्पृथग्दर्शनापेक्षलक्षणसांकर्यभीरु कीदृक् प्रत्यक्षमत्र ग्राह्यमित्याशङ्कायामाह—

**प्रत्यक्षं कल्पनापोढमभ्रान्तं तत्र बुध्यताम् ।**
**त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वनुमानसंज्ञितम् ॥१०॥**

**तत्र** प्रमाणोभय्यां[2] **प्रत्यक्षं बुद्ध्यतां** ज्ञायतां शिष्येणेति । किंभूतं **कल्पनापोढं** शब्दसंसर्गवती प्रतीतिः कल्पना, तयापोढं रहितं निर्विकल्पकमित्यर्थः । अन्यच्चा**भ्रान्तं** भ्रान्तिरहितं रगरगायमाणपरमाणुलक्षणं[3] स्वलक्षणं हि प्रत्यक्षं निर्विकल्पकमभ्रान्तं च तद् घटपटादिबाह्यस्थूलपदार्थप्रतिबद्धं च ज्ञानं सविकल्पकम् । तच्च बाह्यस्थूलेऽर्थानां[4] तत्सन्मतानुमानोपपत्तिभिर्निराकरिष्यमाणत्वात् । नीलाकारपरमाणुस्वरूपस्यैव तात्त्विकत्वात् ।

ननु यदि बाह्यार्था न सन्ति, किंविषयस्तर्ह्ययं[5] घटपटशकटादि[6] बाह्यस्थूलप्रतिभास इति चेत्; निरालम्बन एवायमनादिवितथवासनाप्रवर्तितो व्यवहाराभासो निर्विषयत्वादाकाशकेशवत्स्वप्नज्ञानवद्वेति । यदुक्तम्—

"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥" [ ] इति ।
"बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते ।
वासनालुठितं चित्तमर्थाभासे प्रवर्तते ॥" [ ] इति ।
[7]**तदुक्तम्—निर्विकल्पकमभ्रान्तं च प्रत्यक्षम्** । [ ] इति ।

अनुमानलक्षणमाह—**तु** पुनः **त्रिरूपात्** पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्तिरूपाल्लिङ्**गतो** धूमादेरुपलक्षणाद्यल्लिङ्गिनो वैश्वानरादेर्**ज्ञानं** तद**नुमानसंज्ञित**[8]मनुमानप्रमाणमित्यर्थः । सूत्रे लक्षणं नान्वेषणीयमिति चरमपादस्य[9] नवाक्षरत्वेऽपि न दोष इति ॥१०॥

रूपत्रयमेवाह—

**रूपाणि पक्षधर्मत्वं सपक्षे विद्यमानता ।**
**विपक्षे नास्तिता हेतोरेवं त्रीणि [10]विभाव्यन्ताम् ॥११॥**

**हेतोरनुमानस्य त्रीणि रूपाणि** [11]**विभाव्यन्ता**मिति संबन्धः । तत्र **पक्षधर्मत्व**मिति । साध्यधर्मविशिष्टो धर्मी पक्षः । यथा 'पर्वतोऽयं वह्निमान् धूमवत्त्वात्' अत्र पर्वतः पक्षः, तत्र धर्मत्वम् । [12]धूमवत्त्वं वह्निमत्त्वेन व्याप्तं धूमोऽग्निं न व्यभिचरतीत्यर्थः[13] । **सपक्षे**[14] सत्त्वमिति यो यो धूमवान् स स वह्निमान् यथा महानसप्रदेशः ।

१. –रः प्रत्य– म. १, २ । २. –णोभये प. १ । ३. –क्षणस्व– प. १ । ४. –लपदार्थानां मान्तोप– प. २ । ५. घटकटश– प. १, म. १, २ । ६. –दिस्थूल– म, १, २, प. १ । ७. युक्त– म. १ । यदुक्त– म. २ । ८. –संज्ञकम– म. २ । ९. –मपास्य म. १, प. १, २, मु. । १०. –भाव्यताम् म. १, २ । ११. –भाव्यतामिति म. १, २ । १२. वह्निमत्त्वं धूमवत्त्वेन म. १, २, प. १, २ । १३. –तीति पक्ष इत्य– प. १, २, म. १, २ । १४. सत्त्वं यो मु. ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अत्र धूमवत्त्वेन हेतुना सपक्षे महानसे [ विद्यमानता ] सत्त्वं वह्निमत्त्वमस्तीत्यर्थः। **विपक्षे नास्तितेति** यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा जलाशये। जलाशये हि वह्निमत्त्वं व्यावर्तमानं व्याप्यं धूमवत्त्वमादाय व्यावर्तते[1] इति **एवं** प्रकारेण **हेतोः**[2] अनुमानस्य **त्रीणि** रूपाणि[3] ज्ञायन्तामित्यर्थः ॥११॥

उपसंहरन्नाह—

**बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः।**
**नैयायिकमतस्येतः कथ्यमानो निशम्यताम् ॥१२॥**

**अयं संक्षेपो निवेदितः** कथितः निष्ठां[4] नीत इत्यर्थः। कस्य। **बौद्धराद्धान्तवाच्यस्य** बौद्धानां राद्धान्तः सिद्धान्तस्तत्र वाच्योऽभिधातव्योऽर्थस्तस्य। **इतो**ऽनन्तरं **नैयायिकमतस्य**[5] शैवशासनस्य **कथ्यमानो निशम्यतां** संक्षेपः कथ्यमानः श्रूयतामित्यर्थः ॥१२॥

[6]तदेवाह—

**आक्षपादमते देवः सृष्टिसंहारकृच्छिवः।**
**विभुर्नित्यैकसर्वज्ञो नित्यबुद्धिसमाश्रयः ॥१३॥**

[7]**आक्षपादा** नैयायिकास्तेषां **मते** शासने **देवो** दर्शनाधिष्ठायकः **शिवो** महेश्वरः। स कथंभूतः। **सृष्टिसंहारकृत्** सृष्टिः प्राणिनामुत्पत्तिः, संहारस्तद्विनाशः, सृष्टिश्च संहारश्चेति द्वन्द्वः तौ करोतीति क्विपि-[8]**तोऽन्तः**। [9]**तथा हि**। अस्य प्रत्यक्षोपलक्ष्यमाणचराचरस्वरूपस्य जगतः कश्चिदनिर्वचनीयमाहात्म्यः पुरुषः स्रष्टा ज्ञेयः। केवलसृष्टौ च निरन्तरोत्पद्यमानापारप्राणिगणस्य[10] भुवनत्रयेऽप्यमातृत्वमिति संहारकर्तापि कश्चिदभ्युपगन्तव्यः। यत्प्रमाणम्[11], सर्वं धरणिधरणीधरतरुपुरप्राकारादिकं बुद्धिमत्पूर्वकम्, कार्यत्वात्, यद्यत् कार्यं तत्तद्बुद्धिमत्पूर्वकं[12], **यथा** घटः, कार्यं चेदम्, तस्माद् बुद्धिमत्पूर्वकमिति प्रयोगः। [13]स च भगवानीश्वर एवेत्यर्थः[14]। व्यतिरेके गगनम्। न चायमसिद्धो हेतुः, भूभूधरादीनां स्वकारणकलापजन्यत्वेनावयवितया वा कार्यत्वस्य जगत्प्रसिद्धत्वात्। नापि विरुद्धानैकान्तिकदोषौ; विपक्षादत्यन्तव्यावृत्तत्वात्। नापि कालात्ययापदिष्टः; प्रत्यक्षानुमानोपमानागमाबाध्यमानधर्मधर्मित्वात्। नापि प्रकरणसमः;[15] तत्परिपन्थिपदार्थस्वरूपसमर्थनः प्रथितप्रत्यनु[16]मानोदयाभावात्। अथ निर्वृतात्मवदशरीरत्वादेव न संभवति सृष्टिसंहारकर्तेश्वर इति प्रत्यनुमानोदयात् कथं प्रकरणसमदूषणाभाव इति चेत्; उच्यते; अत्र साध्यमान ईश्वररूपो धर्मी प्रतीतः अप्रतीतो वानुमन्यते सुहृदा। अप्रतीतश्चेत्; भवत्परिकल्पितहेतोरेवाश्रयासिद्धि[17]दोषप्रसङ्गः। प्रतीतश्चेत्; तर्हि येनैव प्रमाणेन प्रतीतस्तेनैव स्वयमुद्भावितस्वतनुरपि किमर्थं नाभ्युपगम्यत इति कथमशरीरत्वम्। अतो न दुष्टो हेतुरिति साधूक्तं सृष्टिसंहारकृच्छिवः।

तथा **विभुः** सर्वव्यापकः। एकनियतस्थान[18]वृत्तित्वे ह्यनियतप्रदेश[19]निष्ठितानां पदार्थानां प्रतिनियतः यथावन्निर्माणानुपपत्तेः। न ह्येकस्थानस्थितः कुम्भकारोऽपि[20] दूरदूरतरघटघटनायां व्याप्रियते। तस्माद्विभुर्भगवान्। **तथा नित्यैकः**। नित्यश्चासावेकश्चेति। यतो नित्योऽत एव एकोऽप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यम्। भगवतो ह्यनित्यत्वे पराधीनोत्पत्तिसव्यपेक्षतया[21] कृतकत्वप्राप्तिः। स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यत इति। अथ चेत् कश्चिज्जगत्कर्तारमपरमभिदधाति; स एवानुयुज्यते। सोऽपि नित्योऽनित्यो वा।

---

१. –ते एवं भ. १, २, प. १, मु.। २. –तोस्त्रीणि भ. १, २, प. १, मु.। ३. ज्ञायतामि–भ. १, २। ४. नीतः कस्य। ५. शिवशा–मु., प. १, २। ६. तदाह भ. १, २। ७. अक्षपा–भ. १, २। ८. तौ तः भ. १, २। ९. तथाह भ. २। १०. –मातत्व–भ. १, २। ११. –र्णं धर–भ. १, २। १२. कं दृष्टं य–प. २। १३. स भग–प. १, २, मु.। १४. एवेत्यन्वयः भ. १, २। १५. तत्प्रतिप–भ. १, २। १६. –प्रत्यक्षानुमानोद–प. २। १७. –द्धदो–प. २। १८. –न र्वातत्वे प. २। १९. –श प्रतिष्ठानां प. २। –श प्रतिष्ठितानां भ. १, २। २०. दूरतो घट–प. २। २१. –क्षय प. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नित्यश्चेत्; अधिकृतेश्वरेण किमपराद्धम् । अनित्यश्चेत्; तस्याप्यन्येनोत्पादकान्तरेण भाव्यमनित्यत्वादेव तस्याप्यन्येनेति नित्यानित्यवादविकल्पशिल्पशतस्वीकारे कल्पान्तेऽपि न [1]जल्पसमाप्तिः । तस्मान्नित्य एव भगवान् । अन्यच्च, एकोऽद्वितीयो बहूनां हि जगत्कर्तृत्वस्वीकारे परस्परं पृथक् पृथग[2]न्योन्यमसदृशमतिव्यापारतयैकैकपदार्थस्य विसदृशनिर्माणे सर्वमसमञ्जसमापद्येतेति भगवानेक एवेति युक्तियुक्तं नित्यैकेति विशेषणम् ।

तथा सर्वज्ञ इति सर्वपदार्थानां सर्वविशेषज्ञाता । सर्वज्ञत्वा[3]भावे हि विधित्सितपदार्थोपयोगयोग्यजगत्प्रसृमरविप्रकीर्णपरमाणुकणप्रचयसम्यक्सामग्रीमीलनाक्षमतया याथातथ्येन पदार्थनिर्माणरचना दुर्घटा । सर्वज्ञश्च सन् सकलप्राणिनां [4]संमीलितसमुचितकारणकलापानुरूपपारिमाण्डल्यानुसारेण कार्य[5]वस्तु निर्मिमाणः स्वार्जितपुण्यपापानुमानेन च स्वर्गनरकयोः सुखदुःखोपभोगं[6] च ददानः केषां नाभिमतः । तथा[7] चोक्तम्—

"ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ।
[8]अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ॥" [ ] इति ।

भूयोऽपि विशेषयन्नाह '**नित्यबुद्धिसमाश्रय**' इति शाश्वतबुद्धिस्थानम् । क्षणिकबुद्धिमतो हि पराधीनकार्यापेक्षितया[9] मुख्यकर्तृत्वाभावादनीश्वरत्वप्रसक्तिरिति[10] । ईदृग्गुणविशिष्टः शिवो [11]नैयायिकमतेऽभ्युपगन्तव्यः ॥ १३ ॥

अथ तत्त्वानि प्ररूपयन्नाह—

**तत्त्वानि षोडशामुत्र प्रमाणादीनि तद्यथा ।**
**प्रमाणं च प्रमेयं च संशयश्च प्रयोजनम् ॥ १४ ॥**
**दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ।**
**वादो जल्पो वितण्डा च हेत्वाभासाश्छलानि च ॥ १५ ॥**
**जातयो निग्रहस्थानान्येषामेवं[12] प्ररूपणा ।**
**अर्थोपलब्धिहेतुः स्यात्प्रमाणं तच्चतुर्विधम् ॥ १६ ॥**

**अमुत्रा**स्मिन् प्रस्तुते नैयायिकमते **षोडश तत्त्वानि प्रमाणा**दीनि प्रमाणप्रभृतीनि । **तद्यथेति** । बालावबोधाय नामान्यप्याह—प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निश्रेयससिद्धिरिति षोडश । **एषामेवं प्ररूपणेति** । [13]तत्त्वानामेवम् अमुना प्रकारेण प्ररूपणा नाममात्रप्रकटनमित्यर्थः ।

[14]अर्थैकैकस्वरूपमाह । तत्रादौ प्रमाणस्वरूपं प्रकटयन्नाह—**अर्थोपलब्धिहेतुः**[15] **प्रमाणं स्यात्** । अर्थस्य पदार्थस्योपलब्धिज्ञानं तस्य हेतुः कारणं प्रमाणं [16]स्याद् भवेत् । परापरदर्शनापेक्षया प्रमाणानामनियतत्वात्संदिहानस्य संख्यामुपदिशन्नाह-**तच्चतुर्विधमिति** । तत्प्रमाणं [17]चतुर्विधं ज्ञेयमिति ॥ १४–१६ ॥

**प्रत्यक्षमनुमानं[18] चोपमानं शाब्दिकं तथा ।**

व्याख्या[19]—प्रमाणनामानि निगदसिद्धान्येव, केवलमुपमया सह इत्युपमानं प्रमाणम् । अथ प्रत्यक्षानुमानस्वरूपमाह—

**तत्रेन्द्रियार्थसंनिकर्षोत्पन्नमव्यभिचारिकम् ॥ १७ ॥**

---

१. –ल्पपरिसं–**म. १, २** । २. –गन्यान्यसदृश–**प. १, २** । गन्योन्यासदृश–**प. २** । –गन्योन्यसदृश–**म. १, २** । ३. –ज्ञताभावे **प. १** । ४. समीलित–**प. १** । ५. कार्यं **प. १** । ६ –गं द–**मु., भ. १, २** । ७. –था च त्वद्यूथ्योक्त–**म. १, २** । ८. अन्यो **मु. प. १, २** । ९. –पेक्षतया **प. २** । १०. –क्तेरिति **प. १** । ११. ते देवोऽभ्यु–**प. २** । १२. –मेव **प. १** । १३. –नाममु–**प. १, २, मु.** । १४. –कस्य स्व–**म. १, २** । १५. –तुस्स्या–**प. २** । १६. स्यादिति **मु. प. १, २** । १७. चतुर्भेदं **प. २** । १८. च शाब्दं चोपमया सह **प. २** । च शाब्दमुपमया सह **प. १** । १९. इयं व्याख्या नास्ति **मु. प. १, २** ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

व्यवसायात्मकं ज्ञानं व्यपदेशविवर्जितम् ।
प्रत्यक्षमितरन्मानं तत्पूर्वं त्रिविधं भवेत् ॥१८॥

**तत्र** प्रमाणचातुर्विध्ये **प्रत्यक्षं** कीदृगिति संबन्धः । विशेषणान्याह—**इन्द्रियार्थसंनिकर्षोत्पन्न**मिति । इन्द्रियं चार्थश्चेति द्वन्द्वः, **तयोः** संनिकर्षात्संयोगादुत्पन्नं जातम् । इन्द्रियं हि नैकटचात् पदार्थे[1] संयुज्यते । इन्द्रियार्थ[2]संयोगा[3]ज् ज्ञानमुत्पद्यते । यदुक्तम्—

**"आत्मा सहैति मनसा मन इन्द्रियेण,**
**स्वार्थेन चेन्द्रियमिति क्रम एष[4] शीघ्रम् ।**
**योगोऽयमेव मनसः किमगम्यमस्ति**
**यस्मिन्मनो व्रजति तत्र गतोऽयमात्मा ॥"** [ ]

**तत्राव्यभिचारिकं**[5] ज्ञानान्तरेण नान्यथाभावि । शुक्तिशकले कलधौतबोधो हीन्द्रियार्थसंनिकर्षोत्पन्नोऽपि व्यभिचारी दृष्टोऽतोऽव्यभिचारिकं[7] ग्राह्यम् । तथा **व्यवसायात्मकं** व्यवहारसाधकम् । सजलधरणितले हि बहलशाद्वलवृक्षावल्यामिन्द्रियार्थसांनिध्योद्गतमपि जलज्ञानं तत्प्रदेशसंगमेऽपि स्नानपाना[8]दिव्यवहारासाधकत्वादप्रमाणम् । अतः सफलं व्यवसायात्मकमिति विशेषणम् । तथा **व्यपदेशविवर्जित**मिति । व्यपदेशो विपर्यस्तेन रहितम् । तथाहि—आजन्मकाचकामलादिदोषदूषितचक्षुषः पुरुषस्य धवल[9]शङ्खे पीतज्ञानमुदेति तद्यद्यपि सकलकालं तन्नेत्रदोषाविरामादिन्द्रियार्थसंनिकर्षोत्पन्नमस्ति तथाप्यन्यवस्तुनोऽन्यथाबोधान्न तद्यथोक्तलक्षणं प्रत्यक्षमिति प्रत्यक्षसाधकं विशेषणचतुष्टयमुक्तम्[10] ।

साम्प्रतमनुमानमाह । **इतरदन्यन्मान**मनुमानमुपदिशति तदनुमानं **पूर्वं** प्रथमं **त्रिविधं** त्रिप्रकारकं **भवे**ज्जायेत पूर्वमितिपदेनानुमानान्तरभेदानन्त्यमाह । तत्पूर्वं प्रत्यक्षपूर्वं चेति श्लोकद्वयार्थः ॥१७–१८॥

अनुमानत्रैविध्यमाह[11]—

पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्तथा ।
तत्राद्यं कारणात्कार्यमनुमानमिह[12] गीयते ॥१९॥

**पूर्ववत् शेषवत् सामान्यतोदृष्टं** चेत्यनुमानत्रयम्[13] । **च**ः समुच्चये । **एवे**ति पूरणार्थे । **तथे**ति उपदर्शने । **तत्र** त्रिषु मध्ये, **आद्यमनुमानमिह** शास्त्रे **कारणात्कार्यमनुमानमुदितं**[14] कारणान्मेघात् कार्यं वृष्टिलक्षणं यतो ज्ञायते तत्कारणकार्य[15]नामानुमानं कथितमित्यर्थः ॥१९॥

निदर्शनेन तमेवार्थं द्रढयन्नाह[16] यथा—

रोलम्बगवलव्यालतमालमलिनत्विषः ।
वृष्टिं व्यभिचरन्तीह नैवंप्रायाः पयोमुचः ॥२०॥

**यथे**ति दृष्टान्तकथनारम्भे । **रोलम्बाः** भ्रमराः, **गवलं** माहिषं शृङ्गम्, व्याला गजाः,[17] सर्पा वा, तमाला वृक्षविशेषाः, सर्वेऽप्यमी[18] कृष्णाः पदार्थाः स्वभावतो ज्ञेयाः । द्वन्द्वसमासो बहुव्रीहिश्च । **एवंप्राया** एवंविधाः **पयोमुचो** मेघा **वृष्टिं न व्यभिचरन्तीति** । एवंप्राया इत्युपलक्षणेन परेऽपि वृष्टिहेतवोऽभ्युन्नत्यादि[19]-विशेषा ज्ञेयाः । यदुक्तम्—

---

१. –र्थेषु सं– प. २ । –र्थेन सं–भ. १, २ । २. –र्थयोर्हि सं–भ. १, २ । ३. –गाच्च ज्ञा–भ. १, २ । ४. शीघ्रः भ. १, २ । ५. तथाव्य–भ. १, २ । ६. –चारकम् प. २, भ १ । ७. चारकम् प. २ । ८. –नावगाहनादि भ. १, २ । ९. –ले श–प. १, २ । १०. –मुक्त्वा सा– भ. १, २ । ११. –घ्यमेवाह प. १ । १२. –मिहोदितम् भ. १, २ । १३. –त्रितयम् भ. १, २ । १४. –र्यमुदितम् भ. १, २ । १५. –र्यं नामा–भ. १, २ । १६. –ह रो–मु., प. १, २ । १७. सर्पो वा प. १ । १८. कृष्णप–प. १, भ. १, २ । १९. –न्नतादि–प. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"गम्भीरगर्जितारम्भनिर्भिन्नगिरिगह्वराः ।
तुङ्गत्तडिल्लतासङ्गपिशङ्गोत्तुङ्गविग्रहाः ॥" [ न्यायम० ]

इत्यादयोऽपि वृष्टिं न व्यभिचरन्ति ॥२०॥

शेषवन्नामधेयं द्वितीयमनुमानभेदमाह—

**कार्यात्कारणानुमानं यच्च तच्छेषवन्मतम् ।**
**तथाविधनदीपूरान्मेघो वृष्टो यथोपरि ॥२१॥**

[1] **यत्कार्यात्** फलात्**कारणानुमानं** फलोत्पत्तिहेतुपदार्थावगमनं **तच्छेषवदनुमानं मतं** कथितं नैयायिकशासने । यथा **तथाविधनदीपूरादुपरि मेघो वृष्टः**स्तथाविधप्रवहत्सलिलसंभारभरितो यो नदीपूरः सरित्प्रवाहस्तस्मादुपरि शिखरिशिखरोपरि जलधराभिवर्षणज्ञानं तच्छेषवत् । अत्र कार्यं नदीपूरः[2] कारणं च पर्वतोपरि मेघो वृष्ट इति । उक्तं च नैयायिकैः—

"आवर्तवर्तनाशालिविशालकलुषोदकः ।
कल्लोलविकटास्फालस्फुटफेनच्छटाङ्कितः ॥
वहद्बहुकशैवालफलशाड्वलसंकुलः ।
नदीपूरविशेषोऽपि शक्यते न[3] निवेदितुम् ॥" [ ] इति ॥२१॥

तृतीयानुमानमाह—

**यच्च सामान्यतो दृष्टं तदेवं गतिपूर्विका ।**
**पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥२२॥**

चः पुनरर्थे । **यत् सामान्यतो दृष्टमनुमानं तदेवममुना**[4] वक्ष्यमाणप्रकारेण । यथा **पुंसि** पुरुषे देवदत्तादौ **देशान्तरप्राप्तिर्गतिपूर्विका** । एकस्माद्देशाद्देशान्तरगमनं गमनपूर्वकमित्यर्थः । यथोज्जयिन्याः प्रस्थितो देवदत्तो माहिष्मतीं पुरीं प्राप्तः । **सूर्येऽपि सा तथेति,** यथा पुंसि तथा सूर्येऽपि सा गतिरभ्युपगम्यते । यद्यपि गगने संचरतः सूर्यस्य नेत्रावलोक[5]प्रसरणाभावेन गतिर्नोपलभ्यते, तथाप्युदयाचलात् सायमस्ताचलचूलिकावलम्बनं गतिं सूचयति । एवं सामान्यतोदृष्ट[6]मनुमानं ज्ञेयमित्यर्थः ॥२२॥

अथ क्रमायातमपि शाब्दप्रमाणं स्वल्प[7]वक्तव्यत्वादुपेक्ष्यादावुपमानलक्षणमाह—

**प्रसिद्ध[8]वस्तुसाधर्म्यादप्रसिद्धस्य साधनम् ।**
**उपमानं[9] तदाख्यातं यथा गौर्गवयस्तथा ॥२३॥**

[10]**तदुच्यमानमुपमानमाख्यातं** कथितम् । यत्तदोर्नित्य[11] संबन्धात् । [12]यत्किंचित् **अप्रसिद्धस्य साधनम्** अज्ञायमानस्यार्थस्य ज्ञापनं क्रियते । **प्रसिद्धधर्मसाधर्म्यादिति**[13], प्रसिद्धा (द्धः) आबालगोपालाङ्गनाविदितोऽसौ धर्मोऽसाधारणलक्षण[14] तस्य साधर्म्यं समानधर्मत्वं[15] तस्मादित्युपमानमाख्यातम् । दृष्टान्तमाह—**यथा गौर्गवयस्तथेति** । यथा कश्चिदरण्यवासी [16]नागरिकेण कीदृग्गवय इति पृष्टः, स च परिचितगोगवयलक्षणो नागरिकं प्राह यथा गौस्तथा गवयः, खुरककुदलाङ्गूलसास्नादिमान् यादृशो गौस्तथा जन्मसिद्धो[17] गवयोऽपि[18] ज्ञेय इत्यर्थः । अत्र प्रसिद्धो गौस्तत्साधर्म्यादप्रसिद्धस्य गवयस्य साधनमिति ॥२३॥

---

१. यच्च का—म. १, २ । २. —णं प—र. १ । ३. नो प. म. २ । ४. —ना प्र—म. २, प. १, २, मु. । ५. —प्रसराभा— म. १ । ६. —ष्टं नामानु—म. १ । ७. —व्यक्तत्वा—मु., प. १, २, म. २ । ८. —द्धधर्मसा— म. १ । ९. समाख्या— म. २, प. १, २, मु. । १०. तदुपमानप्रमाणमा— प. १ । ११. —त्याभिस—म. १ । १२. यत्किमप्र— मु., प. २, म १, २ । १३. —ति अ— मु., प. १, २, म. २ । १४. —णं ल—प. १, २ । १५. त्वं तत इति तदुप— म. १ । —त्वमिति तदुप— प. २ । १६. नागरकेण प. १ । १७. —न्मप्रति—प. २ । १८. —पि तादृशो ज्ञे— प. १, २, म. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

उपमानं व्यावर्ण्य शब्दप्रमाणमाह—

**शाब्दमाप्तोपदेशस्तु मानमेवं चतुर्विधम् ।**
**प्रमेयं[1] त्वात्मदेहार्थबुद्धीन्द्रियसुखादि च ॥२४॥**

**तु** पुनराप्तोपदेशः **शाब्दम्**[2] । अवितथवादी हितश्चाप्तः[3] प्रत्ययितजनस्तस्य य **उपदेश**[4] आदेशवाक्यं तच्छाब्दम् आगमप्रमाणं ज्ञेयमिति । **एवमुक्तभङ्‌ग्या मानं** प्रमाणं **चतुर्विधं** चतुष्प्रकारं निष्ठितमित्यर्थः ।

अथ प्रमेयलक्षणमाह—'**प्रमेयं त्वात्मदेहार्थबुद्धीन्द्रियसुखादि** चेति' प्रमाणग्राह्योऽर्थः प्रमेयं, तु पुनरर्थे । आत्मा च देहश्चेति[5] द्वन्द्वः । आदिशब्देन शेषाणामपि षण्णां प्रमेयार्थानां संग्रहः । तच्च नैयायिक[6]-सूत्र आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन द्वादशविधम् । तत्र सचेतनत्वकर्तृत्व-सर्वगतत्वादिधर्मैरात्मा प्रमीयते । एवं देहादयोऽपि प्रमेयता ज्ञेयाः । अत्र तु ग्रन्थ[7]विस्तारभयान्न प्रपञ्चिता[8] इतर-ग्रन्थेभ्योऽपि सुज्ञेयत्वा[9]च्चेति ॥२४॥

संशयादिस्वरूपमाह—

**किमेतदिति संदिग्धः प्रत्ययः संशयो मतः ।**
**प्रवर्तते यदर्थित्वात्तत्तु साध्यं प्रयोजनम् ॥२५॥**

दूरावलोकनेन पदार्थपरिच्छेदक[10] धर्मेषु संशयानः प्राह—**किमेतदिति** । एतत्किं स्थाणुर्वा पुरुषो वेति यः **संदिग्धः प्रत्ययः**[11] स **संशयो** नाम तत्त्वविशेषो **मतः** संमतः तच्छासन इति । प्रयोजनमाह—**तत्तु** तत्पुनः **प्रयोजनं** नाम तत्त्वं यत्किमित्याह—**अर्थित्वा**त्प्राणी **साध्यं** कार्यं प्रति **प्रवर्तते** । प्रतीत्यध्याहार्यम् । न हि निष्फलकार्यारम्भ इत्यर्थित्वादुक्तम् । एवं यत्प्रवर्तनं तत्प्रयोजनमित्यर्थः ॥२५॥

**दृष्टान्तस्तु भवेदेष विवादविषयो न यः ।**
**सिद्धान्तस्तु चतुर्भेदः सर्वतन्त्रादिभेदतः ॥२६॥**

व्याख्या—**तु** पुन**रेष दृष्टान्तो** नाम तत्त्वं **भवेत्** । यत्किमिति । **विवादविषयो**[12] **न यः** यस्मिन्नुपन्यस्ते वचने वादगोचरो न भवति । इदमित्थं भवति न वेति विवादो न भवतीत्यर्थः । तावच्चान्वयव्यतिरेकयुक्तोऽर्थः स्खलति यावन्न[13] स्पष्टं दृष्टान्तोपष्टम्भः । उक्तं च—

"**तावदेव चलत्यर्थो**[14] **मन्तुर्गोचरमागतः ।**
**यावन्नोत्तम्भनेनैव दृष्टान्तेनावलम्ब्यते ॥**"

एष दृष्टान्तो ज्ञेयः ।

**सिद्धान्तः** पुन**श्चतुर्भेदो** भवेत् । कथमित्याह—**सर्वतन्त्रादिभेदत** इति । सर्वतन्त्रसिद्धान्त इति प्रथमो भेदः । आदिशब्दाद्भेदत्रयमिदं ज्ञेयम् । यथा प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्तश्चेति । अमी चत्वारः सिद्धान्तभेदाः । नाममात्रकथनमिदम्, विस्तरग्रन्थेभ्यस्तु[15] विशेषो ज्ञेयः ॥२६॥

अवयवादितत्त्वत्रयस्वरूपमाह—

**प्रतिज्ञाहेतुदृष्टान्तोपनया**[16] **निगमस्तथा ।**
**अवयवाः पञ्च तर्कः संशयोपरमो भवेत् ॥२७॥**
**यथा काकादिसंपातात् स्थाणुना भाव्यमत्र हि ।**
**ऊर्ध्वं संदेहतर्काभ्यां प्रत्ययो निर्णयो मतः ॥२८॥**

---

१. चात्म–प. १, २, मु. । २. –म् आप्त इति अ–प. १, २, म. १ । ३. प्रत्ययिता ज–प. २ । ४. –देशो देशनावा–प. १, २, म. १ । ५. –श्चेत्यादि द्व–म. १, प. १, २ । ६. –त्रं तच्च आ–प. १, २, म. १ । ७. –स्तरभ–प. १, २, म. १ । ८. –त इ–मु. । ९. –त्वाविति म. १ । १०. –कविज्ञेयध–प. १, म. १ । ११. –यः सं–प. १, २ । १२. न यस्मि–प. १, म. १, २ । १३. स्पष्टदृष्टान्तावष्टम्भः म. १ । १४. मन्तु-विषयमा–प. १, २, म. १ । १५. विशेषार्थो ज्ञेयः म. १, प. १ । १६. गमनं तथा प. १, म. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**अवयवाः पञ्चे**ति संबन्धः । पूर्वार्द्धमाह—[1]**प्रतिज्ञाहेतुदृष्टान्तोपनया निगमनं** चेति पञ्चावयवाः । तत्र प्रतिज्ञा पक्षः, कृशानुमानयं[2] सानुमानित्यादि । हेतुर्लिङ्गवचनम्, [3]धूमवत्त्वादित्यादि । दृष्टान्त उदाहरणवचनम्, यो यो धूमवान् स स वह्निमान् यथा [4]महानसप्रदेश इत्यादि । उपनयो हेतोरुपसंहारकं वचनम्, धूमवांश्चायमित्यादि । निगमनं हेतूपदेशेन पुनः साध्यधर्मोपसंहरणं तस्माद्वह्निमानित्यादि । इति पञ्चावयवस्वरूपनिरूपणम्[5], इति अवयवतत्त्वं ज्ञेयमिति । **तर्कः संशयोपरमो भवेत् । यथा काके**त्यादि । दूराद्दृग्गोचरे स्पष्टप्रतिभासाभावात् किमयं स्थाणुर्वा पुरुषो वेति संशयस्तस्योपरमेऽभावे सति तर्को भवेत् तर्को नाम तत्त्वं स्यात् । कथमित्याह—**यथे**ति । दूरादूर्ध्वस्थं पदार्थं विलोक्य स्थाणुपुरुषयोः संदिहानोऽवहितीभूय विमृशति । **काकादिसंपाता**दिशब्दाद्वल्ल्युत्सर्पणादयः स्थाणुधर्मा ग्राह्याः । वायसप्रभृतिसंबन्धादत्र **स्थाणुना**[6] **भाव्यं** कीलकेन भवितव्यम् । पुरुषे हि शिरःकम्पनहस्तचालनादिभिः[7] काकपातानुपपत्तेः । एवं संशयाभावे तर्कतत्त्वं ज्ञेयमिति । **ऊर्ध्व**मित्यादि पूर्वोक्तलक्षणाभ्यां **संदेहतर्काभ्या**मूर्ध्वमुत्तरं[8] यः **प्रत्यय**; स्थाणुरेवायं पुरुष एवायमिति प्रतीतिविषयः, स **निर्णयः** निर्णयनामा तत्त्वविशेषो ज्ञेयः । यत्तदावर्थसंबन्धादनुक्तावपि ज्ञेयौ ॥२८॥

वादतत्त्वमाह—

**आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् ।**
**यः कथाभ्यासहेतुः स्यादसौ वाद उदाहृतः ॥२९॥**

**असौ वाद उदाहृतः** कथितस्तज्ज्ञैरित्यर्थः । **यः** कः । इत्याह—**कथाभ्यासहेतुः** । कथा प्रामाणिकी तस्या[10] अभ्यासहेतुः कारणम् । कयोः **आचार्यशिष्ययोः** । आचार्यो गुरुरध्यापकः, शिष्यश्चाध्येता[11] **विज्ञेय** इति । कस्मात् । **पक्षप्रतिपक्षपरिग्रहात्** । पक्षः पूर्वपक्षः प्रतिज्ञादि[12] परिग्रहः, प्रतिपक्ष उत्तरपक्षः पूर्वपक्षवादिप्रयुक्तप्रतिज्ञादि [13]प्रतिपन्थिकोपन्यासप्रौढिः तयोः परिग्रहात्संग्रहादित्यर्थः । आचार्यः पूर्वपक्षमङ्गीकृत्याचष्टे । शिष्यश्चोत्तरप[14]क्षमुररीकृत्य पूर्वपक्षं खण्डयति । एवं निग्राहकजयपराजयच्छलजात्यादि[15] निरपेक्षतया अभ्यासनिमित्तम् । पक्षप्रतिपक्षप[16]रिग्रहेण यत्र गुरुशिष्यौ गोष्ठीं कुरुतः स वादो ज्ञेयः ॥२९॥

अथ तद्विशेषमाह—

**विजिगीषुकथायां[17] तु च्छलजात्यादिदूषणम् ।**
**स जल्पः सा वितण्डा तु या प्रतिपक्षविवर्जिता ॥३०॥**

**स जल्प** इति संबन्धः । [18]यत् तु **विजिगीषुकथायां** विजयाभिलाषिवादिप्रतिवादिप्रारब्धप्रमाणोपन्यासगोष्ठ्यां सत्यां **छलजात्यादिदूषणम्** । छलं त्रिप्रकारम्—वाक्छलं, सामान्यच्छलम्, उपचारच्छलं चेति, जातयश्चतुर्विंशतिभेदाः, आदिशब्दान्निग्रहस्थानादिपरिग्रहः, एतैः कृत्वा दूषणं परोपन्यस्तपक्षादेर्दूषणजालमुत्पाद्य निराकरणम् । अभिमतं च स्वप[19]क्षस्थापनेन सन्मार्गप्रतिपत्तिनिमित्ततया छलजात्याद्युपन्यासैः परप्रयोगस्य दूषणोत्पादनम् । तथा चोक्तम्—

---

१. प्रतिज्ञा हेतुर्दृष्टान्त उपनयो म. १, प. १ । २. –यं पर्वत इत्यादि प. २. । ३. –त्त्वादिति प. २. । ४. –स इत्यादि प. १, २, म. १ । ५. –णम् अव–मु. प. १, म. १, २ । ६. –णुना कीलकेन भाव्यं पुरु– म. २ । ७. –दिभिया का–म. १ । ८. –र्ध्वमनन्तरं यः प. १, २, म. २ । ९. –तज्ज्ञैरिति यः किमित्याह प. १, २, म. २ । १०. –सः का–मु. । –सका–प. १ । –से का –म. २ । ११. विज्ञेय मु., म. १, २ । १२. –दिसंग्रहः प. १, २ । १३. पञ्चको–मु., प. १, २, म. १ । १४. क्षमङ्गीकृत्य प. २ । १५. –द्यनपेक्षितया म. २ । १६. –क्षसंग्रहेण म. २ । १७. –या तु मु., म. १, २ । १८. यत् वि–मु., प. १, २, म. १ । १९. –पनमेव स–म. २ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

"दुःशिक्षितकुतर्कांशलेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डा[1]टोपमण्डिताः ॥
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मा गादिति च्छलादीनि प्राह कारुणिको मुनिः ॥" इति ।

संकटे प्रस्तावे च सति च्छलादिभिरपि स्वपक्षस्थापनमनुमतम् । परविजये हि धर्मध्वंसादिदोषसंभवस्तस्माद्वरं छलादिभिरपि जयः । **सा वितण्डा तु या प्रतिपक्षविवर्जिता**[2] । सा पुनर्वितण्डा, या । किम् । विजिगीषुकथैव प्रतिपक्षविवर्जिता । वादिप्रयुक्तपक्षप्रतिरोधकः प्रतिवाद्युपन्यासः प्रतिपक्षस्तेन विवर्जिता रहितेति प्रतिपक्षसाधन[3]विहीनो वितण्डावादः । वैतण्डिको हि स्वाभ्युपगतपक्षमस्थापयन् यत्किञ्चिद्वादेन परोक्तमेव[4] दूषयतीत्यर्थः ॥३०॥

**हेत्वाभासा असिद्धाद्याश्छलं कूपो नवोदकः ।**
**जातयो दूषणाभासाः पक्षादिर्दूष्यते न यैः ॥३१॥**

**हेत्वाभासा** ज्ञेया इति । के ते । इत्याह—**असिद्धाद्याः,** असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः पञ्च हेत्वाभासा ज्ञेयाः । तत्र पक्षे धर्मत्वं यस्य नास्ति सोऽसिद्धः । विपक्षे सन् सपक्षे चासन् विरुद्धः । पक्षत्रयवृत्तिरनैकान्तिकः । [5]प्रत्यक्षानुमानागमविरुद्धपक्षवृत्तिः कालात्ययापदिष्टः । [6]विशेषाग्रहणे हेतुत्वेन प्रयुज्यमानः[7] प्रकरणसमः । उदाहरणानि स्वयमभ्यूह्यानि ।

**छलं कूपो नवोदक** इति परोपन्यस्तवादे स्वाभिमतार्थान्तरकल्पनया वचनविघातश्छलम् । कथमित्याह—वादिना कूपो नवोदक इति कथायां प्रत्यग्रार्थवाचकतया नवशब्दप्रयोगे[8] छलवादी नवसंख्यामारोप्य दूषयति । कुत एक एव कूपो नवसंख्योदक इति वाक्छलम् । प्रस्तावागतत्वेन शेषच्छलद्वयमप्याह—संभावनयातिप्रसङ्गिनोऽपि सामान्य[9]स्योपन्यासे हेतुत्वारोपणेन तन्निषेधः सामान्यच्छलम् । यथा अहो नु खल्वसौ ब्राह्मणो विद्याचरणसंपन्न इति ब्राह्मणस्तुतिप्रसङ्गे कश्चिद्वदति—संभवति ब्राह्मणे विद्याचरणसंपदिति । तच्छलवादी ब्राह्मणत्वस्य हेतुत्वमारोप्य निराकुर्वन्नभियुङ्क्ते । यदि ब्राह्मणे विद्याचरणसंपद्भवति व्रात्येऽपि सा भवेद्व्रात्योऽपि ब्राह्मण एवेति । औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानम्, उपचारच्छलम् । यथा मञ्चाः क्रोशन्तीत्युक्ते परः प्रत्यवतिष्ठते कथमचेतना मञ्चाः क्रोशन्ति मञ्चस्थाः पुरुषाः क्रोशन्तीति छलत्रयस्वरूपं ज्ञेयमिति ।

**जातय** इत्यादि । **दूषणाभासा जातयः** । अदूषणान्यपि दूषणवदाभासन्त इति दूषणाभासाः । [10]**यैः,** किम् । **पक्षादिर्न दूष्यते,** आभासमात्रत्वान्न पक्षदोषः[11] समुद्भावयितुं शक्यते केवलं सम्यग्हेतौ हेत्वाभासे वा वादिना प्रयुक्ते झगिति तद्दोषतत्त्वानवभासे हेतुप्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिः । सा चतुर्विंशतिभेदा साधर्म्यादिप्रत्यवस्थानभेदेन । यथा साधर्म्य–वैधर्म्य–उत्कर्ष-अपकर्ष-वर्ण्य-अवर्ण्य-विकल्प-साध्य-प्राप्ति–अप्राप्ति-प्रसङ्ग–प्रतिदृष्टान्त– अनुत्पत्ति–संशय-प्रकरण– अहेतु–अर्थापत्ति–अविशेष– उपपत्ति–उपलब्धि–अनुपलब्धि-नित्य-अनित्य-कार्यसमाः । तत्र साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिर्भवति । 'अनित्यः शब्दः कृतकत्वात् घटवत्' इति प्रयोगे' कृते साधर्म्यप्रयोगेणैव प्रत्यवस्थानम्—नित्यः शब्दो निरवयवत्वात् आकाशवत् । न चास्ति विशेषहेतुः घटसाधर्म्यात् कृतकत्वात् अनित्यः शब्दः न पुनः आकाशसाधर्म्यान्निरवयवत्वात् नित्य इति । वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिर्भवति अनित्यः शब्दः कृतकत्वात् घटवत् इत्यत्रैव प्रयोगे स एव हेतुर्वैधर्म्येण प्रयुज्यते नित्यः शब्दो निरवयवत्वात् अनित्यं हि सावयवं दृष्टं[12] घटादीति । न चास्ति विशेषहेतुः घटसाधर्म्यात् कृतकत्वात् अनित्यः शब्दः न पुनस्त-

---

१. –ण्डाटोपम–मु., प. १, २, म. १ । २.–क्षवर्जिता म. २ । ३. –नाही-म. २ । ४. –क्तं दू–म. १, २, मु. । ५. प्रत्यक्षादिवि–प. २ । प्रत्यक्षाणमवि–प. १, म. २ । ६. विशेषाग्रहणं म. २ । ७. –नं प्र–भ. २ । ८. गे कृते छ–म. २ । ९. न्यस्य हे–म. २ । १०. यैः प–मु., प. १, २, म. १ । ११. –ष उ–म. १, २ । १२. –ष्टं यथा घ–म. १, २, प. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

द्वैधर्म्यात् निरवयवत्वान्नित्य इति। उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती भवतः। तत्रैव प्रयोगे दृष्टान्तधर्मं [1]कंचित्साध्यधर्मिण्यापादयन्नुत्कर्षसमां जातिं प्रयुङ्क्ते। यदि घटवत्कृतकत्वादनित्यः शब्दो घटवदेव [2]मूर्तोऽपि भवेद्, न चेन्मूर्तो घटवदनित्योऽपि मा भूदिति शब्दे धर्मान्तरोत्कर्षमापादयति। अपकर्षस्तु घटः कृतकः सन्नश्रावणो दृष्टः एवं शब्दोऽपि भवेद्, [3]नो चेद् मूर्तो घटवदनित्योऽपि माभूदिति शब्दे धर्मान्तरोत्कर्षमापादयति। अपकर्षस्तु घटः कृतकः सन्नश्रावणो दृष्टः एवं शब्दोऽपि भवेत्। नो चेद् घटवदनित्योऽपि मा भूदिति शब्दे [4]श्रावणत्वं धर्ममपकर्षति। वर्ण्यावर्ण्याभ्यां प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती भवतः। ख्यापनीयो वर्ण्यस्तद्विपरीतोऽवर्ण्यस्तावेतौ वर्ण्यावर्ण्यौ साध्यदृष्टान्तधर्मौ विपर्यस्यन् वर्ण्यावर्ण्यसमे जाती प्रयुङ्क्ते। यथाविधः शब्दधर्मः कृतकत्वादि[5] न तादृग् घटधर्मो यादृग् घटधर्मो न तादृक् शब्दधर्म इति साध्यधर्मदृष्टान्तधर्मौ हि तुल्यौ कर्तव्यौ। अत्र तु विपर्यासः, यतो यादृग्घटधर्मः कृतकत्वादि न तादृक् शब्दधर्मः। घटस्य ह्यन्यादृशं कुम्भकारादिजन्यं कृतकत्वम्। शब्दस्य हि ताल्वोष्ठादिव्यापारजमिति। धर्मान्तर[6]विकल्पेन प्रत्यवस्थानं विकल्पसमा जातिः। यथा कृतकं किंचिन्मृदु दृष्टं राङ्कव [7]शय्यादि, किंचित्कठोरं[8] कुठारादि एवं कृतकं किंचिदनित्यं भविष्यति घटादिकम्, किंचिन्नित्यं शब्दादीति। साध्य[9]साम्यापादनेन प्रत्यवस्थानं साध्यसमा जातिः। यदि यथा[10] घटः तथा शब्दः[11] प्राप्तः तर्हि यथा शब्दस्तथा घट इति। शब्दश्च साध्य इति घटोऽपि साध्यो भवेत्, ततश्च न [12]साध्यं साध्यस्य[13] दृष्टान्तः स्यात्। न चेदेवं तथापि वैलक्षण्यात् सुतरामदृष्टान्त इति। प्राप्त्यप्राप्तिविकल्पाभ्यां प्रत्यवस्थानं प्राप्त्यप्राप्तिसमे जाती। यथा यदेतत्कृतकत्वं त्वया साधनमुपन्यस्तं तत्किं[14] प्राप्य साधयत्यप्राप्य[15] वा। प्राप्य चेत्[16] द्वयोर्विद्यमानयोरेव प्राप्तिर्भवति न तत्सदसतोरिति, द्वयोश्च सत्त्वात्किं कस्य साध्यं साधनं वा। [17]अप्राप्य तु साधनमयुक्तम्; अतिप्रसङ्गादिति। अतिप्रसङ्गापादनेन प्रत्यवस्थानं प्रसङ्गसमा जातिः। यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते जातिवाद्याह—यद्यनित्यत्वे कृतकत्वं साधनं कृतकत्वे [18]इदानीं किं साधनं तत्साधने किं साधनमिति। प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमा जातिः। यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते जातिवाद्याह—यथा घटः प्रयत्नानन्तरीयकोऽनित्यो दृष्ट एवं प्रतिदृष्टान्त आकाशं नित्यमपि प्रयत्नानन्तरीयकं दृष्टं कूपखननप्रयत्नानन्तरमुपलम्भादिति। न चेदमनैकान्तिकत्वोद्भावनं भङ्ग्यन्तरेण प्रत्यवस्थानात्। अनुत्पत्त्या प्रत्यवस्थानम् अनुत्पत्तिसमा जातिः। यथानुत्पन्ने शब्दाख्ये धर्मिणि कृतकत्वं धर्मः क्व वर्तते, तदेवं हेत्वभावादसिद्धिरनित्यत्वस्येति[19]। साधर्म्यसमा वैधर्म्यसमा वा[20] या जातिर्यथा पूर्वमुदाहृता, सैव संशयेनोपसंह्रियमाणा संशयसमा जातिर्भवति। यथा किं घटसाधर्म्यात्कृतकत्वादनित्यः शब्दः, [21]किं वा तद्वैधर्म्येणाकाशसाधर्म्या[22]न्निरवयवत्वान्नित्य इति। द्वितीयपक्षोत्थापनबुद्ध्या[23] प्रयुज्यमाना सैव साधर्म्यसमा वैधर्म्यसमा वा जातिः प्रकरणसमा भवति। तत्रैवानित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे नित्यः शब्दः श्रावणत्वात् शब्दत्ववदिति, उद्भावनप्रकारभेदमात्रे सति नानात्वं द्रष्टव्यम्। त्रैकाल्यानुपपत्त्या हेतोः प्रत्यवस्थापनहेतुसमा जातिः। यथा हेतुः साधनम्, तत्साध्यात्पूर्वं पश्चाद्वा[24] सह वा भवेत्। यदि पूर्वम्, असति साध्ये तत्कस्य साधनम्। अथ पश्चात्साधनम्; पूर्वं तर्हि साध्यं तस्मिंश्च पूर्वसिद्धे किं साधनेन। अथ युगपत्साध्यसाधने; तर्हि तयोः सव्येतरगोविषाणयोरिव साध्यसाधनभाव एव न [25]भवेदिति। अर्थापत्त्या प्रत्यवस्थानम् अर्थापत्तिसमा

---

१. –किं–भ. २। २. मूर्तो भ–प. १। ३. न प. २। ४. –वणध–मु., प. १, २, भ. १। ५. –दिना न तादृग् घटधर्मो न ता–मु., प. १, २, भ. १। ६. –न्तरे वि-मु., प. १, २, भ. १। ७. ववस्त्रादि भ. २। ८. कठिनं कु–भ. २। ९. –साधर्म्यापा–प. १। १०. यथा घ–मु., प. २, भ. १। ११. प्राप्तं भ. २। १२. साध्यः भ. २। १३. –स्य दृष्टान्तो विरुद्धलक्षणत्वान्न दृष्टा–मु.। १४-१७. –प्यं प. २, भ. १, मु.। १८. –कत्वमिदा–मु., प. १, २, भ. १। १९. –त्यस्ये–भ. २। २०. वा जातिपूर्व –प. २, भ. १, २। २१. उत तद्वैधर्म्यादाका–भ. १, २। २२. –साम्या–भ. १, २। २३. –पनाबु –प. १। २४. –श्चात् सह वा भ. १, २। २५. भवति भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

जातिः यद्यनित्यसाधर्म्यात्कृतकत्वादनित्यः शब्दोऽर्थादापद्यते, नित्यसाधर्म्यान्नित्य इति । अस्ति चास्य नित्येनाकाशेन[1] साधर्म्यं निरवयवत्वमित्युद्भावनप्रकारभेद एवायमिति । अविशेषापादनेन प्रत्यवस्थानमविशेषसमा जातिः । यथा यदि शब्दघटयोरेको धर्मः कृतकत्वमिष्यते तर्हि समानधर्मयोगात्तयोरविशेषे तद्वदेव सर्वपदार्थानामविशेषः प्रसज्यत इति । उपपत्त्या[2] प्रत्यवस्थानमुपपत्तिसमा जातिः । यथा यदि कृतकत्वोपपत्त्या शब्दस्यानित्यत्वं निरवयवत्वोपपत्त्या नित्यत्वमपि कस्मान्न भवति पक्षद्वयोपपत्त्या अनध्यवसायपर्यवसानत्वं विवक्षितमित्युद्भावनप्रकारभेद एवायम् । उपलब्ध्या[3] प्रत्यवस्थानमुपलब्धिसमा जातिः । यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति प्रयुक्ते प्रत्यवतिष्ठते न खलु प्रयत्नानन्तरीयकत्वमनित्यत्वे साधनम्, साधनं तदुच्यते येन विना न साध्यमुपलभ्यते, उपलभ्यते च प्रयत्नानन्तरीयकत्वेन विनापि विद्युदादावनित्यत्वम्, शब्देऽपि क्वचिद्वायुवेगभज्यमानवनस्पत्यादिजन्ये[4] तथेति । अनुपलब्ध्या[5] प्रत्यवस्थानमनुपलब्धिसमा जातिः । यथा तत्रैव प्रयत्नानन्तरीयकत्व[6]हेतावुपन्यस्ते, [7]सत्याह जातिवादी न प्रयत्नकार्यः शब्दः प्रागुच्चारणादस्त्येवासौ, आवरणयोगात्तु नोपलभ्यते । आवरणानुपलम्भेऽप्यनुपलम्भान्नास्त्येव शब्द इति चेत्; न; आवरणानुपलम्भेऽप्य[8]नुपलम्भसद्भावादावरणानुपलब्धेश्चानुपलम्भादभावः तदभावे चावरणोपलब्धेर्भावो भवति । ततश्च [9]मृदन्तरितमूलकीलोदकादिवदावरणोपलब्धिकृतमेव शब्दस्य प्रागुच्चारणादग्रहणमिति प्रयत्नकार्याभावान्नित्यः शब्द इति । साध्यधर्मनित्यानित्यत्वविकल्पेन शब्दनित्यता[10]पादनं नित्यसमा जातिः । यथा अनित्यः शब्द इति प्रतिज्ञाते जातिवादी विकल्पयति येयमनित्यता शब्दस्योच्यते सा किमनित्या, नित्या वेति । यद्यनित्या; तदियमवश्यमपायिनीत्यनित्यताया[11] अभावान्नित्यः शब्दः । [12]अथ अनित्यता नित्यैवेति[13] तथापि धर्मस्य नित्यत्वात्तस्य च[14] निराश्रितस्यानुपपत्तेः तदाश्रयभूतः शब्दोऽपि नित्य[15] एव[16] भवेत् । स चेन्न; तदनित्यत्वे तद्धर्मनित्यत्वायोगादित्युभयथापि[17] नित्यः शब्द इति । एवं[18] सर्वभावानित्यत्वोपपादनेन प्रत्यवस्थानमनित्यसमा जातिः । यथा घटसाधर्म्यमनित्यत्वेन[19] शब्दस्यास्तीति तस्यानित्यत्वं यदि प्रतिपाद्यते तद् घटेन सर्वपदार्थानामस्त्येव किमपि साधर्म्यमिति तेषामप्यनित्यत्वं स्यात् । अथ पदार्थान्तराणां तथाभावेऽपि नानित्यत्वं तर्हि शब्दस्यापि तन्मा भूदिति अनित्यत्वमात्रापादनपूर्वकविशेषोद्भावनाच्चाविशेषसमातो भिन्नेयं जातिः । प्रयत्नकार्यनानात्वोपन्यासेन प्रत्यवस्थानं कार्यसमा जातिः । यथानित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिवाद्याह—प्रयत्नस्य द्वैरूप्यं दृष्टं किंचिदसदेव तेन जन्यते यथा घटादिकम्, किंचित्सदेवावरणव्युदासादिना अभिव्यज्यते[20] यथा मृदन्तरितमूलकीलादि । एवं प्रयत्नकार्यनानात्वादेष प्रयत्नेन शब्दो व्यज्यते जन्यते वेति संशय इति संशयापादानप्रकारभेदाच्च संशयसमातः कार्यसमा जातिर्भिद्यते । तदेवमुद्भावनविषयविकल्पभेदेन जातीनामानन्त्ये [अ] संकीर्णोदाहरणविवक्षया चतुर्विंशतिजातिभेदा एते दर्शिता इति ।

दूषणाभासानुक्त्वा निग्रहस्थानमाह—

**निग्रहस्थानमाख्यातं परो येन निगृह्यते ।**
**प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवद्[21] ॥३२॥**

---

१. –काशादिना सा–भ. २ । २-३. लब्धेन प्र–भ. २ । ४. तथैवेति भ. २ । ५. –लब्धेन प्रत्यवस्थानादनु–मु., भ. १ । ६. –कत्वमनित्यत्वे हे–प. । ७. स प्राह मु., भ. २, प. २ । ८. –पलम्भोप्य–प. १ । ९. तदन्त–मु., प. २, भ. १, २ । १०.–त्यत्वापा–भ. २, प. १, २ । ११. अपायान्नि–प. १, भ. २ । १२. अथ नित्यैव भ. १, प. १, २, मु. । १३. –त्यैव तथा–प. १, २ । १४. निराश्रयस्या–भ. १ । १५. –एव स–प. १, भ. १, २, मु. । एव चेत्तदनि–प. १, भ. १, २ । १६. –त् तद–प. २ । १७. –था नि–मु. । १८. –वानामनि–प. २ । १९. –त्येन भ. १, २, प. १, २ । २०. व्यज्य–मु. । २१. –द्वतः प. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**येन** केनचिद्रूपेण[1] **परो** विपक्षो **निगृह्यते** परवादी वचननिग्रहे पात्यते **तन्निग्रहस्थानमाख्यातं** कथितमिति । कतिचिद्भेदान्[2] नामतो[3] निर्दिशन्नाह—**प्रतिज्ञाहानिसंन्यासविरोधादिविभेदवत्**[4] । हानिसंन्यासविरोधाः प्रतिज्ञाशब्देन संबध्यन्ते । आदिशब्देन शेषानपि भेदान् परामृशति । एतद्दूषणजालमुत्पाद्यते येन तन्निग्रहस्थानम् । यदुक्तं—**"विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्"** [ न्यायसू० ] । तत्र विप्रतिपत्तिः साधनाभासे साधनबुद्धिः दूषणाभासे च दूषणबुद्धिरिति । अप्रतिपत्तिः साधनस्यादूषणं दूषणस्य चानुद्धरणम् । तद्धि[5] निग्रहस्थानं द्वाविंशतिभेदम् । तद्यथा—प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासश्च[6] । तत्र हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगतवतः[7] प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवति । यथा अनित्यः शब्दः, ऐन्द्रियिकत्वाद् घटवदिति प्रतिज्ञासाधनाय वादी वदन् परेण सामान्यमैन्द्रियिकमपि नित्यं दृष्टमिति हेतावनैकान्तिकी कृते यद्येवं ब्रूयात् सामान्यवत् घटोऽपि नित्यो भवति, स एवं ब्रुवाणः शब्दानित्यत्वप्रतिज्ञां जह्यात् । प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरसाधनमभिदधतः[8] प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति । अनित्यः शब्द ऐन्द्रियिकत्वादित्युक्ते तथैव सामान्येनैव[9] व्यभिचारेणोदिते यदि ब्रूयाद् युक्तं सामान्यमैन्द्रियिकं नित्यं तद्धि सर्वगतमसर्वगतस्तु शब्द इति, सोऽयमनित्यः शब्द इति पूर्वप्रतिज्ञातः प्रतिज्ञान्तरमसर्वगतः शब्द इति प्रतिज्ञान्तरेण निगृहीतो भवति । प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति । यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति, सोऽयं प्रतिज्ञाहेत्वोर्विरोधो यदि गुणव्यतिरिक्तं द्रव्यं कथं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः, अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः कथं गुणव्यतिरिक्तं द्रव्यमिति तदयं प्रतिज्ञाविरुद्धाभिधानात्[10] पराजीयते । पक्षसाधने परेण दूषिते तदुद्धरणाशक्त्या[11] प्रतिज्ञामेव निह्नुवानस्य प्रतिज्ञासंन्यासो नाम निग्रहस्थानं भवति । यथा अनित्यः शब्दः ऐन्द्रियिकत्वादित्युक्ते तथैव सामान्येनानैकान्तिकतायामुद्भावितायां यदि ब्रूयात् क एवमाह 'अनित्यः शब्दः' इति प्रतिज्ञासंन्यासात् पराजितो भवतीति । अविशेषाभिहिते हेतौ प्रतिषिद्धे तद्विशेषणमभिदधतो हेत्वन्तरं नाम निग्रहस्थानं भवति । तस्मिन्नेव प्रयोगे तथैव सामान्येऽस्य[12] व्यभिचारेण दूषिते जातिमत्त्वे सतीत्यादिविशेषणमुपाददानो हेत्वन्तरेण निगृहीतो भवति । प्रकृतादर्थादर्थान्तरं तदौ (तदनौ) पयिकमभिदधतोऽर्थान्तरं नाम निग्रहस्थानं भवति । अनित्यः शब्दः कृतकत्वादिति हेतुः । हेतुरिति[13] हिनोतेर्धातोस्तुप्रत्यये कृदन्तं पदम्, पदं च नामतद्धितनिपातोपसर्गा इति प्रस्तुत्य[14] नामादीनि व्याचक्षाणोऽर्थान्तरेण निगृह्यत इति । अभिधेयरहितवर्णानुपूर्वीप्रयोगमात्रं निरर्थकं नाम निग्रहस्थानं भवति । यथा अनित्यः शब्दः कचतटपानां गजडदबवत्त्वाद् घझढधभवदित्येतदपि सर्वथा अर्थशून्यत्वान्निग्रहाय[15] कल्पेत, साध्यानुपयोगाद्वा । यत्साधनवाक्यं दूषणवाक्यं वा त्रिवारमभिहितमपि[16] पर्षत्प्रतिवादिभ्यां बोद्धुं न शक्यते तदाविज्ञातार्थं[17] नाम निग्रहस्थानं भवति । पूर्वापरासंगतपदसमूहप्रयोगादप्रतिष्ठितवाक्यार्थमपार्थकं नाम निग्रहस्थानं भवति, दश दाडिमानि षडपूपा इति । प्रतिज्ञाहेतूदाहरणोपनयनिगमनवचनक्रममुल्लङ्घ्य अवयवविपर्यासेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालं नाम निग्रहस्थानं भवति । स्वप्रतिपत्तिवत् परप्रतिपत्तेर्जनने परार्थानुमानक्रमस्यापगमात् । पञ्चावयवे वाक्ये प्रयोक्तव्ये तदेकतमेनानुमानावयवेन[19] हीनं न्यूनं नाम निग्रहस्थानं भवति, साधनाभावे साध्यसिद्धेरभावात् प्रतिज्ञादीनां पञ्चानामपि साधनत्वात् । एकेनैव

---

१. –द्रव्येण **म. २, प. १, २** । २. –दानेव ना–**प. १, २, म. २** । ३. निदर्शयन्नाह **प. १** । ४. –दतः **प. २** । ५. तच्च **भ. १, २** । ६. –सः **प. २, भ. १, मु.** । –साश्च **प. १** । ७. –गच्छतः **म. १, प. १, २** । ८. –धनीयम–**भ. १, २** । ९. –न्येन व्य–**प. १, २. म. २** । १०. –ज्ञाहेत्वोर्वि–**प. १, २, म. २** । ११. –द्धारणा–**म. २** । १२. –न्यस्य व्य–**प. १, २, भ. २** । १३. हेतुर्हि–**भ. १, मु.** । १४. प्रस्तुतार्थपरिहारेण ना–**प. २** । १५. –गृहीतो भवति **प. २** । १६. –हणाय **प. १, २, मु. भ. १** । १७. त्रिरभि **भ. २** । १८. तदवि–**प. १, २, भ. २** । १९. तदन्यतमेनाप्यवयवेन **प. १, २, म. २** ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

हेतुनोदाहरणेन वा प्रतिपादितेऽर्थे हेत्वन्तरमुदाहरणान्तरं वा वदतोऽधिकं नाम निग्रहस्थानं भवति। शब्दार्थयोः पुनर्वचनं पुनरुक्तं नाम निग्रहस्थानं भवति। अन्यत्रानुवादात्[1] शब्दपुनरुक्तं नाम यत्र स एव शब्दः पुनरुच्चार्यते यथा अनित्यः शब्दोऽनित्यः शब्द इति। अर्थपुनरुक्तं तु यत्र सोऽर्थः प्रथममन्येन शब्देनोच्चार्यते पुनः पर्यायान्तरेणोच्यते यथा अनित्यः शब्दो विनाशी ध्वनिरिति। अनुवादे तु पौनरुक्त्यमदोषः। यथा[2] हेतूपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति। [3]पर्षदाविदितस्य वादिभिरभिहितस्यापि यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानं भवति। पर्षदा विज्ञातस्यापि वादिवाक्यार्थस्य प्रतिवादिनो यदज्ञानं तदज्ञानं नाम निग्रहस्थानं भवति। अविदितोत्तरविषयो हि किमुत्तरं ब्रूयात्। न चाननुभाषणमेवेदम्, ज्ञातेऽपि वस्तुन्यनुभाषणासामर्थ्यदर्शनात्। परपक्षे गृहीतेऽप्यनुभाषितेऽपि तस्मिन्नुत्तराप्रतिपत्तिरप्रतिभा नाम निग्रहस्थानं भवति। कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपो नाम निग्रहस्थानं भवति। सिषाधयिषितस्यार्थस्याशक्यसाधनतामवसाय कथां विच्छिनत्तीदं [4]मम करणीयं परिहीयते, पीनसेन कण्ठ उपरुद्ध इत्याद्यभिधाय कथां विच्छिन्दन् विक्षेपेण पराजीयते। स्वपक्षे [5]परापादितदोषमनुद्धृत्य तमेव परपक्षे [6]प्रतीपमापादयतो मतानुज्ञा नाम निग्रहस्थानं भवति। चौरो भवान् पुरुषत्वात् प्रसिद्धचौरवदित्युक्ते, भवानपि चौरः पुरुषत्वादिति ब्रुवन्नात्मनः [7]परापादितचौरत्वदोषमभ्युपगतवान् भवतीति मतानुज्ञया निगृह्यते। निग्रहप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं भवति। पर्यनुयोज्यो नाम निग्रहोपपत्त्यावश्यं नोदनीयः 'इदं ते निग्रहस्थानमुपनतमतो निगृहीतोऽसि' इत्येवं वचनीयस्तमुपेक्ष्य न निगृह्णाति यः स पर्यनुयोज्योपेक्षणेन निगृह्यते। अनिग्रहस्थाने निग्रहस्थानानुयोगान्निरनुयोज्यानुयोगो नाम निग्रहस्थानं भवति। उपपन्नवादिनमप्रमादिनमनिग्रहार्हमपि निगृहीतोऽसीति यो ब्रूयात्स [8]एवाभूतदोषोद्भावनान्निगृह्यत इति। सिद्धान्तमभ्युपेत्य[अ]नियमात्कथाप्रसङ्गोऽपसिद्धान्तो नाम निग्रहस्थानम्[9]। यः प्रथमं कंचित्सिद्धान्तमभ्युपगम्य कथामुपक्रमते,[10] तत्र च सिषाधयिषितार्थसाधनाय परोपालम्भाय[11] वा सिद्धान्तविरुद्धमभिधत्ते सोऽपसिद्धान्तेन निगृह्यते। हेत्वाभासाश्च यथोक्ता असिद्धविरुद्धादयो निग्रहस्थानम् इति। भेदान्तरानन्त्येऽपि निग्रहस्थानानां द्वाविंशतिर्मूलभेदा निवेदिता इति[12]।

अथोपसंहरन्नाह—

**नैयायिकमतस्यैवं समासः कथितोऽधुना।**
**सांख्याभिमतभावानामिदानीमयमुच्यते ॥३३॥**

**एवम्** इत्थंप्रकारतया **नैयायिकमतस्य** [13]शैवशासनस्य **समासः** संक्षेपोऽधुना **कथितो** निवेदितः साम्प्रतमेव निष्ठित इत्यर्थः। **इदानीं पुनरयं** समासः **सांख्याभिमतभावानाम् उच्यते।** सांख्याः कापिला इत्यर्थः। तदभिमता[14] तदभीष्टा ये भावाः पञ्चविंशतितत्त्वादयस्तेषां संक्षेपोऽतः परं कथ्यत इत्यर्थः॥

तदेवाह[15]—

**एतेषां या समावस्था सा प्रकृतिः किलोच्यते।**
**प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥३४॥**

**एतेषां** सांख्यानां **प्रकृतिः** प्रीत्यप्रीतिविषादात्मकानां लाघवोपष्टम्भगौरवधर्माणां[16] परस्परोपकाराणां सत्त्वरजस्तमसां त्रयाणामपि गुणानां **या साम्यावस्था** समतयावस्थितिः **सा किल प्रकृतिरुच्यते,** किलेत्याप्तप्रवादे, सा प्रकृतिः कथ्यते। अन्यच्च सा **प्रधानाव्यक्तशब्दाभ्यां वाच्या** [17]प्रधानशब्देन अव्यक्तशब्देन च

---

१. –रुक्त्वे तु–भ. १। २. हेतुनिर्दे–प. २। ३. –दावेदि–मु.। ४. मे भ. १, २। ५. परोत्पादि–प. १, २। ६. प्रतीतिमा– मु.। ७. परोत्पादि–प. १। ८. –वासद्भूत प. १, २। ९. –नं भवति प. १, भ. १, २। १०. –मुपाक्र–मु.। ११. –लम्भो यथा सि–मु.। १२. इत्यर्थः प. १, २। १३. शिव–मु. भ. २। १४. तद्दर्शनाभी–प. १, २, भ. १। १५. एतदेवाह भ. १। १६. –र्माणां स–मु., भ. २। १७. प्रधानाव्य– प. २, मु., भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

प्रकृतिराख्यायते । शास्त्रे प्रकृतिः प्रधानमव्यक्तं चेति [1] पर्याया न तत्त्वान्तरमित्यर्थः । [2] तथा **नित्यस्वरूपिका** शाश्वतभावतया प्रसिद्धेत्यर्थः । उच्यते च नित्या नानापुरुषाश्रया च तद्दर्शनेन प्रकृतिर्यदाह—

**"तस्मान्न [3] बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥"** इति ।

दर्शनस्वरूपमाह—

**सांख्या निरीश्वराः केचित्केचिदीश्वरदेवताः ।**
**सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः ॥३५॥**

**केचित्सांख्या निरीश्वरा** ईश्वरं देवतया न मन्यन्ते [4] केवलाध्यात्मवेदिनः । **केचित्पुनरीश्वरदेवता** महेश्वरं स्वशासनाधिष्ठातारमाहुः । [5] **सर्वेषामपि ।** तेषां केवलनित्यात्म[6]वादिनामीश्वरदेवतानां च सर्वेषां सांख्यमतानुसारिणां शासने **तत्त्वानां पञ्चविंशतिः** स्यात् । तत्त्वं ह्यपवर्गसाधकं बीजमिति सर्ववादिसंवादः । यदुक्तम् ।

**"पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।**
**जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥"**

तन्मते पञ्चविंशतिस्तत्त्वानीत्यर्थः ।

गुणत्रयमाह—

**सत्त्वं रजस्तमश्चेति ज्ञेयं तावद् गुणत्रयम् ।**
**प्रसादतोषदैन्यादि[7]कार्यलिङ्गं क्रमेण तत् ॥३६॥**

**तावदिति** प्रक्रमे । तेषु तत्त्वेषु सत्त्वं सुखलक्षणं रजोदुःखलक्षणं तमश्चेति मोहलक्षणं प्रथमं तावत् गुणत्रयम् **सत्त्वं रजस्तमश्चेति गुणत्रयं ज्ञेयम् । तद्** गुणत्रयं **क्रमेण** परिपाट्या, **प्रसादतोषदैन्यादिकार्यलिङ्गं** गुणत्रयेणेदं लिङ्गत्रयं क्रमेण जन्यते । सत्त्वगुणेन प्रसादकार्यलिङ्गं वदननयनादिप्रसन्नता सत्त्वगुणेन स्यादित्यर्थः । रजोगुणेन तोषः स चानन्दपर्यायः, तल्लिङ्गानि स्फूर्त्यादीनि रजोगुणेनाभिव्यज्यन्त इत्यर्थः । तमोगुणेन च दैन्यं जन्यते 'हा दैव नष्टोऽस्मि, वञ्चितोऽस्मि' इत्यादिव[8]चनविच्छायतानेत्रसंकोचादिव्यङ्ग्यं दैन्यं तमोगुणलिङ्गमिति । दैन्यादीत्यादिशब्देन दुःखत्रयमाक्षिप्यते, तद्यथा आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति । तत्राध्यात्मिकं द्विविधं शारीरं मानसं च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम्, मानसं कामक्रोधलोभमोहेर्ष्याविषयादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखं द्वेधा[9], आधिभौतिकम् आधिदैविकं चेति । तत्राधिभौतिकं मानुषपशुमृगपक्षिसरीसृपस्थावरनिमित्तम्,[10] आधिदैविकं यक्षराक्षसग्रहाद्यावेशहेतुकमिति ।

अनेन दुःखत्रयेणाभिहतस्य प्राणिनस्तत्त्वजिज्ञासोत्पद्यते अतस्तान्येव तत्त्वान्याह—

**ततः संजायते बुद्धिर्महानिति यकोच्यते ।**
**अहंकारस्ततोऽपि स्यात्तस्मात्षोडशको गणः ॥३७॥**

**ततो** गुणत्रयाभिधाताद् **बुद्धिः संजायते यका बुद्धिर्महानिति उच्यते** महच्छब्देन कीर्त्यत इत्यर्थः । एवमेतन्नान्यथा, गौरयं[11] नाश्वः, [12] स्थाणुरेष नायं पुरुष इत्येवं निश्चयस्तेन पदार्थप्रतिपत्तिहेतुर्योऽध्यवसायः सा

१. पर्यायान्तरमि–प. १, २, म. १ । २. यथा प. १, २ । ३. –ते नापि मु–प. १, भ. १ । ४. केवलात्म प. १ । सर्वेषामिति प. २, म. १, २ । ६. –त्मवेदि–प. २ । ७. कार्यं लि–भ. २ । ८. –वचोवि –प. २, भ. १ । ९. द्विधा प. २ । १०. –निर्मितम् प. १, २, भ. १, २ । ११. गौरेवायं प. १, २, भ. १ । १२. स्थाणुरेवायं प. १, २, भ. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

बुद्धिरिति । तस्यास्त्वष्टौ रूपाणि तद्दर्शनविश्रुतानि । यदाह--धर्मज्ञानवैराग्यैश्वर्यरूपाणि चत्वारि सात्त्विकानि, अधर्मादीनि तु तत्प्रतिपक्षभूतानि चत्वारि तामसानीत्यष्टौ । **ततो बुद्धेरहंकारः** स चाभिमानात्मको यथा[1] अहं शब्दे, अहं रूपे, अहं रसे, अहं स्पर्शे, अहं गन्धे, अहं स्वामी, अहम् ईश्वरः, असौ मया हतः, अहं त्वां हनिष्यामीत्यादिप्रत्ययरूपः **तस्मादहंकारात्षोडशको गणो** 'जायते' इत्यध्याहारः अस्ति भवतीत्यादिवत् । पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि एकादशं मनः पञ्च भूतानि षोडशको गणः । तथाह ईश्वरकृष्णः—

**"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"** इति ।

षोडशकगणमेवाह—

**स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम् ।**
**पञ्च बुद्धीन्द्रियाण्याहुस्तथा कर्मेन्द्रियाणि च ॥३८॥**
**पायूपस्थवचःपाणिपादाख्यानि मनस्तथा ।**
**अन्यानि पञ्चरूपाणि तन्मात्राणीति षोडश ३९॥** युग्मम् ।

**पञ्च बुद्धीन्द्रियाणीति** संबन्धः । **स्पर्शनं** त्वगिन्द्रियम्, **रसनं** जिह्वा, **घ्राणं** नासिका, **चक्षुर्नेत्रं**[2] **पञ्चमं च श्रोत्रं** कर्ण इति, एतानि **पञ्च**बुद्धिप्रधानानि बुद्धिसहचराण्येव ज्ञानं जनयन्तीति कृत्वा **बुद्धीन्द्रियाण्याहुः** कथयन्ति तन्मतीया इति । **तथाकर्मेन्द्रियाणि** चेति ।[3] तथा पूर्वोद्दिष्टपञ्चसंख्यामात्रमपि परामृशति । तान्येवाह—**पायूपस्थवचःपाणिपादाख्यानीति** । पायुरपानम्, उपस्थः प्रजननम्, वचो वाक्यम्, पाणिर्हस्तः, पादश्चरणस्तदाख्यानि पञ्च कर्मेन्द्रियाणि, कर्म[4] कार्यव्यापारस्तस्य साधनानीन्द्रियाणीति कर्मेन्द्रियाणि । तथा **मन** एकादशमिन्द्रियमित्यर्थः । **अन्यानि पञ्चरूपाणि तन्मात्राणि चेति** ।[5] रूपरसगन्धशब्दस्पर्शाख्यानि तन्मात्राणीति **षोडश** ज्ञेयाः ।

पञ्चतन्मात्रेभ्यः पञ्चभूतोत्पत्तिमाह—

**रूपात्तेजो रसादापो गन्धाद्भूमिः स्वरान्नभः ।**
**स्पर्शाद्वायुस्तथै[6]वं च पञ्च[7]भ्यो भूतपञ्चकम् ॥४०॥**

**पञ्चभ्य** इति, पञ्चतन्मात्रेभ्यः **पञ्चभूतकमिति** संबन्धः । रूपतन्मात्रात्तेजः, रसतन्मात्रादापः, **गन्धतन्मात्राद् भूमिः**,[8] **स्वरतन्मात्रादाकाशम्, स्पर्शतन्मात्राद्वायुः, एवं** पञ्चतन्मात्रेभ्यः पञ्च भूतान्युत्पद्यन्ते । असाधारणैकैकगुणकथनमिदम्, उत्पत्तिश्च शब्दतन्मात्रादाकाशं शब्दगुणम्, शब्दो ह्यम्बरगुण इति । शब्दतन्मात्रसहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणमिति । शब्दस्पर्शतन्मात्रसहिताद् रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणमिति । शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणा इति । शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इति पञ्चभूतकमित्यर्थः ।

प्रकृतिविस्तरमेवोपसंहरन्नाह—

**एवं चतुर्विंशतितत्त्वरूपं निवेदितं सांख्यमते प्रधानम् ।**
**अन्यस्त्वकर्ता विगुणस्तु भोक्ता तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥४१॥**

---

१. अत्र क्रमेण प्रतीतिपञ्चकाकारस्थाने, अहं शृणोमि, अहं रूपयामि, अहं रसयामि, अहं स्पृशामि, अहं जिघ्रामि, इत्येवाकारपञ्चकं ज्याय इति भाति, भूले निर्दिष्टाकारकप्रतीतीनामननुभविकत्वाद् । ग्रन्थकारलेखानुपूर्वीभङ्गभिया तु मूलस्थपाठो न परावर्त्ति । —मु. टि. । २. –मं श्रो–मु., म. २ । ३. तथेति पु.—प. १, २, म. १ । ४. —र्मक्रियाव्या— प. १, २, म. १ । ५. शब्दरूपरसगन्धस्पर्शा— प. १, २, म. १ । ६. तथा चैवं प. १, २, म. १ । ७. —भ्यः पञ्चभूतकम् प. १, २, म. १ । ८. —त्रात् आका—म. २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

एवं पूर्वोक्तप्रकारेण **सांख्यमते चतुर्विंशतितत्त्वरूपं प्रधानं निवेदितम्** । [1]प्रकृतिर्महानहंकारश्चेति त्रयम्, पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, [2]मनस्त्वेकम्, पञ्च तन्मात्राणि, पञ्चभूतानि, चेति चतुर्विंशतिस्तत्त्वानि रूपं यस्येति, एवंविधा प्रकृतिः कथितेत्यर्थः । पञ्चविंशतितमं तत्त्वमाह—**अन्यस्त्विति** । **अन्योऽकर्ता पुरुषः**, प्रकृतेरेव संसरणादिधर्मत्वात् । यदुक्तं—प्रकृतिः करोति प्रकृतिर्बध्यते प्रकृतिर्मुच्यते, न तु पुरुषः, पुरुषोऽबद्धः पुरुषो मुक्तः । पुरुषस्तु—

**"अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः ।**
**अकर्ता निर्गुणः सूक्ष्मः आत्मा कापिलदर्शने ॥"**

पुरुषगुणानाह—**विगुण** इति । सत्त्वरजस्तमोरूपगुणत्रयविकलः । तथा **भोक्ता** भोगी, एवंप्रकारः **पुमान् तत्त्वं** पञ्चविंशतितमं तत्त्वमित्यर्थः । तथा **नित्यचिदभ्युपेतः**, नित्या चासौ चिच्चैतन्यशक्तिस्तयाभ्युपेतः सहितः । आत्मा हि स्वं बुद्धेरव्यतिरिक्तमभिमन्यते । सुखदुःखादयश्च विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति । बुद्धिश्चोभयमुखदर्पणाकारा । ततस्तस्यां चैतन्यशक्तिः प्रतिबिम्बते । ततः सुख्यहं दुःख्यहमित्युपचर्यते । आह च [3]पातञ्जले, **"शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति तमनुपश्यन्नतदात्माऽपि तदात्मक इव प्रतिभासते"** [ योगभा० ] इति मुख्यतस्तु चिच्छक्तिर्विषयपरिच्छेदशून्या, बुद्धेरेव विषयपरिच्छेदस्वभावत्वात् चिच्छक्तिसंनिधानाच्चाचेतनापि बुद्धिश्चेतनावतीवावभासते । वादमहार्णवोऽप्याह—

**"बुद्धिदर्पणसंक्रान्त[4]मर्थप्रतिबिम्बकम् ।**
**द्वितीयदर्पणकल्पे[5] पुरुषे ह्यधिरोहति ॥"**

तदेव भोक्तृत्वमस्य न तु [6]विकारोत्पत्तिरिति । तथा चासुरिः—

**"विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते ।**
**प्रतिबिम्बोदयः [7]स्वच्छे यथा चन्द्रमसोऽम्भसि ॥"**

विन्ध्यवासी त्वेवं भोगमाचष्टे—

**"पुरुषोऽविकृतात्मैव[8] स्वनिर्भासमचेतनम्**
**मनः करोति सांनिध्यादुपाधेः स्फटिकं यथा ॥"** [ ] इति

नित्यचिज्ज्ञानयुक्तः ।

बन्धमोक्षसंसाराश्च नित्येऽप्यात्मनि भृत्यगतयोर्जयपराजययोरिव तत्फलकोशलाभादिसंबन्धेन स्वामिन्युपचारवदत्राप्युपचर्यन्त इत्यदोषः ।

तत्त्वोपसंहार[9]माह—

**पञ्चविंशतितत्त्वानि सांख्यस्यैव[10] भवन्ति च ।**
**प्रधाननरयोश्चात्र वृत्तिः पङ्ग्वन्धयोरिव ॥४२॥**

पूर्वार्धं निगदसिद्धम् । **अत्र** सांख्यमते **प्रधाननरयोः** प्रकृतिपुरुषयो**र्वृत्तिर्**वर्तनं **पङ्ग्वन्धयोरिव** पङ्गुश्चरणविकलः, अन्धश्च नेत्रविकलः । यथा पङ्ग्वन्धौ संयु[11]क्तावेव कार्यसाधनाय प्रभवतो न पृथग्भूतौ । प्रकृतिपुरुषयोरपि तथैव कार्यकर्तृत्वम् । प्रकृत्युपात्तं पुरुषो भुङ्क्त इत्यर्थः ।

मोक्षं प्रमाणं चाह—

**प्रकृतिवियोगो मोक्षः [12]पुरुषस्यैवान्तरज्ञानात् ।**
**मानत्रितयं च[13] भवेत् प्रत्यक्षं लैङ्गिकं शाब्दम् ॥४३॥**

---

१. प्रकृतेर्म—प. १, २ । २. मनश्चैकम् प. १, २, भ. १ । ३. पातञ्जलिः भ. १ । ४. —र्थप्रतिबिम्बके प. २ । ५. पुंस्यध्यवरोहति प. १, २, भ. १ । ६. —कारापत्ति—प. १, २, भ. १ । ७. स्वच्छो मु., प. १, २, भ. २ । ८. —त्मैवं भ. १ । ९. र एवम् भ. १ । १०. सांख्यैव प. १ । ११. संयुतावेव भ. १, प. १, २ । १२. —स्य बतैतदन्तरं ज्ञा— प. २ । —स्यान्तरज्ञा—भ. १, २,प. १ । १३. चात्र प्र— भ. १ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

**मोक्षः** किमुच्यत इत्याह । **पुरुषस्यात्मन आन्तरज्ञानात्** त्रिविधबन्धविच्छेदात्**प्रकृतिवियोगो** यः स **मोक्षः** प्रकृत्या सह वियोगे विरहे सति पुरुषस्यापवर्ग इति । आन्तरज्ञानं **च** बन्धविच्छेदाद्भवति । बन्धश्च प्राकृतिकवैकृतिकदाक्षिणभेदात्[1] त्रिविधः । तद्यथा, प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः । ये विकारानेव भूतेन्द्रियाहंकारबुद्धीः पुरुषबुद्धयोपासते तेषां वैकारिकः । इष्टापूर्ते दाक्षिणः, इष्टापूर्तं जनभोजनदानादिकं तस्मिन्, पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी[2] कामोपहतमना बध्यत इति ।

**"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यत् श्रेयो येऽभिनन्दन्ति मूढाः ।**

**नाकस्य पृष्ठे ते सुकृतेन भूत्वा इमं लोकं हीनतरं वा विशन्ति ॥"** [ ]

इति वचनात् ।

इति त्रिविधबन्धविच्छेदात्परमब्रह्मज्ञानानुभवस्ततः प्रकृतिवियोगः पुरुषस्य, प्रकृतिपुरुषविवेकदर्शनाच्च निवृत्तायां प्रकृतौ, पुरुषस्य स्वरूपावस्थानं मोक्ष इति श्लोकपूर्वार्द्धार्थः । **मानत्रितयं** च प्रमाणत्रयं च, **भवेत्** स्यात्, **प्रत्यक्षं लैङ्गिकं शब्दं** च, चकारः सर्वत्र संबध्यते । प्रत्यक्षमिन्द्रियोपलभ्यम्, लैङ्गिकमनुमानगम्यम्, शाब्दं चागमस्वरूपमिति प्रमाणत्रयम् ।

अथोपसंहरन्नाह[3]—

**एवं सांख्यमतस्यापि समासः कथितोऽधुना[4] ।**

**जैनदर्शनसंक्षेपः कथ्यते सुविचारवान् ॥४४॥**

**एवं** पूर्वोक्तप्रकारेण **सांख्यमतस्यापि समासः** संक्षेपः **कथितः** । **अपि** समुच्चयार्थे न केवलं बौद्धनैयायिकयोः संक्षेप उक्तः, सांख्यमतस्याप्यधुना कथित इति । सांख्य इति पुरुषनिमित्तेयं संज्ञा । [5]**संख्यस्य** इमे सांख्याः । [6]तालव्यो वा शकारः, शङ्खनामाऽऽदिपुरुषः ।

अथ क्रमायातं जैनमतोद्देशमाह—अधुनेत्युत्तरार्द्धेन वा संबध्यते । **अधुना** इदानीं **जैनदर्शनसंक्षेपः कथ्यते** कथंभूत इति । **सुविचारवान्** । सुष्ठु शोभनो विचारोऽर्थोऽस्यास्तीति[7] मत्वर्थीये मतुप् । सुविचारवानिति साभिप्रायं पदम् । अपरदर्शनानि हि ।

**"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।**

**आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥"** [ ]

इत्याद्युक्त्या न विचारपदवीमाद्रियन्ते । जैनस्त्वाह—

**"अस्ति वक्तव्यता काचित्तेनेदं न विचार्यते ।**

**निर्दोषं काञ्चनं चेत्स्यात्परीक्षाया बिभेति किम् ॥"** [ ]

इति युक्तियुक्तविचारपरम्परापरिचयपथपथिकत्वेन जैनो युक्तिमार्गमेवावगाहते । न च पारम्पर्यादिपक्षपातेन युक्तिमुल्लङ्घयति परमार्हतः । उक्तं च—

**"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।**

**युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः"** ॥ [ ]

इत्यादिहेतुहेतिशतनिरस्तविपक्षप्रसरत्वेन **'सुविचारवान्'** इत्यसाधारणं विशेषणं[8] ज्ञेयमिति ।

---

१. वैकारिक– प. १, २, भ. १ । २. हीष्टकारी मु., भ. २ । ३. –संहारमाह भ. १ । ४. गदितो– भ. १ । ५. संखस्य प. १, २, भ. १ । ६. अप्रामाणिकोऽयं कल्पः । प्रथमकल्पस्तु कथमपि संगमनीयः । वस्तुतस्तु, "शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते" इति व्याससमृत्या भावार्थकाङ्प्रत्ययनिष्पन्नज्ञानवाचकसंख्याशब्दात्संबन्धिबोधकशैषिकाणा "सांख्य"शब्दः सिद्धः । यद्वा "संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशतितत्त्वानि तेन सांख्याः प्रकीर्त्तिताः" इति भारतात्, संख्याशब्दाद्वेदार्थकाणा निष्पन्नः "सांख्य" शब्दः । उभयथाऽपि योगरूढः । मु. । टी. । ७. –स्तीत्यर्थे म– मु. । ८. –णविशेषणप्रसरणं मु. ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तदेवाह—

जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः ।
हतमोहमहामल्लः केवलज्ञानदर्शनः ॥४५॥
सुरासुरेन्द्रसंपूज्यः सद्भूतार्थोपदेशकः ।
कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम् ॥४६॥

**तत्र** तस्मिन् जैनमते **जिनेन्द्रो देवता** कृत्स्नकर्मक्षयं कृत्वा परमं पदं समाप्त इति संबन्धः । जिनेन्द्र इति जयन्ति रागादीनिति जिनाः सामान्यकेवलिनस्तेषामिन्द्रः स्वामी तादृशासदृशचतुस्त्रिंशदतिशय[2]संपत्सहितो जिनेन्द्रो देवता दर्शनप्रवर्तक आदिपुरुषः, एष कीदृक्[3] सन् शिवं **संप्राप्त** इति परासाधारणानि विशेषणान्याह— **रागद्वेषविवर्जित** इति रागः सांसारिकस्नेहोऽनुग्रहलक्षणः, द्वेषो वैराग्याद्यनुबन्धान्निग्रहलक्षणः, ताभ्यां विवर्जितो रहितः । एतावेव दुर्जयौ दुरन्तभवसंपातहेतुकतया च मुक्तिप्रतिरोधकौ समये प्रसिद्धौ । यदाह—

**"को दुक्खं पाविज्जा कस्स न सुक्खेहिं विम्हओ हुज्जा ।**
**को य न लभेज मुक्खं रागद्दोसा जइ न हुज्जा ॥"** [ ] इति ।

तथा **हतमोहमहामल्लः** मोहनीयकर्मोदयात्[4] हिंसात्मकशास्त्रेभ्योऽपि मुक्तिकाङ्क्षणादिव्यामोहो मोहः स एव दुर्जेयत्वान्[5]महामल्ल इव महामल्लः, हतो[6] मोहमहामल्लो येनेति स तथा । रागद्वेषमोहसद्भावादेव न चान्यतीर्थाधिष्ठातारो मुक्त्यङ्गतया प्रतिभासन्ते, तत्सद्भावश्च तेषु सुज्ञेय एव । यदुक्तम्—

**"रागोऽङ्गनासङ्गमनानुमेयो द्वेषो[7] द्विषाद् दारणहेतिगम्यः ।**
**मोहः कुवृत्तागमदोषसाध्यो नो यस्य देवस्य स चैवमर्हन् ॥"**

इति रागद्वेषमोहरहितो भगवान् । **तथा केवलज्ञानदर्शनः** । धवखदिरपलाशादिव्यक्तिविशेषावबोधो ज्ञानम् । वनमिति सामान्यावबोधो दर्शनम् । केवलशब्दश्चोभयत्र संबध्यते । केवलमिन्द्रियादिज्ञानानपेक्षं ज्ञानं दर्शनं च यस्येति । केवलज्ञानकेवलदर्शनात्मको हि भगवान् करतलकलितविमलमुक्ताफलवद्द्रव्यपर्यायविशुद्धमखिलमिदमनवरतं जगत्स्वरूपं पश्यतीति केवलज्ञानदर्शन इति पदं साभिप्रायम् । छद्मस्थस्य[9] हि प्रथमं दर्शनमुत्पद्यते, ततो ज्ञानं, केवलिनस्त्वादौ ज्ञानं ततो दर्शनमिति । **तथा सुरासुरेन्द्रसंपूज्यः** । [10]सेवावधानसावधाननिरन्तरढौकमानदासायमानदेवदानवनायक[11]वन्दनीयः । तादृशैरपि पूज्यस्य मानवतिर्यक्खेचरकिंनरनिकर[12]संसेव्यत्वमानुषङ्गिकमिति । **तथा सद्भूतार्थोपदेशकः** । सद्भूतार्थान् द्रव्यपर्यायरूपान् नित्यानित्यसामान्यविशेषसदसदभिलाप्यानभिलाप्याद्यनन्तधर्मात्मकान् पदार्थानुपदिशति यः स इति ।

उत्पादव्ययध्रौव्यात्मकं च सदिति अभिमन्यमानो जैनः एकान्तनित्यपक्षमेकान्तानित्यपक्षं चेत्थं विघटयति । तथा हि—वस्तुनस्तावदर्थक्रियाकारित्वं लक्षणम् । तच्च नित्यैकान्ते न घटते । अप्रच्युतानुत्पन्नस्थिरैकरूपो हि नित्यः, स च क्रमेणार्थक्रियां कुर्वीताक्रमेण वा । अन्योन्यव्यतिरिक्तधर्माणामर्थानां प्रकारान्तरेणोत्पादाभावात् । तत्र न क्रमेण; स हि कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यात् समर्थस्य कालक्षेपायोगात्, कालक्षेपिणो[13] वासामर्थ्यप्राप्तेः । समर्थोऽपि हि तत्तत्सहकारिसमवधाने तं तमर्थं करोतीति चेद्, न तर्हि तस्य सामर्थ्यमपरसहकारिसापेक्षवृत्तित्वात् **'सापेक्षमसमर्थम्'** [ ] इति न्यायात् । न तेन सहकारिणोऽपेक्ष्यन्ते, अपि तु कार्यमेव सहकारिष्वसत्स्वभवत्तानपेक्षत इति चेत् तर्त्कि स भावोऽसमर्थः समर्थो वा । समर्थश्चेत्कि[14] सहकारिमुखप्रेक्षणदीनानि, तान्यपेक्षते न पुनर्झटिति घटयति । ननु समर्थमपि बीजमिलाजलानिलादि[15]

१. –र्थप्रका– प. २ । २. –म्पन्महि–भ. १, प. १, २ । ३. –क् शिवं मु., भ. २ । ४. –याच मु., प. १, २, भ. २ । ५. दुर्जय–प. १ । ६. मोहो महा–मु., भ. २ । ७. द्विषां दा –मु., भ. २ । ८. देवः स स चैव–प. १, २, भ. १ । ९. अन्यस्य मु., भ. २ । १०. सेवाविधान–मु., प. १, २, भ. २ । ११. नवव–मु., भ. २ । १२. करसरसरसे–प. १, भ. १ । १३. वा सामर्थ्याप्राप्तेः मु., भ. २ । १४. सहकारिप्रेक्षणादीनि मु. । १५. –लाजलादि–प. १, २, भ. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सहकारिसहितमेवाङ्कुरं करोति नान्यथा, तत्किं [1]बीजस्य सहकारिभिः किंचिदुपक्रियते, न वा। यदि नोपक्रियते तदा सहकारिसंनिधानात्प्रागिव किं न सोऽर्थक्रियायामुदास्ते, उपक्रियते चेत्, स तर्हि तैरुपकारो भिन्नोऽभिन्नो वा क्रियते[2] इति वाच्यम्। अभेदे, स एव क्रियत इति लाभमिच्छतो मूलक्षतिरायाता, कृतकत्वेन तस्यानित्यत्वापत्तेः। भेदे सति कथं तस्योपकारः किं न सह्यविन्ध्यादेरपि। तत्संबन्धात्तस्यायमिति चेत्, उपकार्योपकारकयोः कः संबन्धः। न तावत्संयोगः, द्रव्ययोरेव तस्य भावात्। अत्र तूपकार्यं द्रव्यमुपकारश्च क्रियेति न संयोगः। नापि समवायः, तस्यैकत्वाद्व्यापकत्वाच्च प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वान्न नियतैः संबन्धिभिः संबन्धो युक्तः। नियतसंबन्धिसंबन्धे चाङ्गीक्रियमाणे तत्कृतोपकारोऽस्य समवायस्याभ्युपगन्तव्यः, तथा च सत्युपकारस्य भेदाभेदकल्पना तदवस्थैव। उपकारस्य समवायादभेदे समवाय एव कृतः स्यात् भेदे पुनरपि समवायस्य न नियतसंबन्धे संबन्धत्वम्। तन्नैकान्तनित्यो भावः क्रमेणार्थक्रियां कुरुते। नाप्यक्रमेण; न ह्येको भावः सकल[3]कालकलाभाविनीर्युगपत्सर्वाः क्रियाः करोतीति प्रातीतिकम्, कुरुतां वा तथापि स द्वितीयक्षणे किं कुर्यात्। करणे वा[4] क्रमपक्षभावी दोषः। अकरणे त्वर्थक्रियाकारित्वाभावादवस्तुत्वप्रसंग इत्येकान्तनित्यात् क्रमाक्रमाभ्यां व्याप्तार्थक्रिया व्यापकानुपलब्धिबलाद् व्यापकनिवृत्तौ निवर्तमाना व्याप्यमर्थक्रियाकारित्वं निवर्तयति। अर्थक्रियाकारित्वं च निवर्तमानं स्वव्याप्यं सत्त्वं निवर्तयतीति नैकान्तनित्यपक्षो युक्तिक्षमः।

एकान्तानित्यपक्षोऽपि न कक्षीकरणार्हः। अनित्यो हि प्रतिक्षणविनाशी, स च न क्रमेणार्थक्रियासमर्थो देशकृतस्य कालकृतस्य च [5]क्रमस्यैवाभावात्। क्रमो हि पौर्वापर्यम् [6]तच्च क्षणिकस्यासम्भवि अवस्थितस्यैव हि नानादेशकालव्याप्तिर्देशक्रमः कालक्रमश्चाभिधीयते। न [7]चैकान्तविनाशिनि सास्ति। यदाहुः—

**"यो यत्रैव स तत्रैव यो यदैव तदैव सः।**
**न देशकालयोर्व्याप्तिर्भावानामिह विद्यते॥"**

न च संतानापेक्षया पूर्वोत्तरक्षणानां क्रमः संभवति। संतानस्यावस्तुत्वात्। वस्तुत्वेऽपि तस्य यदि क्षणिकत्वम्; न तर्हि क्षणेभ्यः कश्चिद्विशेषः। अथाक्षणिकत्वम्; तर्हि समाप्तः क्षणभङ्गवादः। नाप्यक्रमेणार्थक्रिया क्षणिके संभवति; स ह्येको बीजपुरादिरूपादिक्षणो युगपदनेकान् रसादिक्षणान् जनयन्नेकेन स्वभावेन जनयेत्, नानास्वभावैर्वा। यद्येकेन; तदा तेषां रसादिक्षणानामेकत्वं स्यादेकस्वभावजन्यत्वात्। अथ नानास्वभावैर्जनयति किंचिद्रूपादिकमुपादानभावेन किंचिद्रसादिकं सहकारित्वेनेति; ते तर्हि स्वभावास्तस्यात्मभूताः, अनात्मभूता वा। अनात्मभूताश्चेत्; स्वभावत्वहानिः। यद्यात्मभूताः; तर्हि तस्यानेकत्वमनेकस्वभावत्वात् तेषाम्, स्वभावानां वैकत्वं प्रसज्येत। तदव्यतिरिक्तत्वात्तेषां तस्य चैकत्वात्। अथ य एवैकत्रोपादानभावः स एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते; तर्हि नित्यस्यैकरूपस्य क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसांकर्यं च कथमिष्यते, क्षणिकवादिना। अथ नित्यमेकस्वरूपत्वादक्रमम्, अक्रमाच्च क्रमिणां नानाकार्याणां कथमुत्पत्तिरिति चेत्; अहो स्वपक्षपक्षपाती देवानांप्रियः। यः खलु स्वयमेकस्मान्निरंशाद्रूपादिक्षणलक्षणात्कारणात्, युगपदनेककारणसाध्यान्यनेककार्याण्यङ्गीकुर्वाणोऽपि परपक्षे नित्येऽपि वस्तुनि क्रमेण नानाकार्यकरणेऽपि विरोधमुद्भावयति। तस्मात्क्षणिकस्यापि भावस्याक्रमेणार्थक्रिया दुर्घटा इत्यनित्यैकान्तादपि क्रमाक्रमयोर्निवृत्यैव व्याप्यार्थक्रिया व्यावर्तते। तद्व्यावृत्तौ च सत्त्वमपि व्यापकानुपलम्भबलेनैव निवर्तत इत्येकान्तानित्यवादोऽपि न रमणीयः। स्याद्वादे तु पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षणपरिणामेन भावानामर्थक्रियोपपत्तिरविरुद्धा। न चैकत्र वस्तुनि परस्परविरुद्धधर्माध्यासायोगादसन् स्याद्वाद इति वाच्यम्। नित्यपक्षानित्यपक्षविलक्षणस्य कथंचित्सदसदात्मकस्य पक्षान्तरस्याङ्गीक्रियमाणत्वात् तथैव च सर्वैरनुभवादिति। तथा च पठन्ति—

---

१. तस्य प. १, २, भ. १। २. क्रियेत इति प. १, २। ३. कालभा– मु.। –कालकलापभा– प. २। ४. वाक्रम– प. १, २, भ. १। ५. –सस्याभा– प. १। ६. तत्क्ष– मु., भ. २। ७. चैतस्मिन् वि– मु., भ. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः ।
तमभागं विभागेन नरसिंहं प्रचक्षते ॥" [ ] इति ।

तथा सामान्यैकान्तं, विशेषैकान्तं, भिन्नौ सामान्यविशेषौ चेत्थं निराचष्टे । तथा हि—विशेषाः सामान्याद्भिन्नाः अभिन्ना वा । भिन्नाश्चेत्; मण्डूकजटाभारानुकाराः । अभिन्नाश्चेत्; तदेव तत्स्वरूपवदिति सामान्यैकान्तः । सामान्यैकान्तवादिनस्तु द्रव्यास्तिकनयानुपातिनो मीमांसकभेदा अद्वैतवादिनः सांख्याश्च ।

पर्यायनयान्वयिनस्तु[१] भाषन्ते विविक्ताः क्षणक्षयिणो विशेषा एव परमार्थस्ततो विष्वग्भूतस्य सामान्यस्याप्रतीयमानत्वात् । न हि गवादिव्यक्त्यनुभवकाले वर्ण[सं]स्थानात्मकं व्यक्तिरूपमपहायान्यत्किंचिदेकमनुयायि प्रत्यक्षे प्रतिभासते तादृशस्यानुभवाभावात् । तथा च पठन्ति—

"एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधे स्फुटमङ्गुलीषु ।
साधारणं रूपमवेक्षते यः शृङ्गं शिरस्यात्मन ईक्षते सः ॥"

एकाकारपरामर्शप्रत्ययस्तु स्वहेतुदत्तशक्तिभ्यो व्यक्तिभ्य एवोत्पद्यत इति न तेन सामान्यसाधनं न्याय्यम् । किं च यदिदं सामान्यं परिकल्प्यते तदेकम्, अनेकं वा । एकमपि सर्वगतम्, असर्वगतं वा । सर्वगतं चेत्;—किं न व्यक्त्यन्तरालेषूपलभ्यते । सर्वगतैकत्वाभ्युपगमे च तस्य यथा गोत्वसामान्यं गोव्यक्तीः क्रोडीकरोति, एवं किं न घटपटादिव्यक्तीरप्यविशेषात् । असर्वगतं चेत्; विशेषरूपापत्तिरभ्युपगमबाधश्च । अथानेकगोत्वाश्वत्वघटत्वपटत्वादिभेदभिन्नत्वात्, तर्हि विशेषा एव स्वीकृता अन्योन्यव्यावृत्तिहेतुत्वात् । न हि यद्गोत्वं तदश्वत्वात्मकमिति । अर्थक्रियाकारित्वं च वस्तुनो लक्षणं तच्च विशेषेष्वेव स्फुटं[२] लक्ष्यते । न हि सामान्येन काचिदर्थक्रिया क्रियते; तस्य निष्क्रियत्वात् । वाहदोहादिकासु[३] अर्थक्रियासु विशेषाणामेवोपयोगात् । तथेदं सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा । भिन्नं चेत्; अवस्तु, विशेषविश्लेषेणार्थक्रियाकारित्वाभावात् । अभिन्नं चेत्; विशेषा एव तत्स्वरूपवदिति विशेषैकान्तवादः ।

नैगमनयानुगामिनस्त्वाहुः । स्वतन्त्रौ सामान्यविशेषौ, तथैव प्रमाणेन प्रतीतत्वात् । तथा हि—सामान्यविशेषावत्यन्तं भिन्नौ विरुद्धधर्माध्यासितत्वात्, यावेवं तावेवं यथा पाथःपावकौ, तथा चेतौ, तस्मात्तथा । सामान्यं हि गोत्वादि सर्वगतं तद्विपरीताश्च शबलशाबलेयादयो विशेषाः ततः कथमेषामैक्यं युक्तम् । न सामान्यात् पृथग् विशेषस्योपलम्भ इति चेत्; कथं तर्हि तस्योपलम्भ इति वाच्यम् । सामान्यव्याप्तस्येति चेत्; न तर्हि स विशेषोपलम्भः, सामान्यस्यापि तेन ग्रहणात् । ततश्च तेन बोधेन विविक्तविशेषग्रहणाभावात् तद्वाचकं ध्वनिं तत्साध्यं च व्यवहारं न प्रवर्तयेत् प्रमाता, न चैतदस्ति विशेषाभिधानव्यवहारयोः प्रवृत्तिदर्शनात्; तस्माद्विशेषमभिलषता तत्र व्यवहारं प्रवर्तयता तद्ग्राहको[४] बोधो विविक्तोऽभ्युपगन्तव्यः । एवं सामान्यस्थाने विशेषशब्दं विशेषस्थाने च सामान्यशब्दं प्रयुञ्जानेन सामान्येऽपि तद्ग्राहको[५] बोधो विविक्तोऽङ्गीकर्तव्यः । तस्मात्स्वस्वग्राहिणि ज्ञाने पृथक् प्रतिभासमानत्वात् द्वावपीतरेतरविशकलितौ, ततो न सामान्यविशेषात्मकत्वं वस्तुनो घटत इति स्वतन्त्रः सामान्यविशेषवादः । स्वतन्त्रसामान्यविशेषदेशका नैगमनयानुरोधिनः काणादा आक्षपादाश्च । तदेतत्पक्षत्रयमपि क्षोदं न क्षमते । प्रमाणबाधितत्वात् । सामान्यविशेषोभयात्मकस्यैव वस्तुनो निर्विगानमनुभूयमानत्वात् । वस्तुनो हि लक्षणमर्थक्रियाकारित्वम्, तच्चानेकान्तवाद एवाविकलं कलयन्ति परीक्षकाः । तथा हि– गौरित्युक्ते खुरककुदलाङ्गूलसास्नाविषाणाद्यवयवसंपन्नं वस्तुरूपं सर्वव्यक्त्यनुयायि प्रतीयते, तथा महिष्यादिव्यावृत्तिरपि प्रतीयते । तत्रापि च[६] शबला गौरित्युच्यते, तत्रापि[७] च यथा विशेषप्रतिभासस्तथा गोत्वप्रतिभासोऽपि स्फुट एव । शबलेति केवलविशेषोच्चारणेऽप्यर्थात्प्रकरणाद्वा गोत्वमनुवर्तते । अपि च शबलत्वमपि नानारूपम्; तथा दर्शनात् । ततो वक्त्रा शबलेत्युक्ते क्रोडीकृतसकलशबलसामान्यं विवक्षितगोव्यक्तिगतमेव शबलत्वं व्यवस्थाप्यते । तदेवमाबालगोपालं प्रतीतप्रसिद्धेऽपि वस्तुनः सामान्यविशेषात्मकत्वे

१. –यिनो भा–मु. । २. प्रतीयते–म. १, २ । ३. –दिष्वर्थ–मु., म. १ । ४. बोधोऽङ्गी–मु. । ५. बोधोऽङ्गी–प. २ । ६. शबलेत्यु–प. १ । ७. पि यथा–प. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तदुभयैकान्तवादः प्रलापमात्रम् । न हि क्वचित्कदाचित्केनचित् किंचित्सामान्यं विशेषविनाकृतमनुभूयते, विशेषा वा तद्विनाकृताः । यदाहुः—

"द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः ।
क्व कदा केन किंरूपा दृष्टा मानेन केन[1] वा ॥" [ ] इति ।

केवलं दुर्णयबलप्रभावितप्रबलमतिव्यामोहादेकमपलप्यान्यतरद् व्यवस्थापयन्ति कुमतयः । सोऽयमन्धगजन्यायः । येऽपि च तदेकान्तपक्षोपनिपातिनः प्रागुक्तदोषास्तेऽप्यनेकान्तवादप्रचण्डमुद्गरप्रहारजर्जरितत्वान्नोच्छ्वसितुमपि क्षमाः ।

स्वतन्त्रसामान्यविशेषवादिनस्त्वेवं प्रतिक्षेप्याः सामान्यं प्रतिव्यक्ति [2]कथंचिद्विभिन्नम्; कथंचित्तदात्मकत्वाद्विसदृशपरिणामवत् । यथैव हि काचिद्व्यक्तिरुपलभ्यमाना व्यक्त्यन्तराद्विशिष्टा विसदृशपरिणामदर्शनादवतिष्ठते, तथा सदृशपरिणामात्मकसामान्यदर्शनात्समानेति, तेन समानो गौरयं, सोऽनेन समान इति प्रतीतेः । न चास्य व्यक्तिस्वरूपादभिन्नत्वात् सामान्यरूपताव्याघातः । [3]यतो रूपादीनामपि व्यक्तिस्वरूपादभिन्नत्वमस्ति । न च तेषां गुणरूपताव्याघातः । कथंचिद्व्यतिरेकस्तु रूपादीनामिव सदृशपरिणामस्याप्यस्त्येव पृथग्व्यपदेशादिभावत्वात् । विशेषा अपि नैकान्तेन सामान्यात्पृथग् भवितुमर्हन्ति । यतो यदि सामान्यं सर्वगतं सिद्धं भवेत्; तदा तेषामसर्वगतत्वेन[4] ततो विरुद्धधर्माध्यासः स्यात् । न च तस्य तत्सिद्धं, प्रागुक्तयुक्त्या निराकृतत्वात् । सामान्यस्य विशेषाणां च परस्परं कथंचिदव्यतिरेकेणैकानेकरूपतया व्यवस्थितत्वात् । विशेषेभ्योऽव्यतिरिक्तत्वाद्धि सामान्यमप्यनेकमिष्यते । सामान्यात्तु विशेषाणामव्यतिरेकात् तेऽप्येकरूपा इति । एकत्वं च सामान्यस्य संग्रहनयार्पणात्सर्वत्र विज्ञेयम् । अनेकत्वं च प्रमाणार्पणात्तस्य सदृशपरिणामरूपस्य विसदृशपरिणामवत् प्रतिव्यक्तिभेदात् । एवं चासिद्धं सामान्यविशेषयोः [5]सर्वथा विरुद्धधर्माध्यासितत्वम् । कथंचिद्विरुद्धधर्माध्यासितत्वं चेद्विवक्षितम्; तदास्मत्पक्षप्रवेशः । कथंचिद्विरुद्धधर्माध्यासस्य कथंचिद्भेदाविनाभूतत्वात् । पाथःपावकदृष्टान्तोऽपि साध्यसाधनविकलः; तयोरपि कथंचिद्विरुद्धधर्माध्यासितत्वेन भिन्नत्वेन च स्वीकारात्, पयस्त्वपावकत्वादिना हि तयोर्विरुद्धधर्माध्यासो भेदश्च, द्रव्यत्वादिना पुनस्तद्वैपरीत्यमिति । तथा च कथं न सामान्यविशेषात्मकत्वं वस्तुनो घटत इति । उक्तं च—

"दोहिं वि णएहिं णीयं सत्थमुलूएण तहवि मिच्छत्तं ।
जं सविसयप्पहाणत्तणेण अण्णोण्णणिरवेक्खं ॥" तथा ।
"निर्विशेषं हि सामान्यं [6]भवेत्खरविषाणवत् ।
सामान्यरहितत्वेन विशेषास्तद्वदेव हि ॥"

तथैकान्तसत्त्वमेकान्तासत्त्वं च वार्त्तमेव । तथा हि सर्वभावानां हि सदसदात्मकत्वमेव स्वरूपम् । एकान्तसत्त्वे वस्तुनो वैश्वरूप्यं स्यात् । एकान्तासत्त्वे च निःस्वभावता भावानां स्यात् । तस्मात्स्वरूपेण सत्त्वात्, पररूपेण चासत्त्वात् सदसदात्मकं वस्तु सिद्धम् । यदाहुः—

"सर्वमस्ति स्वरूपेण पररूपेण नास्ति च ।
अन्यथा सर्वसत्त्वं स्यात् स्वरूपस्याप्यसंभवः ॥" [ ] इति ।

ततश्चैकस्मिन् घटे सर्वेषां घटव्यतिरिक्तपदार्थानामभावरूपेण वृत्तेरनेकान्तात्मकत्वं घटस्य सूपपादम् । एवं चैकस्मिन्नर्थे ज्ञाते सर्वेषामर्थानां ज्ञानं पर्वपदार्थपरिच्छेदमन्तरेण तन्निषेधात्मन एकस्य वस्तुनो विविक्ततया परिच्छेदासंभवात् । आगमोऽप्येवमेव व्यवस्थितः ।

---

१. केनचेति–मु. । २. –चिद्भिन्नं–प. २ । ३. यदि–प. २ । ४. गतत्वं ततो मु., प. १, २, म. २ । ५. –त्वक्षाप्र–प. १, २, म. १ । ६. –त्खशवि–प. १, २, म. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**"जे एगं जाणइ से[1] सव्वं जाणइ जे[2] सव्वं जाणइ से[3] एगं जाणइ ।" तथा—**

**"एको भावः सर्वथा येन दृष्टः सर्वे भावाः सर्वथा तेन दृष्टाः ।**
**सर्वे भावाः सर्वथा येन दृष्टाः एको भावः सर्वथा तेन दृष्टः ॥" [ ]** इति ।

सुघटं सदसदनेकान्तात्मकं वस्तु । अनयैव भङ्ग्या स्यादस्तिस्यान्नास्तिस्यादवक्तव्यादिसप्तभङ्गीविस्तरस्य जगत्—पदार्थसार्थव्यापकत्वाद् अभिलाप्यानभिलाप्यात्मकमप्यूह्यमिति ।

**सद्भूतार्थोपदेशक इति, कृत्स्नकर्मक्षयं कृत्वेति ।** कृत्स्नानि सर्वाणि घात्यघात्यादीनि यानि कर्माणि जीवभोग्यवेद्यपुद्गलास्तेषां क्षयं निर्जरणं विधाय । **परमं पदं मोक्षपदं संप्राप्तः ।** अपरे हि सौगतादयो मोक्षमवाप्यापि तीर्थनिकारादिसंभवे भूयो भूयो भवमवतरन्ति । यदाहुः—

**"ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् ।**
**गत्वा गच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥" [ ]** इति ।

न ते परमार्थतो मोक्षगतिभाजः, कर्मक्षयाभावात् । न हि तत्वतः कर्मक्षये पुनर्भवावतारः । यदुक्तम्—

**"दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।**
**कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥ [ ]** इति ।

उक्तं च श्रीसिद्धसेनदिवाकरपादैरपि भवाभिगामुकानां प्रबलमोहविजृम्भितम् । यथा—

**"दग्धेन्धनः पुनरुपैति भवं प्रमथ्य निर्वाणमप्यनवधारितभीरु[5]निष्टम् ।**
**मुक्तः स्वयं कृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥" [ ]** इति ।

अर्हंश्च भगवान् कर्मक्षयपूर्वमेव शिवपदं प्राप्त इति ।

तत्त्वान्याह—

**जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ ।**
**बन्धश्च[6] निर्जरामोक्षौ नव तत्त्वानि तन्मते ॥४७॥**

**तन्मते** जैनमते **नव तत्त्वानि** सम्भवन्तीति ज्ञेयम् । नामानि निगदसिद्धान्येव ।

जीवाजीवपुण्यतत्त्व[7]मेवाह—

**तत्र ज्ञानादिधर्मेभ्यो भिन्नाभिन्नो विवृत्तिमान् ।**
**कर्त्ता[8] शुभाशुभं कर्म भोक्ता कर्मफलस्य च ॥४८॥**
**चैतन्यलक्षणो जीवो, यश्चैतद्वि[9]परीत्यवान् ।**
**अजीवः स समाख्यातः, पुण्यं सत्कर्मपुद्गलाः ॥४९॥** युग्मम् ।

**तत्र** जैनमते, **चैतन्यलक्षणो जीव इति** संबन्धः । विशेषणान्याह—**ज्ञानादिधर्मेभ्यो भिन्नाभिन्न इति ।** ज्ञानमादिर्येषां धर्माणामिति ज्ञानदर्शनचारित्ररूपा [10]धर्मा गुणास्तेभ्योऽयं जीवश्चतुर्दशभेदोऽपि कथंचिद्भिन्नः कथंचिदभिन्न इत्यर्थः । एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तेषु जीवेषु स्वापेक्षया ज्ञानवत्त्वमस्त्येवेत्यभिन्नत्वं ज्ञानादिभ्यः परापेक्षया पुनरज्ञानवत्त्वमिति भिन्नत्वम् । लेशतश्चेत्सर्वजीवेषु न ज्ञानवत्त्वं तदा जीवोऽजीवत्वं प्राप्नुयात् । तथा च सिद्धान्तः—

---

१. सो मु. प. १, २, म. १ । २. जो मु., प. १, २, म. १ । ३. सो मु. प. १, २, म. १ । ४. –कमप्यू–म. २ । ५. –भीरु न–म. २ । ६. बन्धो विनि–प. १, २ । बन्धो नि–म. २ । ७. –तत्त्वमाह –प. १, म. २ । ८. शुभाशुभकर्मकर्त्ता म. १ । ९. तद्विपरीतवान् प. २, म. २ । १०. धर्मगुणा– ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**"सव्वजीवाणं पि य णं अक्खरस्स अणन्तभो भागो निच्चुग्घाडिओ।**
**जइ सो वि आवरेज्जा तो जीवो अजीवत्तं पाविज्जा।**
**सुट्ठु वि मेहसमुदये होइ पहा चन्दसूराणम्॥"**

**तथा निर्वृत्तिमानिति।** निवृत्तिः परिणामः सास्यास्तीति मत्वर्थीयो मतुप्। सुरनरनारकतिर्यङ्क्षु एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तजातिषु विविधोत्पत्तिरूपान् परिणामाननुभवति जीव इत्यर्थः। **अन्यच्च शुभाशुभं कर्म कर्त्ता।** शुभं सातवेद्यम्, अशुभमसातवेद्यम्। शुभं चाशुभं चेति द्वन्द्वः। एवंविधं कर्म भोक्तव्यफलकर्तृभूतं कर्त्ता, स्वात्मसाद्विधाता[1] उपार्जयितेति यावत्। न च सांख्यवदकर्त्ता आत्मा शुभाशुभाबन्धकश्चेति। तथा **कर्मफलं भोक्ता।** न च केवलं कर्त्ता, किं तु भोक्तापि स्वोपार्जितपुण्यपापकर्मफलस्य वेदयिता। न चान्यकृतस्यान्यो भोक्ता। तथा चागमः—

**"जीवाणं भन्त! किं अत्तकडे दुक्खे, परकडे दुक्खे, तदुभयकडे दुक्खे।**
**गोयम! अत्तकडे दुक्खे, नो परकडे दुक्खे, नो तदुभयकडे दुक्खे॥"** [ ] इति।

कर्त्तैव भोक्ता। **तथा चैतन्यलक्षण** इति। चैतन्यं चेतनास्वभावत्वं, तदेव लक्षणं मूलगुणो यस्येति। सूक्ष्मबादरभेदा एकेन्द्रियास्तथा विकलेन्द्रियास्त्रयः संज्ञ्यसंज्ञिभेदाश्च पञ्चेन्द्रियाः, सर्वेऽपि पर्याप्ता अपर्याप्ताश्चेति चतुर्दशापि जीवभेदाश्चैतन्यं न व्यभिचरन्तीति।

अथाजीवमाह—**'यश्चैतद्वैपरीत्यवानजीवः स समाख्यातः'** इति। यः पुनस्तस्माज्जीवलक्षणाद्वैपरीत्यमन्यथात्वमस्यास्तीति तद्वैपरीत्यवान् विपरीतस्वभावोऽचेतनः सोऽजीवः समाख्यातः कथितः पूर्वसूरिभिरिति। भेदाश्च धर्माधर्माकाशपुद्गलाः स्कन्धदेशप्रदेशगुणा अद्धाकेवलपरमाणुश्चेति चतुर्दश अजीवभेदाः। **पुण्यं सत्कर्मपुद्गला** इति। पुण्यं नाम तत्त्वं कीदृगित्याह—सत्कर्मपुद्गला इति। सच्छोभनं सातवेद्यं कर्म, तस्य पुद्गला दलपाटकानि पुण्यप्रकृतय इत्यर्थः। ताश्च द्वाचत्वारिंशत्तद्यथा—

**"नरतिरिसुराउउच्चं सायं परघायआयवुज्जोयं।**
**तित्थुस्सासनिमाणं पणिंदिवइरुसमचउरंसं॥**
**तसदसचउवन्नाई सुरमणुदुगपंचतणुउवंगतिअं।**
**अगुरुलहुपढमखगई बायालीसंति सुहपयडी॥"**

**भावार्थस्तु ग्रन्थविस्तरभयान्नोच्यत इति श्लोकार्थः।**

शेषतत्त्वमाह—

**पापं तद्विपरीतं तु मिथ्यात्वाद्यास्तु हेतवः।**
**यस्तैर्बन्धः[2] स विज्ञेय आस्रवो जिनशासने॥५०॥**

तु पुनस्तद्विपरीतं पुण्यप्रकृतिविसदृशं **पापं** पापतत्त्वमित्यर्थः। **मिथ्यात्वाद्याश्चेति।** मिथ्यादर्शनाविरतिप्रमादकषाययोगा **हेतवः।** पापस्य कारणानि तत्प्रकृतयश्च द्व्यशीतिस्तद्यथा—

**"थावरदसचउजाई अपढमसंठाणखगइसंघयणा।**
**तिरिनिरयदुगुवघाई वन्नचऊनामचउतीसा॥**

नरयाउनीयअस्सा—

**पघाइपणयालसहियबासीई" इति।**
**पुण्यप्रकृतिव्यतिरिक्ताः पापप्रकृतयो द्व्यशीतिः।**

वर्णचतुष्कस्य तु शुभाशुभरूपेणोभयत्रापि संबध्यमानत्वान्न दोषः। **यस्तैर्बन्ध** इति यस्तैर्मिथ्यादर्शनादिभिर्बन्धः स कर्मबन्धः **स जिनशासन आस्रवो विज्ञेयः,** आस्रवतत्त्वं[3] ज्ञेयमित्यर्थः। तत्प्रकृतयश्च द्वाचत्वारिंशत्। तथा हि—पञ्चेन्द्रियाणि, चत्वारः कषायाः, [4]पञ्च[अ]व्रतानि, मनोवचनकायाः, पञ्चविंशतिक्रियाश्च कायिक्यादय, इत्यास्रवः।

१. आत्म—प. २। २. यो बन्धः प. १। ३. —तत्त्वमित्यर्थः प. २। ४. पञ्चाणुव्रतानि म. २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

संवरस्तन्निरोधस्तु बन्धो जीवस्य कर्मणः ।
अन्योन्यानुगमात्कर्मसंबन्धो[1] [2]यो द्वयोरपि ॥५१॥

तु पुनस्तन्निरोध आस्रवद्वारप्रतिरोधः संवरः[3] तत्त्वम् । संवरप्रकृतयस्तु सप्तपञ्चाशत्तद्यथा—

"समिइगुत्तिपरीसहजइधम्मभावणाचरित्ताणि ।
पणतिगदुवीसदसबार पंचभेएहिं सगवण्णा ॥"

पञ्च समितयस्तिस्रो गुप्तयो द्वाविंशतिः परीषहा दशविधो यतिधर्मः द्वादश भावनाः पञ्च चारित्राणीति प्रकृतयः । बन्धो नाम जीवस्य प्राणिनः कर्मणो व[4]र्द्धमानस्यान्योन्यानुगमात् परस्परं क्षीरनीरन्यायेन लोलीभावाद् यो द्वयोरपि जीवकर्मणोः संबन्धः संयोगः स बन्धो नाम तत्त्वमित्यर्थः । स च चतुर्विधः प्रकृतिस्थित्यनुभागप्रदेशभेदात् ।

"स्वभावः प्रकृतिः प्रोक्तः स्थितिः कालावधारणम् ।
अनुभागो रसो ज्ञेयः प्रदेशो दलसंचयः ॥" [ ] इति

इत्यादिः स बन्धो ज्ञेयः ।

[5]निर्जरामोक्षौ चाह—

बद्धस्य कर्मणः [6]शाटो यस्तु सा निर्जरा मता ।
आत्यन्तिको वियोगस्तु देहादेर्मोक्ष उच्यते ॥५२॥

यः पुनर्बद्धस्य स्पृ[7]ष्टबद्धनिधत्तनिकाचितादिरूपेणार्जितस्य कर्मणस्तपश्चरणध्यानजपादिभिः शाटः कर्मक्षपणं सा निर्जरा मता पूर्वसूरिभिरिति । सा पुनर्द्विविधा, सकामाकामभेदेन । तु पुनर्देहादेरात्यन्तिको वियोगो मोक्ष उच्यते । स च नवविधो यथा—

"संतपयपरूवणया दव्वपमाणं च खित्तफुसणा य ।
कालो य अंतरं भागो भावो अप्पाबहुं चेव ॥" [ ] इति

नवप्रकारो हि करणीयः । बाह्यप्राणानामात्यन्तिकापुनर्भावित्वेनाभावः शिव इत्यर्थः । ननु सर्वथा प्राणाभावादजीवत्वप्रसङ्गः, तथा च द्वितीयतत्त्वान्तर्भूतत्वात् मोक्षतत्त्वाभाव इति चेत्; न; मोक्षे हि द्रव्यप्राणानामेवाभावः । भावप्राणास्तु नैष्कर्मिकावस्थायामपि सन्त्येव । यदुक्तम्—

"यस्मात्क्षायिकसम्यक्त्ववीर्यसिद्धत्वदर्शनज्ञानैः ।
आत्यन्तिकैः [8]सयुक्तो निर्द्वन्द्वेनापि च सुखेन ॥
ज्ञानादयस्तु भावप्राणा मुक्तोऽपि जीवति स तैर्हि[9] ।
[10]तस्मात्तज्जीवत्वं हि नित्यं सर्वस्य जीवस्य ॥" [ ] इति ।

सङ्गतं देहवियोगान्मोक्षः, आदिशब्दाद्देहेन्द्रियधर्म[11]विरहोऽपीति पद्यार्थः ।

एवं नामोद्देशेन तत्त्वानि सङ्कीर्त्य फलपूर्वकमुपसंहारमाह—

एतानि तत्र तत्त्वानि यः श्रद्धत्ते स्थिराशयः ।
सम्यक्त्वज्ञानयोगेन तस्य चारित्रयोग्यता ॥५३॥

एतानि पूर्वोक्तानि, तत्र [12]जिनमते, तत्त्वानि यः कश्चित् स्थिराशयो दृढचित्तः सन् श्रद्धत्ते, अवैपरीत्येन [13]मनुते । एतावता जानन्नपि अश्रद्दधानो मिथ्यादृगेव । यथोक्तं—श्रीगन्धिहस्तिमहातर्के—"द्वादशाङ्गमपि श्रुतं विदर्शनस्य मिथ्या" [ ] इति । तस्य दृढमानसस्य सम्यक्त्वज्ञानयोगेन चारित्रयोग्यता

१. –गमात्मा च यः म. १ । २. यः संबन्धो द्वयो– प. १, २, म. २ । ३. –वरत– मु., म. १ । ४. वेद्यस्या– मु. । ५. निर्जरां मोक्षं चा– । ६. साटो म. १ । ७. –ष्टधत्तनिध– प. १, २, म. १ । –ष्टनिध– म. २ । ८. संयुक्तो मु. । ९. तर्हि मु., प. १, २ । १०. तस्माज्जी–मु. । ११. वियोगोऽपी– प. २ । १२. जैनमते प. १, २, म. २ । १३. मन्यते म. २ ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

चारित्रार्हता । **सम्यक्त्वज्ञानयोगेनेति** । सम्यक्त्वं च ज्ञानं च सम्यक्त्वज्ञाने तयोर्योगस्तेन । ज्ञानदर्शनविनाकृतस्य हि चारित्रस्य सम्यक्चारित्र[1]व्यवच्छेदार्थं सम्यक्त्वज्ञानग्रहणमिति ।

फलमाह—

**तथा भव्यत्वपाकेन यस्यैतत् त्रितयं भवेत् ।**
**[2]सम्यग्ज्ञानक्रियायोगाज्जायते मोक्षभाजनम् ॥५४॥**

**तथे**त्युपदर्शने । **भव्यत्वपाकेन** परिपक्वभव्यत्वेन तद्भव एवावश्यं [3]मोक्षे गन्तव्यमिति । भव्यत्वस्य परिपाकेन **यस्य पुंसः** [4]**स्त्रियो एतत् त्रितयं** दर्शनज्ञानचारित्ररूपं **भवेत्** । यत्तदोर्नित्याभिसंबन्धात् सोऽनुक्तोऽपि संबध्यत इति । पुमान्**मोक्षभाजनं जायते** निर्वाणश्रियं भुङ्क्त इत्यर्थः । कस्मात् **सम्यग्ज्ञानक्रियायोगात् । सम्य**गिति । सम्यक्त्वं दर्शनं ज्ञानमागमावबोधः क्रिया च चरणकरणात्मिकास्तासां योगः संबन्धस्तस्मात् । न च केवलं दर्शनं ज्ञानं चारित्रं वा मोक्षहेतुकम् । यदाहुर्भद्रबाहुस्वामिपादाः—

**"सुबहुं पि सुयमहीयं किं काही चरणविप्प[5]मुक्कस्स ।**
**अंधस्स जह पलित्ता दीवसयसहस्सकोडी वि ॥**

तथा

**"नाणं चरित्तहीणं लिंगग्गहणं च दंसणविहीणं ।**
**संजमहीणं च तवं जो चरइ निरत्थयं तस्स ॥"**

दर्शनज्ञानचारित्राणि हि समुदितान्येव मोक्षकारणानि । यदुवाच वाचकमुख्यः—"[6]**दर्शनज्ञानचारित्राणि मोक्षमार्गः**" [ त. सू. १।१ ] इति ।

प्रमाणे आह—

**प्रत्यक्षं च परोक्षं च द्वे प्रमाणे तथा मते ।**
**अनन्त[7]धर्मकं वस्तु प्रमाणविषयस्त्विह ॥५५॥**

**तथेति** प्रस्तुतमतानुसंधाने **द्वे प्रमाणे मते** अभिमते । के ते । इत्याह—**प्रत्यक्षं च परोक्षं चेति ।** अश्नुते अक्ष्णोति[8] वा व्याप्नोति सकलद्रव्यक्षेत्रकालभावानित्यक्षो जीवः, अश्नुते विषयमित्यक्षमिन्द्रियं च अक्षमक्षं प्रतिगतं प्रत्यक्षम् । इन्द्रियाण्याश्रित्य[9]व्यवहारसाधकं यज्ज्ञानमुत्पद्यते तत् प्रत्यक्षमित्यर्थः । अवधिमनःपर्ययकेवलज्ञानानि, तद्भेदाश्च प्रत्यक्षमेव अत एव सांव्यवहारिकपारमार्थिकेन्द्रियिका[10] नैन्द्रियिकादयो भेदा [11]अनुमानादधिकज्ञानविशेषप्रकाशकत्वादत्रैवान्तर्भवन्ति । परोक्षं चेति । अक्षाणां परं परोक्षम् । अक्षेभ्यः परतो वर्तत इति वा । परेणेन्द्रियादिना वीक्ष्यते परोक्षं स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदम् । [12]अमुयैव भङ्ग्या मतिश्रुतज्ञाने अपि परोक्षमेवेति द्वे प्रमाणे ।

प्रमाणमुक्त्वा तद्गोचरमाह—**तु** पुनः, **इह** जिनमते, **प्रमाणविषयः** प्रमाणयोः प्रत्यक्षपरोक्षयोर्विषयो गोचरो ज्ञेय इत्यध्याहारः । किं तदित्याशङ्कायाम**नन्तधर्मकं वस्त्वि**ति । वस्तुतत्त्वं पदार्थस्वरूपम् । किंविशिष्टम्[13] । अनन्तधर्मकम्—अनन्तास्त्रिकालविषयत्वादपरिमिता ये धर्माः सहभाविनः क्रमभाविनश्च पर्याया यत्रेति । अनेन साधनमपि दर्शितम् । तथा हि [14]तत्त्वमिति धर्मि, अनन्तधर्मात्मकत्वं साध्यो धर्मः, सत्त्वान्यथानुपपत्तेरिति हेतुः । अन्यथानुपपत्त्येकलक्षणत्वाद्धेतोरन्तर्व्याप्त्यैव साध्यस्य सिद्धत्वात् दृष्टान्तादिभिर्न प्रयोजनम्, यदनन्तधर्मात्मकं[15] न भवति तत् सदपि न भवति यथा वियदिन्दीवरमिति केवलव्यतिरेकी हेतुः । साधर्म्य-

१. –त्रस्य व्यव–प. १, २, भ. १ । २. सम्यक्त्वज्ञा–प. १, २ । ३. मोक्षं भ. २ । ४. पुंस एतत् मु. । ५. –विप्पहीणस्स –प. २ । ६. "सम्यग्दर्शनज्ञान..." –त. सू. । ७. धर्मात्मकं भ. २ । ८. –ति व्या –भ. २ । ९. –तव्य –भ. २, प. १, २ । १०. –कातीन्द्रि–मु., प. १, २ । ११. नाधिक प. १, २ । १२. अनयैव प. २ । १३. –ष्टंस्वरूपम् प. १ । १४. सत्त्वमि –मु., भ. १ । १५. –धर्मकं मु., भ. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

दृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वयायोगात्। अनन्तधर्मात्मकत्वं चात्मनि तावत्साकारानाकारोपयोगिता कर्तृत्वं भोक्तृत्वं प्रदेशाष्टकनिश्चलता अमूर्तत्वमसंख्यातप्रदेशात्मकता जीवत्वमित्यादयः सहभाविनो धर्माः; हर्षविषादशोकसुखदुःखदेवनारकतिर्यङ्नरत्वादयस्तु क्रमभाविनः। धर्मास्तिकायादिष्वप्यसंख्येयप्रदेशात्मकत्वं गत्याद्युपग्रहकारित्वं मत्यादिज्ञानविषयत्वं तत्तदवच्छेदकावच्छेद्यत्वमवस्थितत्वमरूपित्वमेकद्रव्यत्वं निष्क्रियत्वमित्यादयः। घटे पुनरामत्वं पाकजरूपादिमत्त्वं पृथुबुध्नोदरकम्बुग्रीवत्वं जलादिधारणाहरणसामर्थ्यं मत्यादिज्ञान[1]विषयत्वं नवत्वं पुराणत्वमित्यादयः। एवं सर्वपदार्थेषु नानानयमताभिज्ञेन शाब्दानार्थांश्च पर्यायान् प्रतीत्य वाच्यम्। शब्देष्वप्युदात्तानुदात्तस्वरितविवृतसंवृत[2]घोषनादाघोषाल्पप्राणमहाप्राणतादयः, तत्तदर्थप्रत्यायनशक्त्यादयश्चावसेयाः। अस्य हेतोरनेकान्तप्रचण्डमुद्गरा[3]घातदलितशक्तित्वेनासिद्धविरुद्धानैकान्तिकत्वादीनां कण्टकानामनवकाश एवेत्येवंविध[4]पर्यायानन्त्यसुभगं वस्तु जिनशासने प्रमाणविषय इत्यर्थः।

लक्ष्यनिर्देशं कृत्वा लक्षणमाह—

**अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृशम्।**
**प्रत्यक्षमितरज्ज्ञेयं परोक्षं ग्रहणेक्षया ॥५६॥**

तत्र **प्रत्यक्ष**मिति लक्ष्यनिर्देशः। **अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृश**मिति लक्षणनिर्देशः। परोक्षोऽक्षगोचरातीतः, ततोऽन्योऽ**परोक्ष**स्तद्भावस्तत्ता तया साक्षात्कृततयेति यावत्। [5]अर्थ्यत **इत्यर्थो** गम्यत इति हृदयम्, अर्थ्यत इति वाऽर्थो दाहपाकाद्यर्थक्रियार्थिभिरभिलष्यत इति तस्य। **ग्राहकं**, व्यवसायात्मकतया परिच्छेदकं यज् **ज्ञानं तदीदृश**मिति ईदृगेव **प्रत्यक्ष**मिति संटङ्कः। **अपरोक्षतये**त्यनेन परोक्षलक्षणसंकीर्णतामध्यक्षस्य परिहरति। तस्यासाक्षात्कारितयाऽर्थग्रहणरूपत्वादिति। ईदृशमिति। अमुना[6] तु पूर्वोक्तन्यायात् सावधारण[7]त्वेन विशेषणकदम्बकसचिवज्ञानोपदर्शनात् परपरि[8]कल्पितलक्षणयुक्तस्य प्रत्यक्षतां प्रतिक्षिपति। [9]एवं च यदाहुः "**इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।**" [ ] तथा "**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्।**" [ ] इत्यादि। तदयुक्तमित्युक्तं भवति। अपूर्वप्रादुर्भावस्य प्रमाणबाधितत्वादत्यन्तासतां शशविषाणादीनामप्युत्पत्तिप्रसङ्गात्। तस्मादिदमात्मरूपतया विद्यमानमेव विशेषकृद्धेतुकलापसंनिधानात् साक्षादर्थग्रहणपरिणामरूपतया[10] विवर्तते[11], तथा चोत्पन्नजन्म[12]रूपादिविशेषणं न संभवेत्। अथैवंविधार्थसूचकमेवैतदित्याचक्षीथास्तथा सत्यविगानमेवेत्यास्तां तावत्।

अधुना परोक्षलक्षणं दर्शयति इतरदित्यादि। अपरोक्षतयार्थस्य ग्राहकं ज्ञानं प्रत्यक्षमुक्तम्। तस्मादितरदसाक्षादर्थग्राहकं **ज्ञानं परोक्ष**मिति **ज्ञेय**मवगन्तव्यम्। [13]तदपि स्वसंवेदनापेक्षतया प्रत्यक्षमेव, बहिरर्थापेक्षया तु परोक्षव्यपदेशमश्नुत इति दर्शयन्नाह—**ग्रहणेक्षये**ति। इह ग्रहणं प्रक्रमाद्बहिः प्रवर्त्तनमुच्यते, अन्यथा विशेषणवैयर्थ्यात्, तस्येक्षा अपेक्षा तया बहिः-प्रवृत्तिपर्यालोचनयेति यावत्। तदयमर्थो यद्यपि स्वयं प्रत्यक्षं तथापि लिङ्गशब्दादिद्वारेण बहिर्विषयग्रहणे असाक्षात्कारितया व्याप्रियत इति परोक्षमित्युच्यत इत्यर्थः।

पूर्वोक्तमेव वस्तुतत्त्वमनन्तधर्मात्मकतया दृढयन्नाह—

**येनोत्पादव्ययध्रौव्ययुक्तं [14]यत्सत्तदिष्यते।**
**अनन्तधर्मकं वस्तु तेनोक्तं मानगोचरः ॥५७॥**

---

१. ज्ञानज्ञेयत्व—प. १, २, भ. १, २। २. —षवदघोषताल्प—प. १, २, भ. १, २। ३. —रापातघात—प. २,—राघातपात—प. २। ४. —वं धर्मपर्याया—प. २।—वंविधपर्यायात्यन्तसु—मु.।—वं विधपर्यायानयसु भ. १। ५. अर्थत भ. १, २। ६. —ना पू— भ. १। ७. —रणेन भ. २, प. १, २। ८. कदम्बसचिवलक्षणज्ञा—मु.। ९. —तस्य युक्तेरयं मु.। १०. —या निव—मु.। ११. विवर्तेत प. १, २, भ. २। १२. न्मादिवि—भ. १। १३. एतदपि भ. १, २, प. १, २। १४. यत्तत्सदि—भ. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

**येन कारणेन यदुत्पादव्ययध्रौव्ययुक्तं** तत्सत्सत्त्वरूप**मिष्यते तेन** कारणेनानन्तधर्मकं **वस्तु मानगोचरः**, प्रत्यक्षपरोक्षप्रमाणविषय **उक्तं** कथितमिति संबन्धः। उत्पादश्च व्ययश्च ध्रौव्यं च, उत्पादव्ययध्रौव्याणि तेषां युक्तं मेलस्तदेव सत्त्वमिति प्रतिज्ञा इष्यते केवलज्ञानिभिरभिलष्यत इति। वस्तुतत्त्वं चोत्पादव्ययध्रौव्यात्मकम्। तथा हि–उर्वीपर्वततर्वादिकं सर्वं वस्तु द्रव्यात्मना नोत्पद्यते, विपद्यते, वा परिस्फुटमन्वयदर्शनात्। लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति न वाच्यम्, प्रमाणेन बाध्यमानस्यान्वयस्यापरिस्फुटत्वात्। न च प्रस्तुतोऽन्वयः प्रमाणविरुद्धः; सत्यप्रत्यभिज्ञानसिद्धत्वात्—

**"सर्वव्यक्तिषु नियतं क्षणे क्षणेऽन्यत्वमथ च न विशेषः।**
**सत्योश्चित्यपचित्योराकृतिजातिव्यवस्थानात् ॥"** [ ]

इति वचनात्। ततो द्रव्यात्मना स्थितिरेव सर्वस्य वस्तुनः पर्यायात्मना तु सर्वं वस्तूत्पद्यते विपद्यते च, अस्खलितपर्यायानुभवसद्भावात्। न चैवं शुक्लशङ्खे पीतादिपर्यायानुभवेन व्यभिचारः, तस्य स्खलद्रूपत्वात्। न खलु सोऽस्खलद्रूपो येन पूर्वाकारविनाशोऽजहद्वृत्तोत्तराकारोत्पादाविनाभावी भवेत्। न च जीवादौ वस्तुनि हर्षामर्षौदासीन्यादिपर्यायपरम्परानुभवः स्खलद्रूपः, कस्यचिद्बाधकस्याभावात्। ननूत्पादादयः परस्परं भिद्यन्ते न वा। यदि भिद्यन्ते; कथमेकं वस्तु त्र्यात्मकम्। न भिद्यन्ते चेत्; तथापि कथमेकं[1] वस्तु त्र्यात्मकम्। तथा च यद्युत्पादादयो भिन्नाः, कथमेकं[2] त्र्यात्मकम्। अथोत्पत्त्यादयोऽभिन्नाः, कथमेकं त्र्यात्मकमिति चेत्; तदयुक्तम्; कथंचिद्भिन्नलक्षणत्वेन तेषां कथंचिद्भेदाभ्युपगमात्। तथा हि–उत्पादविनाशध्रौव्याणि स्याद्भिन्नानि, भिन्नलक्षणत्वात् रूपादिवत्। न च भिन्नलक्षणत्वमसिद्धम्, असत आत्मलाभः, सतः[3] सत्त्वाविप्रयोगो द्रव्यरूपतयानुवर्त्तनं च खलूत्पादादीनां परस्परमसंकीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव। न चामी भिन्नलक्षणा अपि परस्परानपेक्षाः खपुष्पवदसत्त्वापत्तेः। तथा ह्युत्पादः केवलो नास्ति[4] स्थितिविगमरहितत्वात्, कूर्मरोमवत्। तथा विनाशः केवलो नास्ति स्थित्युत्पत्तिरहितत्वात्तद्वत्। एवं स्थितिः केवला नास्ति, विनाशोत्पादशून्यत्वात्, तद्वदेवेत्यन्योन्यापेक्षाणामुत्पादादीनां वस्तुनि सत्त्वं प्रतिपत्तव्यम्। तथा चोक्तं—

**"घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम्।**
**शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥**
**पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः।**
**अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम् ॥"** [ आप्तमी. ५९–६० ] इति

व्यतिरेकश्च यदुत्पादव्ययध्रौव्यात्मकं न भवति, तदवस्त्वेव न यथा खरविषाणं यथेदं तथेदमिति। अत एवानन्तधर्मकं वस्तु मानगोचरः प्रोक्तम्। अनन्ता धर्माः पर्यायाः सामान्यविशेषलक्षणा यत्रेत्यनन्तधर्मकं वस्त्विति। उत्पादव्ययध्रौव्यात्मकस्यैवानेकधर्मकत्वं युक्तियुक्ततामनुभवतीति ज्ञापनायैव, भूयोऽनन्तधर्मकपदप्रयोगो न पुनः पाश्चात्यपद्योक्तानन्तधर्मकपदेन[5] पौनरुक्त्यमाशङ्कनीयमिति पद्यार्थः।

ग्रन्थस्य बालावबोधार्थफलत्वा[6]दथोपसंहरन्नाह—

**जैनदर्शनसंक्षेप[7] इत्येष कथितोऽनघः।**
**पूर्वापरविघातस्तु यत्र क्वापि न विद्यते ॥५८॥**

**इति** पूर्वोक्तप्रकारेण, **एष** प्रत्यक्षलक्ष्यो **जैनदर्शनसंक्षेपः कथितः**, विस्तरस्यागाधत्वेन वक्तुमगोचरत्वात्। उपयोगसारः संक्षेपो निवेदितः। [8]किंभूतोऽनघो निर्दूषणः सर्ववक्तव्यस्य सर्वज्ञमूलत्वेन दोषकालुष्यानवकाशात्। तु समुच्चयार्थे। **यत्र** पुनः **पूर्वापरविघातः क्वापि न विद्यते**, पूर्वस्मिन्नादौ परस्मिन्[10] प्रान्ते च

१. –कं त्र्या–म. १, प. १, २। २. त्रया– प.। ३. सत्ताविप्रयो– म. १, २। ४. –तिविनाशर–प. २। ५. –धर्मपदेन प. १, २, म. १, २। ६. –फलकत्वा–मु.। ७. गदितोऽधुना म. १, २। ८. –पराघा– म. १, २। ९. किंविशिष्टोऽन– प. १, २, म. १। १०. स्मिश्च प्रान्ते वि–प. १, २, म. १।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

विघातो विरुद्धार्थता यत्र दर्शने क्वापि पर्यन्तग्रन्थेऽपि परस्परविसंवादो[1] नास्ति, आस्तां तावत्केवलिभाषितेषु द्वादशाङ्गेषु पारम्पर्यग्रन्थेष्वपि सुसंबद्धार्थत्वाद् विरुद्धार्थवैगन्ध्याभावः[2] । अयं भावो, यत्[3] परतैर्थिकानां मूलशास्त्रेष्वपि न युक्तियुक्ततां पश्यामः किं पुनः पाश्चात्यविप्रलम्भकग्रथितग्रन्थकथासु[4], यच्च[5] क्वापि कारुण्यादिपुण्यकर्मपुण्यानि च वचांसि कानिचिदाकर्णयामस्तान्यपि त्वदुक्तसूक्तसुधापयोधिमन्थोद्गतान्येव रत्नानीव संगृह्य[6] स्वात्मानं रत्नपतय इव बहु मन्वाना मुधा प्रगल्भन्ते[7] यदाहुः श्रीसिद्धसेनदिवाकरपादाः—

**"सुनिश्चितं नः परतन्त्रयुक्तिषु**
**स्फुरन्ति याः काश्चन सूक्तिसंपदः ।**
**तवैव ताः पूर्वमहार्णवोत्थिता**
**जगत्प्रमाणं जिनवाक्यविप्रुषः ॥"** [ ] इति परमार्थः ।

अथ वैशेषिकमतस्य देवतादिसाम्येन नैयायिकेभ्यो ये विशेषं न मन्यन्ते तान् बोधयन्नाह—

**देवताविषये भेदो नास्ति नैयायिकैः समम् ।**
**वैशेषिकाणां [8]तत्त्वेषु विद्यतेऽसौ [9]निर्दिश्यते ॥५९॥**

शिवदेवतासाम्येऽपि, तत्त्वादिविशेषविशिष्टत्वाद् वैशेषिकास्तेषां **वैशेषिकाणां** काणादानां **नैयायिकै**राक्षपादैः **समं** सार्द्धं **देवताविषये** शिवदेवताभ्युपगमे **भेदो** विशेषो **नास्ति**, **तत्त्वेषु** शासनरहस्येषु भेदो **विद्यते** । तुशब्दोऽध्याहार्यः । **असौ** विशेषो नैयायिकेभ्यः पृथग्भावो **निर्दिश्यते**[9] प्रकाश्यत इत्यर्थः ।

तान्येव तत्त्वान्याह—

**द्रव्यं गुणस्तथा कर्म सामान्यं च चतुर्थकम् ।**
**विशेषसमवायौ च तत्त्वषट्कं हि तन्मते ॥६०॥**

**तन्मते** वैशेषिकमते **हि** निश्चयेन **तत्त्वषट्कं** ज्ञेयमिति संबन्धः । कथमित्याह—**द्रव्यं गुण** इत्यादि । आदिमतत्त्वं **द्रव्यं** नाम, भेदबाहुल्येऽपि सामान्यादेकम्[10] । द्वितीयतत्त्वं गुणो नाम **तथेति** भेदान्तरसूचने । तृतीयं तत्त्वं **कर्म**संज्ञम् । **चतुर्थकं च** तत्त्वं **सामान्यम्** । चतुर्थमेव चतुर्थकं[11] स्वार्थे कः प्रत्ययः । चः समुच्चये । अन्यच्च **विशेषसमवायौ** । विशेषश्च समवायश्चेति द्वन्द्वः । इति तद्दर्शने तत्त्वानि षड् ज्ञेयानि ।

भेदानाह—

**तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि ।**
**कालदिगात्ममनांसि च, [12]गुणाः पुनश्चतुर्विंशतिधा ॥६१॥**
**स्पर्शरसरूपगन्धाः[13] शब्दः संख्या विभागसंयोगौ ।**
**परिमाणं च पृथक्त्वं तथा परत्वापरत्वे च ॥६२॥**
**बुद्धिः सुखदुःखेच्छा [14]धर्माधर्मौ प्रयत्नसंस्कारौ ।**
**द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥६३॥**

नवद्रव्याणि चतुर्विंशतिगुणाश्च, निगदसिद्धान्येव । संस्कारस्य वेगभावनास्थिति-स्थापकभेदात्[15] त्रिविधत्वेऽपि संस्कारत्वजात्यपेक्षयैकत्वम् । शौर्यौदार्यादीनां च गुणानामेष्वेव चतुर्विंशतिगुणेष्वन्तर्भावान्नाधिक्यम् ।

---

१. –दोऽपि ना–प. १ । २. –भावात् प. १, २, म. १ । ३. परतीर्थि–प. १, २, म. १, २ । ४. –न्थकन्थासु प. १, २, म. २ । ५. यच्च क्वापि क्वापि का–मु., म. २ । ६. स्वात्मनि प. २ । ७. यत् श्रीदिवाकरपादाः प. १. २, म. १, २ । ८. तत्त्वे तु म. १, २ । ९. निदर्श्यते म. १, २ । १०. –दैक्यं प. १, २ । ११. –र्थे क इति क प्रत्य–प. १, २, म. १, २ । १२. गुणः पुनः पञ्चविंशतिधा प. १, २, म. १, २ । १३. –गन्धरूपाः म. १, २ । १४. धर्माधर्मप्रयत्नसंस्काराः प. २ । १५. –तस्थापकभेदात् त्रैविध्येऽपि प. १, म. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कर्मसामान्यभेदानाह—

**उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् ।**
**पञ्चविधं कर्मैतत् परापरे द्वे तु सामान्ये ॥६४॥**

पञ्चापि कर्मभेदाः स्पष्टा एव । गमनग्रहणाद् भ्रमणरेचनस्यन्दनाद्यवरोधः । तु पुनः, **सामान्ये द्वे** द्विसंख्ये । के ते इत्याह—**परापरे** । परं चापरं च परापरे, परसामान्यमपरसामान्यं चेत्यर्थः ।

एतद्व्यक्तिं विशेषव्यक्तिं चाह—

**तत्र परं सत्ताख्यं द्रव्यत्वाद्यपरमथ विशेषस्तु ।**
**निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिशेत्**[1] **॥६५॥**

**तत्र** तयोर्मध्ये **परं सत्ता** भावो महासामान्यमिति चोच्यते, **द्रव्यत्वाद्य**वान्तरसामान्यापेक्षया महाविषयत्वात् । अ[2]**परसामान्यं द्रव्यत्वादि,** एतच्च सामान्यविशेष इत्यपि व्यपदिश्यते । तथा हि । द्रव्यत्वं नवसु द्रव्येषु वर्तमानत्वात्सामान्यम्, गुणकर्मभ्यो व्यावृत्तत्वाद्विशेषः, ततः कर्मधारये सामान्यविशेष इति । एवं द्रव्यत्वाद्यपेक्षया पृथिवीत्वादिकमपरं तदपेक्षया घटत्वादिकम् । एवं चतुर्विंशतौ गुणेषु वृत्तेर्गुणत्वं सामान्यं द्रव्यकर्मभ्यो [3]व्यावृत्तेश्च विशेषः । एवं गुणत्वापेक्षया रूपत्वादिकं तदपेक्षया नीलत्वादिकम् । एवं पञ्चसु कर्मसु वर्तमानत्वात् कर्मत्वं सामान्यं, द्रव्यगुणेभ्यो व्यावृत्तत्वाद्विशेषः । एवं कर्मत्वापेक्षयोत्क्षेपणत्वादिकं ज्ञेयम् । तत्र सत्ता द्रव्यगुणकर्मभ्योऽर्थान्तरं कथा युक्तेति चेत्, उच्यते—न द्रव्यं सत्ता, द्रव्यादन्येत्यर्थः, एकद्रव्यत्वाद् एकैकस्मिन् द्रव्ये वर्तमानत्वादित्यर्थः । द्रव्यत्ववद्, यथा द्रव्यत्वं नवसु द्रव्येषु प्रत्येकं वर्तमानं द्रव्यं भवति, किं तु सामान्यविशेषलक्षणं द्रव्यत्वमेव, एवं सत्तापि । वैशेषिकाणां हि, अद्रव्यं वा द्रव्यम्, अनेकद्रव्यं वा द्रव्यम् । तत्राद्रव्यं द्रव्यमाकाशं दिगात्मा कालो मनः परमाणवः, अनेकद्रव्यं तु द्व्यणुकादिस्कन्धाः, एकद्रव्यं तु द्रव्यमेव न भवति, एकद्रव्यवती च सत्ता इति द्रव्यलक्षणविलक्षणत्वान्न द्रव्यम् । एवं न गुणः सत्ता, गुणेषु भावाद् गुणत्ववत् । यदि हि सत्ता गुणः स्यात् न तर्हि गुणेषु वर्तेत, निर्गुणत्वाद् गुणानाम्, वर्तते च गुणेषु सत्ता, 'सन् गुण' इति प्रतीतेः । तथा न सत्ता कर्म, कर्मसु भावात्, कर्मत्ववत् । यदि च सत्ता कर्म स्यान्न तर्हि कर्मसु वर्तेत, निष्कर्मत्वात्कर्मणाम्, वर्तते च कर्मसु भावः, 'सत्कर्मे'ति प्रतीतेः । तस्मात् पदार्थान्तरं सत्ता । अथ विशेषपदार्थमाहार्याऽर्द्धेन—**विशेषस्त्विति** । **निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिशेत्** । विनिर्दिशेत् कथयेद् आचार्य इति ज्ञेयम् । कथमित्याह—**अन्त्यो विशेषो नित्यद्रव्यवृत्तिरिति** । तथा हि । नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अत्यन्तव्यावृत्तिहेतवस्ते द्रव्यादिवैलक्षण्यात् पदार्थान्तरम् । तथा च प्रशस्तकारः[4], अन्तेषु भवा अन्त्याः, स्वाश्रयविशेषकत्वाद्विशेषाः । विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनःसु प्रतिद्रव्यमेकशो वर्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवः । [5]यथा अस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिक्रियावयवोपचयापचय अवयवविशेषसंयोगनिमित्तासंभवाद् येभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिर्देशकालविप्रकर्षदृष्टे च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या विशेषा इति । अमी च विशेषा एव, न तु द्रव्यत्वादिवत् सामान्यविशेषोभयरूपा व्यावृत्तेरेव हेतुत्वादित्यर्थः[6] ।

समवायपदार्थव्यक्तिलक्षणमाह—

**य इहायुतसिद्धानामाधा[7]राधेयभूतभावानाम् ।**
**संबन्ध इह प्रत्ययहेतुः प्रोक्तः स समवायः ॥६६॥**

इह प्रस्तुतमते, **अयुतसिद्धानामाधा[8]राधेयभूतभावानामिह प्रत्ययहेतुर्यः संबन्धः स समवायः** । यथेह तन्तुषु पट इत्यादि प्रत्ययस्यासाधारणं कारणं समवायः । यद्वशात् स्वकारणसामर्थ्यादुपजायमानं पटाद्याधार्यं

१. –दिष्टः म. १, २ । २. अपरं सा मु., म. २, प. १, २ । ३. व्यावृत्तित्वाद्वि–प. १ । व्यावृत्तत्वाच्च वि– प. २ । ४. –करः म. १ । ५. तथा मु., म. २ । ६. –दिति पदार्थः म. १, प. १, २ । ७. –माधेयाधारभू– म. १, २ । ८. –धार्याधारभू–म. १ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तन्त्वाद्याधारे संबध्यते, यथा छिदिः क्रिया छेद्येनेति । अयुतसिद्धानामिति । परस्परपरिहारेण पृथगाश्रयानाश्रितानामाश्रयाश्रयिभाव इति । परस्परवैधर्म्यं तु विविक्तैरभ्यूह्यम् । षण्णामपि पदार्थानां स्वरूपकथनमात्राधिकृतत्वाद् ग्रन्थस्य नेह प्रतन्यत इति ।

प्रमाणव्यक्तिमाह—

**प्रमाणं च द्विधामीषां प्रत्यक्षं लैङ्गिकं तथा ।**
**वैशेषिकमतस्यैवं संक्षेपः परिकीर्तितः ॥६७॥**

यद्यप्यौलूक्यशासने व्योमशिवाचार्योक्तानि त्रीणि प्रमाणानि, तथापि श्रीधरमतापेक्षयात्रोभे एव निगदिते । **अमीषां** वैशेषिकाणां **प्रमाणं द्विधा** द्विप्रकारम् । चः पुनरर्थे । कथमित्याह **प्रत्यक्ष**मेकं प्रमाणं, **तथेति** द्वितीयभेदपरामर्शे, **लैङ्गिक**मनुमानम् । उपसंहरन्नाह—**एव**मिति । एवमिति प्रकारसूचनं, यद्यपि प्रमातृफलाद्यपेक्षया बहु वक्तव्यं, तथाप्येवममुना प्रकारेण **वैशेषिकमतस्य संक्षेपः परिकीर्तितः** कथित इति ।

षष्ठं दर्शनमाह—

**जैमिनीयाः पुनः प्राहुः सर्वज्ञादिविशेषणः ।**
**देवो न विद्यते कोऽपि यस्य मानं वचो भवेत् ॥६८॥**

जैमिनिमुनेरमी इति **जैमिनीयाः** । पुत्रपौत्राद्यर्थे तद्धित ईयप्रत्ययः । जैमिनिशिष्याश्चैके उत्तरमीमांसावादिनः, एके पूर्वमीमांसावादिनः । तत्रोत्तरमीमांसावादिनो वेदान्तिनस्ते हि केवलब्रह्माद्वैतवादसाधनव्यसनिनः शब्दार्थखण्डनाय युक्तीः खेटयन्तोऽनिर्वाच्यतत्त्वे व्यवतिष्ठन्ते । यदाहुः—

**"अन्तर्भावितसत्त्वं चेत्कारणं[1] सदसत्ततः[2] ।**
**नान्तर्भावितसत्त्वं चेत्कारणं[3] तदसत्ततः ॥**
**यथा यथा विचार्यन्ते विशीर्यन्ते तथा तथा ।**
**यद्येतत्स्वयमर्थेभ्यो रोचते तत्र के वयम् ।**
**एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।**
**आस्ते न [4]वीरधीरस्य भङ्गः सङ्गरकेलिषु ॥**

एवं वादिप्रतिवादिनोः

**समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।**
**का तदस्तु गतिस्तद्वद्वस्तुधीव्यवहारयोः ॥**
**उपपादयितुं तैस्तैर्मतैरशङ्कनीययोः[5] ।**
**अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः ॥**

इत्यादिप्रलयकालानिलक्षुभितचरमसलिलराशिकल्लोलमालानुकारिणः परब्रह्माद्वैतसाधकहेतूपन्यासाः प्रोच्छलन्तश्चतुरचमत्कारं जनयन्तः क्व पर्यवस्यन्ति तास्तु युक्तयः सूत्रकृतानुल्लिङ्गितत्वाद् ग्रन्थविस्तरभयाच्च नेह प्रपञ्च्यन्ते, अभियुक्तैस्तु खण्डनमहातर्कादवसेयाः । पूर्वमीमांसावादिनश्च द्विधा प्राभाकरा भाट्टाश्च क्रमेण पञ्चषट्प्रमाणप्ररूपकाः । अत्र तु सामान्येन सूत्रकृत् पूर्वमीमांसावादिन एव जैमिनीयानुद्दिष्टवान् । **ते पुन**-**जैमिनीयाः**, **प्राहुः** कथयन्ति, कथमित्याह—**सर्वज्ञादिविशेषणः कोऽपि देवो न विद्यते यस्य वचो** वचनं **मानं** प्रमाणं **भवेत्** । सर्वज्ञादिविशेषण इति । सर्वज्ञादिना गुणेन विशेष्य[6] इति । आदिशब्दाद्विभुत्वनित्यत्वचिदात्मकत्वादिगुणविशिष्टः कोऽपि देवो नास्ति यद्वचनं प्रमाणतामनुभवेत्, [7]मानुषतनुत्वाविशेषेण विप्रलम्भकत्वाद् दुष्टपुरुषवत् । सर्वज्ञादिगुणविशिष्टपुरुषाद्यभाव इत्यर्थः । अथ किङ्करायमाणसुरासुरसेव्यमानताद्युपलक्षणेन

१. —करणं प. १, २ । २. तदस— भ. १, २ । ३. —करणं प. १, २ । ४. धीरवीरस्य प. १, २ । ५. —रशकनीययोः प. १, २ । ६. —ष्यत इ— भ. १, २, प. १, २ । ७. मानुषत्वावि —प. १, २, भ. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

त्रैलोक्यसाम्राज्यसूचकच्छत्रचामरादिविभूत्यन्यथानुपपत्तेश्चास्ति[1] कश्चित् पुरुषविशेषः सर्वज्ञ इति चेत्; त्वद्यूथ्योक्तवचनप्रपञ्चोपन्यासैरेव निरस्तत्वात्। यथा—

**"देवागमनभोयानचामरादिविभूतयः।**
**मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान्॥"** [ ]

अथ यथानादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिप्रक्रियया[2] शोध्यमानस्य निर्मलत्वमेवमात्मनोऽपि निरन्तरज्ञानाद्यभ्यासेन विगतमलत्वात्[त्वं] किं न संभवेदिति मतिः, तदपि न ह्यभ्यासमात्रसाम्ये शुद्धेरपि[3] तदेव तादवस्थ्यम्। यदुक्तम्—

**"गर्त्तमच्छाखामृगयोर्लङ्घनाभ्याससंभवे।**
**समानेऽपि समानत्वं लङ्घनस्य न विद्यते॥"** [ ]

न च सुतरां चरणशक्तिमानपि पङ्गुरखर्वपर्वतशिखर[4]मधिरोढुं क्षमः। उक्तं च—

**"दशहस्तान्तरं व्योम्नो यो नामोत्प्लुत्य गच्छति।**
**न योजनशतं गन्तुं शक्तोऽभ्यासशतैरपि॥"**

अथ मा भवतु मानुषस्य सर्वज्ञत्वं ब्रह्मविष्णुमहेश्वरादीनामस्तु। ते हि देवाः, संभवत्यपि तेष्वति[5]शायिसंपत्। यदाह कुमारिलः—

**"अथापि[6] वेददेहत्वाद् ब्रह्मविष्णुमहेश्वराः।**
**कामं भवन्तु सर्वज्ञाः सार्वज्ञ्यं मानुषस्य किम्॥"**

[7]एतदपि न; रागद्वेषमूलनिग्रहानुग्रहग्रस्तानामसंभाव्यमिदमेषामिति। न च प्रत्यक्षं तत्साधकम्, **'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना'** [ ] इति वचनात्। न चानुमानम्, प्रत्यक्षदृष्ट एवार्थे तत्प्रवृत्तेः[8]। न चागमः, सर्वज्ञस्यासिद्धत्वेन तस्यापि विवादास्पदत्वात्। न चोपमानम् तदभावादेव। अर्थापत्तिरपि न; सर्वज्ञसाधकस्यान्यथानुपपन्न[9]लिङ्गस्यादर्शनात्। यदि परमभावप्रमाणगोचरः सर्वज्ञ इति स्थितम्। प्रयोगश्चात्र—नास्ति सर्वज्ञः, प्रत्यक्षादिगोचरातिक्रान्तत्वात्, शशशृङ्गवदिति।

अथ कथं यथावस्थिततत्त्व[10]निर्णय इत्याह—

**तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टुरभावतः।**
**नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिश्चयः[11] ॥६९॥**

**तस्मा**त्प्रामाणिकपुरुषाभावा**दतीन्द्रियार्थानां** चक्षुरगोचरपदार्थानां **साक्षाद् द्रष्टु**र्ज्ञातुः सर्वज्ञादेः पुरुषस्या**भावाद् नित्येभ्यः** शाश्वतेभ्यो **वेदवाक्येभ्यो**ऽपौरुषेयवचनेभ्यो **यथार्थत्वविनिर्णयो** यथावस्थितपदार्थधर्मादिस्वरूपविवेचनं 'भवति' इत्यध्याहारः। अपौरुषेयत्वं च वेदानाम्—

**"अपाणिपादो ह्यमनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।**
**स वेत्ति विश्वं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्॥"** [ ]

इत्यादिभावनया रागद्वेषादिदोषतिरस्कारपूर्वकं भावनीयमिति।

---

१. –श्चास्ति विशिष्टः सर्वज्ञः प. २। –श्चास्ति विशेषः सर्वज्ञः प. १, म. १। २. –या विशो–प. १, २, म. १। ३. –पि ताद – प. १, २, म. १, २। ४. –शिखामधि– प. १, २, मु.। ५. –शयसम्प– प. १, २, म. १, २। ६. देवदेहत्वात् प. २। वेदहेतुत्वात् मु.। ७. तदपि न म. १, २, प. १, २। ८. तत्प्रवर्तनात् प. २। ९. –पपत्तिलि– प. १। १०. –तत्त्वज्ञाननि –प. १, २, म. १, २। ११. –निर्णयः म. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अथ यथावस्थितार्थव्यवस्थापकं तत्त्वोपदेशमाह—

**अत एव पुरा कार्यो वेदपाठः प्रयत्नतः ।**
**ततो धर्मस्य जिज्ञासा कर्त्तव्या धर्मसाधनी ॥७०॥**

यतो हेतोर्वेदाभिहितानुष्ठानादेव तत्त्वनिर्णयः, **अत एव पुरा पूर्वं** प्रयत्नतो यत्नाद्वेदपाठः **कार्यः** 'ऋग्यजुःसामाथर्वाणो वेदास्तेषां पाठः कण्ठपीठलुठत्पाठप्रतिष्ठा, [1]नानुश्रवणमात्रेण सम्यगवबोधस्थिरता[2], ततोऽनन्तरं[3] साधनीयपुण्योपचयहेतु**धर्मस्य** हेयोपादेयस्वरूपस्य वेदाभिहितस्य **जिज्ञासा** ज्ञातुमिच्छा **कर्तव्या** विधेया वेदोक्ताभिधेयविधाने यतितव्यमित्यर्थः ।

वेदोक्तधर्मोपदेशमेवाह—

**नोदनालक्षणो धर्मो, नोदना तु क्रियां प्रति ।**
**प्रवर्तकं वचः, प्राहुः स्वःकामोऽग्निं[4] यजेद्यथा ॥७१॥**

नोदनैव लक्षणं यस्य स **नोदनालक्षणो धर्मः** । तत्स्वरूपमेव सूत्रकृदाह । तु पुन**र्नोदना[5]क्रियां प्रति प्रवर्तकं वचः प्राहुः** । वेदोक्तस्वर्गादिसाधकाम्नायस्य क्रियाप्रवर्तकं वचनं नोदनामाहुरित्यर्थः । शिष्यानुकम्पया तत्सूत्रेणैव दृष्टान्तयन्नाह—**स्वःकामोऽग्निं यजेद्यथा** । यथा येन प्रकारेण स्वःकामः स्वर्गाभिलाषी जनोऽग्निं यजेद् अग्निकार्यं कुर्यात् । यथाऽऽहुस्तत्सूत्रम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति ।

प्रमाणान्याह—

**प्रत्यक्षमनुमानं च[6] शब्दश्चोपमया सह ।**
**अर्थापत्तिरभावश्च षट् प्रमाणानि जैमिनेः ॥७२॥**

**जैमिनेः** पूर्ववेदान्तवादिनः **षट् प्रमाणानि** ज्ञेयानीति संबन्धः । यद्यपि प्राभाकराणां मते पञ्च[7] प्रमाणानि, भाट्टानामेव षट्, तथाप्यत्र ग्रन्थकृत्सामान्यतः षट्संख्यामाचष्टे । प्रमाणनामानि निगदसिद्धान्येव ।

निरुक्तमाह—

**तत्र प्रत्यक्षमक्षाणां संप्रयोगे सतां मतिः ।**
**आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥७३॥**

**तत्र** प्रमाणषट्के, **अक्षाणा**मिन्द्रियाणां, **संप्रयोगे** पदार्थैः सह संयोगे, **सता**मनुपहितेन्द्रियाणां या **मति**र्बुद्धिरिदमित्यवबोधः; तत्प्रत्यक्षं प्रमाणं 'भवति' इत्यध्याहारः । यत्तदावनुक्तावप्यर्थसंबन्धात् ज्ञेयौ । सतामिति—विदुषामदुष्टेन्द्रियाणामित्यर्थः । एतावता मरुमरीचिकायां जलभ्रमः, शुक्तौ रजतभ्रमश्चेन्द्रियार्थसंप्रयोगजोऽपि द्रष्टुरविकलेन्द्रियत्वाभावान्न प्रत्यक्षं तत्प्रमाणकोटिमधिशेते । अनुमानमाह—**आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः** । आत्मा यदनुमिमीते स्वयं तदनुमानमित्यर्थः । अनुमानलैङ्गिकयोः [9]शाब्दभेदेऽप्यनुमीयत इत्यनुमानं लिङ्गाज्जातं लैङ्गिकमिति व्युत्पत्तिभेदाद्भेदो ज्ञेय उभयशब्दकथनं तु बालावबोधार्थमेवेति ।

**शाब्दं शाश्वतवेदोत्थमुपमानं प्रकीर्तितम् ।**
**प्रसिद्धार्थस्य साधर्म्यादप्रसिद्धस्य [10]भाजनम् ॥७४॥**

**शाब्द**मागमप्रमाणं **शाश्वतवेदोत्थं** शाश्वतान्नित्याद्वेदाज्जातम् । आगमप्रमाणमित्यर्थः । शाश्वतत्वं च वेदानामपौरुषेयत्वादेव । उपमानमाह—**यत्प्रसिद्धार्थस्य** प्रतीतपदार्थस्य **साधर्म्यात्** साम्या**दप्रसिद्धस्य** वस्तुनः **साधनं** तदुपमानं प्रमाणं **प्रकीर्तितं** कथितम् । यथा प्रसिद्धगोगवयस्वरूपो वनेचरोऽप्रसिद्धगवयस्वरूपं नागरिकं प्राह—'यथा गौस्तथा गवयः' इति । यथा भोः खुरककुदलाङ्गूलसास्नादिमन्तं पदार्थं गामिति जानासि, गवयोऽपि तथास्वरूपो ज्ञेय इत्युपमानम् । अत्र सूत्रानुक्तावपि यत्तदावर्थसंबन्धार्थमध्याहार्यौ ।

---

१. ननु श्र–म. १, २ । न तु श्र–प. १ । न तु श्रवणसम्य–प. २ । २. –स्थिरत्वं म. १, २ । ३. –न्तरं धर्मसा–प. १, २, म. १, २ । ४. यथा यजेत् प. २, म. १, २ । ५. –दनादि क्रिया प. १ । ६. तु शाब्दश्चो–म. १, २ । ७. पञ्चैव म. १, २ । ८. सति प. २ । ९. शब्दाभे– मु., म. १, २ ।
१०. भाजनम्–मु. ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

अर्थापत्तिमाह—

दृष्टार्थानुपपत्त्या तु कस्याप्यर्थस्य कल्पना।
क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥७५॥

**असौ** पुनर**र्थापत्तिरुदाहृता** कथिता, अर्थापत्तिप्रमाणं प्रोक्तमित्यर्थः। **यद्बलेन** [1]**कस्याप्यदृष्टस्यार्थस्य कल्पना क्रियते** संघटना विधीयते, कया **दृष्टार्थानुपपत्त्या** दृष्टः परिचितः प्रत्यक्षलक्ष्यो योऽर्थो देवदत्ते पीनत्वादिः तस्यानुपपत्त्या अघटमानतया अन्यथानुपपत्त्या इत्यर्थः। यथा पीनो देवदत्तो दिवा न भुङ्क्ते, पीनत्वस्यान्यथानुपपत्त्या रात्रावश्यं भुङ्क्त इत्यर्थ इत्यत्र, दृष्टं पीनत्वं विना भोजनं दुर्घटं, दिवा च न भुङ्क्ते, अतो रात्रावश्यमदृष्टं भोजनं ज्ञापयतीत्यर्थापत्तिः प्रमाणम्।

अथाभावप्रमाणमाह—

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तु[2]सत्तावबोधार्थं तत्राभावप्रमाणता ॥७६॥

**यत्र वस्तुरूपे**, अभावादौ पदार्थे **प्रमाणपञ्चकं** पूर्वोक्तं **न जायते, तत्राभावप्रमाणता** ज्ञेयेति संबन्धः। किमर्थमित्याह—[2]**वस्तुसत्तावबोधार्थम्**। वस्तुनोऽभावरू[3]पस्य मुण्डभूतलादेः सत्ता घटाद्यभावसद्भावः तस्यावबोधः प्रामाणिकपथावतारणं तदर्थं तद्धेतोरित्यर्थः। ननु कथमभावस्य प्रामाण्यम्। प्रत्यक्षं तावद्भूतलमेवेदं घटादि न भवतीत्यन्वयव्यतिरेकद्वारेण वस्तुपरिच्छिन्दत् तदधिकं विषयमभावैकरूपं निराचष्ट इति किं विषयमाश्रित्याभावप्रामाण्यं स्यात्। मुण्डभूतले घटाभावमाश्रित्येति चेत्, मैवम्, घटाभावप्रतिबद्धभूतलग्रहणासिद्धेः।

तदुक्तम्—

"न तावदिन्द्रियेणैषा नास्तीत्युत्पद्यते मतिः।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥" [ ] इति।

नास्तिताज्ञानग्रहणावसरे प्रामाण्यमेवाभावस्य, केवलं भावांश इन्द्रियसंनिकर्षजत्वेन पञ्चप्रमाणगोचरसंचरिष्णुतामनुभवन्नाबालगोपालाङ्गनाप्रसिद्धं व्यवहारं प्रवर्तयति। अभावांशस्तु प्रमाणपञ्चकविषयबहिर्भूतत्वात् केवलभूतलग्रहणाद्युपयोगित्वादभावप्रमाणव्यपदेशमश्नुत इति सिद्धमभावस्यापि युक्तियुक्ततया प्रामाण्यमिति।

उपसंहरन्नाह—

जैमिनीयमतस्यापि संक्षेपोऽयं निवेदितः।
एवमास्तिकवादानां कृतं संक्षेपकीर्तनम् ॥७७॥

अपिशब्दान्न केवलमपरदर्शनानां **जैमिनीयमतस्याप्ययं संक्षेपो निवेदितः** कथितः। वक्तव्यस्य बाहुल्याट्टीकामात्रे सामस्त्यकथनायोगात् संक्षेप एव प्रोक्तोऽस्ति। अथ सूत्रकृत्सम्म[4]तसंक्षेपमुक्त्वा निगमनमाह। **एव**मिति। **एव**मित्थम्, **आस्तिकवादिनामिह** परलोकगतिपुण्यपापास्तित्ववादिनां बौद्धनैयायिकसांख्यजैनवैशेषिकजैमिनीयानां **संक्षेपकीर्त्तनं कृतं**, संक्षेपेण वक्तव्यमभिहितमित्यर्थः।

विशेषान्तरमाह—

नैयायिकमतादन्ये भेदं वैशेषिकैः सह।
न मन्यन्ते मते तेषां पञ्चैवास्तिकवादिनः ॥७८॥

**अन्ये** आचार्या **नैयायिकमताद्वैशेषिकैः सह भेदं न मन्यन्ते** दर्शनाधिष्ठात्रेकदैवतत्वात् पृथग्दर्शनं नाभ्युपगच्छन्ति **तेषां** मतापेक्षया **आस्तिकवादिनः पञ्चैव**।

---

१. कस्याप्यर्थ–म. २। २. वस्त्वसत्ता–प. २। ३. –रूपमु–प. २। ४. –म्मतं सं–म. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

दर्शनानां षट्संख्या जगति प्रसिद्धा[1] सा कथं फलवतीत्याह—

**षष्ठदर्शनसंख्या तु पूर्यते तन्मते किल ।**
**लोकायतमतक्षेपात्कथ्यते तेन तन्मतम् ॥७९॥**

ये नैयायिकवैशेषिकयोरेकरूपत्वेनाभेदं मन्यमाना दर्शनपञ्चकमेवाचक्षते, **तन्मते षष्ठदर्शनसंख्या लोकायतमतक्षेपात्पूर्यते** । **तु** पुनरर्थे, **किलेति** परमाप्ताम्नाये, **तेन** कारणेन **तन्मतं** चार्वाकमतं **कथ्यते** तत्स्वरूपमुच्यत इति ।

तदेवाह—

**लोकायता वदन्त्येवं नास्ति देवो न निर्वृतिः ।**
**धर्माधर्मौ न विद्येते न फलं पुण्यपापयोः ॥८०॥**

**लोकायता** नास्तिका[2] **एवममुना** प्रकारेण **वदन्ति** कथमित्याह देवः—सर्वज्ञादिर्नास्ति, निर्वृतिर्मोक्षो नास्ति, अन्यच्च, **न विद्येते**, को **धर्माधर्मौ**, धर्मश्चाधर्मश्चेति द्वन्द्वः । पुण्यपापे सर्वथा न स्त इत्यर्थः । **पुण्यपापयोर्धर्माधर्मयोः फलं** स्वर्गनरकादिरूपं नेति **नास्ति**, तदपि[3] पुण्यपापयोरभावे कौतस्त्यं तत्फलमित्यादि । तच्छास्त्रोक्तमेव सोल्लुण्ठं दर्शयन्नाह—**तथा च तन्मतम्** ।

**एतावानेव लोकोऽयं यावानिन्द्रियगोचरः ।**
**भद्रे वृकपदं पश्य यद्वदन्ति बहुश्रुताः ॥८१॥**

**तथा चे**त्युपदर्शने । **तन्मतं** प्रस्तावान्नास्तिकमतम् । कथमित्याह—

**अयं लोकः** संसार **एतावानेव** एतावन्मात्र एव **यावान्** यावन्मात्र[4]मिन्द्रियगोचरः । इन्द्रियं स्पर्शनरसनघ्राणचक्षुःश्रोत्रभेदात् पञ्चविधं तस्य गोचरो विषयः । पञ्चेन्द्रियव्यक्तीकृतमेव वस्त्वस्ति नापरं किंचन[5] । अत्र लोकग्रहणाल्लोकस्यपदार्थसार्थस्य[6] संग्रहः । तथा[7] परे पुण्यपापसाध्यं स्वर्गनरकाद्याहुः, तदप्रमाणं प्रत्यक्षाभावादेव । अप्रत्यक्षमप्यस्तीति चेच्छशशृङ्गवन्ध्यास्तनन्धयादीनामपि भावोऽस्तु । तथा हि—स्पर्शनेन्द्रियेण तावन्मृदुकठोरशीतोष्णस्निग्धरूक्षादिभावा उपलभ्यन्ते । रसनेन्द्रियेण तिक्तकटुकषायाम्लमधुरास्वादलेह्यचूष्यपेयादयो वेद्यन्ते । घ्राणेन्द्रियेण मृगमदमलयजघनसारागुरुप्रभृतिसुरभिवस्तुपरमलोद्गारपरम्पराः परिचीयन्ते । चक्षुरिन्द्रियेण भूभूधरपुरप्राकारघटपटस्तम्भकुम्भाम्भोरुहादिमनुष्यपशुश्वापदादिस्थावरजङ्गमपदार्थसार्था अनुभूयन्ते । श्रोत्रेन्द्रियेण तु प्रथिष्ठगाथकपथपथिकप्रथ्यमानतालमानमूर्च्छनाप्रेङ्खोलनाखेलन्मधुरध्वनय आकर्ण्यन्ते । इति पञ्चप्रकारप्रत्यक्षदृष्टमेव वस्तुतत्त्वं प्रमाणपदवीमवगाहते । शेषप्रमाणानामनुभवाभावादेव निरस्तत्वाद् गगनकुसुमवत् । ये चास्पृष्टमनास्वादितमनाघ्रातमदृष्टमश्रुतमप्याद्रियमाणाः स्वर्गमोक्षादिसुखपिपासानुबन्धचेतोवृत्तयो दुश्चरतरतपश्चरणादि[8]कष्टपिष्टकया स्वजन्म क्षपयन्ति, तन्महासाहसं तेषामिति । किं चाप्रत्यक्षमप्यस्तितयाभ्युपगम्यते चेज्जगद[10]नपह्नुतमेव स्यात् । दरिद्रो हि स्वर्णराशिर्मेऽस्तीत्यनुध्याय हेलयैव दौःस्थ्यं दलयेत्, दासोऽपि स्वचेतसि स्वामितामवलम्ब्य स्वस्य किङ्करतां निराकुर्यादिति, न कोऽपि स्वानभिमतमालिन्यमश्नुवीत । एवं न कश्चित्सेव्यसेवकभावो दरिद्रिधनिभावो वा स्यात् । तथा च जगद्व्यवस्था[11] विलोपप्रसंग इति सुस्थितमिन्द्रियगोचर एव प्रमाणम् । ये चानुमानागमादिप्रामाण्यमनुमन्वानाः पुण्यपापव्यापारप्राप्यस्वर्गनरकादिसुखासुखं व्यवस्थापयन्तो वाचाटा न विरमन्ति, तान् प्रति दृष्टान्तमाह । **भद्रे वृकपदं पश्येति** । यथा हि कश्चित्पुरुषो वृकपददर्शने[12]समुद्भूतकुतूहलां दयितां मन्थरतरप्रसृमरसमीरणसमीकृतपांशुप्रकरे स्वकराङ्गुलिन्यासेन वृकपदाकारतां विधाय प्राह—हे **भद्रे ! वृकपदं पश्य** । कोऽर्थः । यथा तस्या अविदितपरमार्थाया मुग्धाया

१. –द्धा कथं फलती–प. १, २, मु. । २. एवमनुमानैव–प. १ । ३. एतदपि–प. १, २, म. १, २ । ४. –त्र इ–प. १, २ । ५. किञ्चित्–म. १ । ६. –र्थसं–प. १, २, म. १, २ । ७. तच्चापरे–प. १, २ म. १, २ । ८. पानाद–प. १, २ । ९. –ष्टमदृष्टमप्याद्रियमाणाः प. २ । –दिसुखपिष्टिकाः प. १, २, म. १, २ । १०. –नपह्नुत– मु. अनुपहृत –प. १, २ । ११. स्थालोप– प. १, २ । १२. समुत्पन्नकु– म. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

विदग्धो वल्लभो वृकचरणनिरीक्षणाग्रहं कराङ्गुलिन्यासमात्रेण प्रलोभ्य पूरितवान्, एवममी अपि धर्मच्छद्मधूर्ताः[1] परवञ्चनप्रवणा यत् किंचिदनुमानागमादिदार्ढ्यमादर्श्य व्यर्थं मुग्धजनान् स्वर्गादिप्राप्तिलम्पभोगाभोगप्रलोभनया भक्ष्याभक्ष्यगम्यागम्यहेयोपादेयादिसंकटे पातयन्ति, मुग्धधार्मिकध्यान्ध्यं चोत्पादयन्ति। एवमेवार्थं प्रमाणकोटिमधिरोपयन्तश्च यद्बहुश्रुताः परमार्थवेदिनो वदन्ति, वक्ष्यमाणपद्येनेत्यर्थः।

**पिब खाद च [2]जातशोभने ! यदतीतं वरगात्रि ! तन्न ते।**
**नहि भीरु ! गतं निवर्तते समुदयमात्रमिदं कलेवरम् ॥८२॥**

हे **जातशोभने**, भावप्रधानत्वान्निर्देशानां, जातं शोभनत्वं वदननयनादित्वं यस्याः [3]सेति तत्संबोधनम्। **पिब** पेयापेयव्यवस्थावैसंस्थुल्येन मदिरादेः पानं कुरु न केवलं पिब, **खाद च** भक्ष्याभक्ष्यनिरपेक्षतया मांसादिकं भक्षय। यद्वा पिबेति अधरादिपानं कुरु, खादेति भोगानुपभुङ्क्ष्वेति काम्युपदेशः, स्वयौवनं सफलीकुर्वित्यर्थः। अथ सुलभमेव पुण्यानुभावाद्भवान्तरेऽपि शोभनत्वमिति परोक्तमाशङ्क्याह—**यदतीतं वरगात्रि तन्न ते।** हे प्रधानाङ्गि[4] ! यदतीतम्, अतिक्रान्तं यौवनादि तत्ते तव भूयो न, किं तु जराजीर्णत्वमेव भविष्यतीत्यर्थः। जातशोभने-वरगात्रीतिसंबोधनयोः समानार्थयोरप्यादरानुरागातिरेकान्न [5]पौनरुक्त्यदोषः। यदुक्तम्—

**"अनुवादादरवीप्साभृशार्थविनियोगहेत्वसूयासु।**
**ईषत्संभ्रमविस्मयगणनास्मरणेष्वपुनरुक्तम्।"**

ननु स्वेच्छयाविच्छिन्ने खादने पाने दुस्तरा परलोके कष्टपरम्परा, सुलभं[6] च सति सुकृतसंचये भवान्तरेऽपि यौवनादिकमिति पराशङ्कां दूषयन्नाह—**न हि भीरु गतं निवर्तते।** हे भीरु ! परोक्तमात्रेण नरकादिप्राप्यदुःखभयाकुले ! गतम्, इह भवातिक्रान्तं सुखं यौवनादि न निवर्तते परलोके नाढौकते परलोकसुखाकाङ्क्षया तपश्चरणादिकष्टक्रियाभिरिहत्यसुखोपेक्षा व्यर्थेत्यर्थः। अथ जन्यजनकसंबन्धसद्भावादमुना कायेन परलोकेऽपि सहेतुकं सुखदुःखादिकं वेदितव्यमवश्यमेवेति चेत्; आह—**समुदयमात्रमिदं कलेवरम्।** इदं कलेवरं शरीरं समुदयमात्रं समुदयो मेलः वक्ष्यमाणचतुर्भूतानां संयोगस्तन्मात्रं मात्रशब्दोऽवधारणे भूतचतुष्टयसंबन्ध एव कायो न च पूर्वभवादिसंबद्धशुभाशुभकर्मविपाकवेद्यसुख[7]दुःखादिसव्यपेक्ष इत्यर्थः। संयोगाश्च तरुशिखरावलीलीनशकुनिगणवत्, क्षणतो विनश्वरास्तस्मात् परलोकानपेक्षया यथेच्छं पिब खाद चेति वृत्तार्थः।

चैतन्यमाह—

**किं च पृथ्वी जलं तेजो वायुर्भूतचतुष्टयम्।**
**[8]चैतन्यभूमिरेतेषां[9] मानं त्वक्षजमेव हि ॥८३॥**

**किं** चेत्युपदर्शने, **पृथ्वी** भूमिः, **जल**मापः, **तेजो** वह्निः, **वायुः** पवनः, इति **भूतचतुष्टयं तेषां** चार्वाकाणां **चैतन्यभूमिः** [10]चैतन्योत्पत्तिकारणं चत्वार्यपि भूतानि संभूय सपिण्डं चैतन्यं जनयन्तीत्यर्थः। **तु** पुन**र्मानं** प्रमाणं हि निश्चितम् **अक्षजमेव** प्रत्यक्षमेवैकं प्रमाणमित्यर्थः।

ननु भूतचतुष्टयसंयोगजा देहचैतन्योत्पत्तिः कथं प्रतीयतामित्याशङ्क्याह—

**पृथ्व्यादिभूतसंहृत्यां तथा [11]देहादिसंभवः।**
**मदशक्तिः सुराङ्गेभ्यो यद्वत्तद्वत्स्थितात्मता ॥८४॥**

**पृथिव्यादीनि** पृथिव्यप्तेजोवायुरूपाणि यानि **भूतानि** तेषां **संहृत्यां** मेले संयोगे सति **तथे**त्युपदर्शने, **देहादिसंभवः,** आदिशब्दादितरे भूभूधरादिपदार्था अपि भूतचतुष्टयसंयोगजा एव ज्ञेयाः। दृष्टान्तमाह—**यद्वद्** येन प्रकारेण **सुराङ्गेभ्यो** गुडधातक्यादिभ्यो मद्याङ्गेभ्यो **मदशक्ति**रुन्मादकत्वं भवति, **तद्वत्तथा** भूतचतुष्टयसंबन्धात् शरीर **आत्मता स्थिता** सचेतनत्वं जातमित्यर्थः।

---

१. धार्मिकछ–प. १, २, म. १, २। २. चारुलोचने प. १, २। ३. सा तत्स–प. २। ४. प्रधानगात्रि प. २। ५. –क्त्यं दो–मु.। ६. –भं भवति मु.। ७. –खानुबन्धस–प. १, २, म. १, २। ८. आधारो भू–प. १, २, म. १, २। ९. –भिरित्येषां प. १, २। १०. चेतनस्योत्पत्ति–प. १, २, म. १, २। ११. –हपरीणतेः म. १, २।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति स्थिते यदुपदेशपूर्वकमुपसंहारमाह—

**तस्माद् दृष्टपरित्यागाद्दृष्टे[1] यत् प्रवर्तनम् ।**
**लोकस्य तद्विमूढत्वं चार्वाकाः प्रतिपेदिरे ॥८५॥**

**तस्मादिति** पूर्वोक्तानुस्मारणे पूर्वं तस्मात्ततः कारणाद् **दृष्टपरित्यागाद्** दृष्टं पेयापेयखाद्याखाद्यगम्यागम्यानुरूपं प्रत्यक्षानुभाव्यं यत्सुखं तस्य परित्यागाददृष्टे तपश्चरणादिकष्टक्रियासाध्यपरलोकसुखादौ **प्रवर्तनं** प्रवृत्तिः । **च**ः समुच्चये । यत्तदोर्नित्यत्यात् पूर्वार्द्धे यत्संबन्धो ज्ञेयः । **तल्लोकस्य विमूढत्वमज्ञानत्वं चार्वाकाः** लौकायतिकाः **प्रतिपेदिरे** प्रतिपन्नाः । मूढलोका हि विप्रतारकवचनोपन्यासत्रासितज्ञानाः सांसारिकं सुखं परित्यज्य व्यर्थं स्वर्गं मोक्षपिपासया तपोजपध्यानहोमादिभिरिहत्यं सुखं हस्तगतमुपेक्षन्त इति ।

**[2]साध्यावृत्तिनिवृत्तिभ्यां या प्रीतिर्जायते जने ।**
**निरर्था सा मते तेषां [3]सा चाकाशात् परा न हि ॥८६॥**

**साध्यस्य** मनीषितस्य कस्यचिद्वस्तुन **आवृत्तिः** प्राप्तिः, कस्यचिद्वस्तुनोऽनभीष्टस्य **निवृत्तिरभावः, ताभ्यां जने** लोके **या प्रीतिर्जायते** उत्पद्यते **सा तेषां** चार्वाकाणां **निरर्थिका** निरभिप्राया शून्या **मताभीष्टा**। परभवार्जितपुण्यपापसाध्यं सुखदुःखादिकं सर्वथा न विद्यत इत्यर्थः । **सा च** प्रीतिराकाशाद् गगनात् परा न हि यथा आकाशं शून्यं तथैषापि प्रीतिरभावरूपैवेत्यर्थः ।

[4]उपसंहारमाह—

**लोकायतमतेऽप्येवं संक्षेपोऽयं निवेदितः ।**
**अभिधेयतात्पर्यार्थः पर्यालोच्यः सुबुद्धिभिः ॥८७॥**

**एवममुना** प्रकारेण **लोकायतमतेऽप्ययं संक्षेपो निवेदितः । अपिः** समुच्चये । न केवलं परमते संक्षेप उक्तो लोकायतमतेऽपि । अथ सर्वदर्शनसंमतसंग्रहे परस्परकल्पितानल्पविकल्पजल्परूपे [5]निरूपिते किंकर्त्तव्यमूढानां प्राणिनां कर्त्तव्योपदेशमाह—**अभिधेयेति । सुबुद्धिभिः** पण्डितैर**भिधेयतात्पर्यार्थः पर्यालोच्यः**। अभिधेयं कथनीयं मुक्तयङ्गतया प्रतिपाद्यं यद्दर्शनस्वरूपं तस्य तात्पर्यार्थः सारार्थो विचारणीयः । सुबुद्धिभिरिति । शुद्धा पक्षपातरहिता बुद्धिर्येषामिति । न तु कदाग्रहग्रहिलैः । यदुक्तम्—

**"आग्रही बत निनीषति युक्तिं तत्र यत्र मतिरस्य निविष्टा ।**
**पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ [ ] इति ।**

दर्शनानां पर्यन्तैकसारूप्येऽपि पृथक् पृथगुपदेष्ट्व्याद्भिमतिसंभवे विमूढस्य प्राणिनः सर्वस्पृकतया दुर्लभं स्वर्गापवर्गसाधकत्वम् । अतो विमर्शनीयस्तात्त्विकोऽर्थः । यथा च विचारितं चिरन्तनैः ।

**"श्रोतव्यः सौगतो धर्मः कर्त्तव्यः पुनरार्हतः ।**
**वैदिको व्यवहर्त्तव्यो ध्यातव्यः परमः शिवः ॥"**

इत्यादि विमृश्य श्रेयस्करं रहस्यमभ्युपगन्तव्यं कुशलमतिभिरिति पर्यन्तश्लोकार्थः । तत्समाप्ता चेयं षड्दर्शनसमुच्चयसूत्रटीका ।

**खेचरौ मूकराजहंसौ यावद्विश्वसरस्तटे ।**
**तावद्बुधैर्वाच्यमानं पुस्तकं नन्दतादिति ॥**
**सप्ताशीतिः श्लोकसूत्रं टीकामानं विनिश्चितम् ।**
**सहस्रमेकं द्विशती द्वापञ्चाशदनुष्टुभाम् ॥**

**इति श्रीहरिभद्रसूरिकृतषड्दर्शनसमुच्चये मणिभद्रकृता लघुवृत्तिः समाप्ता ।**

**शम् ।**

१. –गाद्यददृष्टे प्र–म. १, २ । २. साध्यवृ–प. १, २, म. १, २ । ३. स्वर्गः कामात् परो न हि प. १, २ । ४. उपसंहरन्नाह म. १, २ । ५. प्ररूपि–प. १, २, म. १, २ ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

## परिशिष्टम् २

# षड्दर्शनसमुच्चयावचूर्णिः

श्रीमद्वीरजिनं नत्वा हरिभद्रगुरुं तथा । किंचिदर्थाप्यते युक्त्या षड्दर्शनसमुच्चयम् ॥

सत् शोभनं दर्शनं सामान्यावबोधलक्षणं ज्ञानं सक्तं [सम्यक्त्वं] लोचनं वा यस्य, जिनो रागादिजेतृत्वात्, वीरमिति साभिप्रायं प्रमाणवक्तव्यस्य पक्षेच्छेदादि [ परपक्षोच्छेदादेः ] सुभटवृत्तित्वात् भगवतश्च दुःखसंपादिविषमोपसर्गसहिष्णुस्तन[ त्वेन ]सुभटत्वात् । यदुक्तम्—"विदारणात् कर्मततेर्विराजनात्तपःश्रिया [ रूपश्रिया ] विक्रमतस्तथाद्भुतात् । भवत्प्रमोदः किल नाकिनायश्चकार ते वीर इति स्फुटाभिधानम् ( धा तम् ) ॥ स्याद्विकल्पितो वादः स्याद्वादः, सदसन्नित्यानित्यादिः तं दिशति यस्तम् । सर्वाणि च तानि दर्शनानि च बौद्धादीनि तद्वाच्यः अर्थाभिधेयः अर्थाभिधेय वस्तु [ अर्थोऽभिधेयरै ] वस्तुप्रयोजननिवृत्तिस्त्वि[ष्वि]-त्यनेकार्थः संक्षेपेणैव, विस्तरकरणं दुरवगाहम् ॥१॥ प्रसिद्धानि दर्शनानि षडेव । एवावधारणे । यद्यपि भेदप्रभेदतया बहूनि दर्शनानि प्रसिद्धानि । यदुक्तम्—"असियसयं किरियायं अक्किरियवाईणमाह चुलसीए । अन्नाणी सत्तट्ठी वेणइआणञ्च बत्तीसं ।" इत्यादि । मूलभेदापेक्षया मूलभेदानाश्रित्य, वैभाषिकसू( सौ )-त्रान्तिकबहूद[क]कुटीचरहंसपरमहंसभा[ भ ]ट्टप्रभाकरादिसंभवश्चैतदन्तर्गत एव । देवता दर्शनाधिष्ठायकः । तत्त्वानि रहस्यानि मोक्षसाधकानि ॥२॥ बुद्धो देवतास्येति बौद्धम् । न्यायादनपेतं नैयायिकम् । सांख्यं कापिलदर्शनम् । जैनो देवतास्येति जैनम् । वैशेषिकं कणादि[द]दर्शनम् । जैमिनिऋषिमतं जैमिनीयं भाट्टं दर्शनम् । चः समुच्चये ॥३॥ चतुर्णां दुःखसमुदयः(य)मार्गनिरोधलक्षणानाम् आर्यसत्यानां तत्त्वानां प्ररूपकः कथयिता सुगतो नाम । आदिशब्दोऽत्र अवयवार्थः, यदुक्तम्—"सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा । चतुर्ष्वेषु च मेधावी [धीमत] आदिशब्दं तु लक्षयेत् [योजयेत्] ॥४॥ संसरन्तीति संसारिणो विस्तरणशीलाः । स्कन्धाः प्रचयविशेषाः । दुःखं ते पञ्च [च] पञ्च । विशिष्टं ज्ञानं विज्ञानं सर्वक्षणिकत्वज्ञानम् । यदुक्तम् "यत्सत्तत् क्षणिकं यथा जलधरः सन्तश्च भावा इमे ।" वेद्यत इति वेदना, पूर्वभवपुण्यपापपरिणामबद्धाः सुखदुःखानुभवरूपा । तथोक्तम्—"इत एकनवते कल्पे शक्त्या मे पुरुषो हुतः । तत्कर्मणो विपाकेन पादे विद्धोऽस्मि भ( भि )-क्षवः ॥" संज्ञेति सर्वं वा चेतनाचेतनं [सचेतनाचेतनं] संज्ञामात्रं नाममात्रम्, नात्र पुत्रकलत्रभ्रातृत्वादि [तादिः] घटपटादिर्वा पारमार्थिकाः[कः] । पूर्वानुभूतरूपः संस्कारः, स एवायं देवदत्त इत्याद्याकारेण ज्ञानोत्पत्तिः संस्कारः सैवेयं दीपकलिकेति रूपम् इति रगरगायमाणपरमाणपरमाणुप्रचयः, बौद्धमते हि स्थूलरूपपदार्थस्य निराक्रियमाणत्वाद् चेतन[ त्वेन ]परमाणव एव तात्त्विकाः । रागद्वेषमोहानां समस्तो गणो यस्मात् समुदेति समुद्भवति । अयमात्मा अयमात्मीयः पदे पदसमुदायोपचारात्, अपरः[ अयं परः ] परकीयः इति भावो रागद्वेषनिबन्धनं स समुदयः ॥५-६॥ सर्वेषां घटपटादीनां स एवायमिति ये संस्कारा ज्ञानसंतानास्ते क्षणिकाः, सर्वं सत् क्षणिकम् अक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्, एवं या वासना स मार्गः । तुशब्दः पश्चा( पाश्चा )त्यार्थसंग्रहार्थं पूर्वं समुच्चयार्थे । निरोधो मोक्षः । सर्वक्षणिकत्वनैरात्म्यवासनारूपः [मार्गः] ॥७॥ पञ्चेन्द्रियाणि प्रसिद्धानि । शब्दरूपरसगन्धस्पर्शरूपाः विषयाः । मानसं चित्तम् धर्मायतनं धर्मप्रधानमायतनं चेत्यादि । एतानि द्वादशायतनानि तत्त्वानन्तरं निरूप्यन्ते ॥८॥ तथा सौगतदर्शने द्वे प्रमाणे । चः पुनरर्थे । अक्षमक्षं प्रतिगतं प्रत्यक्षम् ऐन्द्रियकम् । अनुमीयतेऽनुमानं लैङ्गिकम् । सम्यग्ज्ञानं निश्चितावबोधो द्विविध एव [द्विधा यतः] ॥९॥ शब्दसंसर्गवती प्रतीतिः कल्पना तयापोढं रहितं निर्विकल्पकम्, अभ्रान्तं भ्रान्तिरहितम्, रगरगायमाणपरमाणुलक्षणस्वरूपं [स्व] लक्षणं हि प्रत्यक्षं निर्विकल्पकम्, बाह्ये स्थूलपदार्थ[र्थगं तज्ज्ञानं] गतं ज्ञानं सविकल्पकं भ्रान्तं च । तु पुनः त्रिरूपात् पक्षधर्मत्वं-सपक्ष[क्षे]सत्त्व[त्त्वं]विपक्षव्यावृत्तिरूपात् लिङ्गतो धूमादेः र्धी[यत्] लिङ्गिनो वैश्वान-

Jain Education International For Private & Personal Use Only www.jainelibrary.org

रादेर्ज्ञानं तदनुमानम् । सूत्रे लक्षणं नेक्षणं[णीयं] तेन चरमपदस्य नवाक्षरत्वेऽपि न दोषः ॥१०॥ साध्यधर्मविशिष्टो धर्मी पक्षः, यथा 'अद्रिरयं वह्निमान् धूमवत्त्वात्' अत्र पर्वतः पक्षः धर्मत्वं वह्निमत्त्वं धूमवत्त्वेन व्याप्तम् । सपक्षे [क्ष] सत्त्वमिति, यो यो धूमवान् स स अग्निमान् यथा महानसे, धूमवत्त्वेन हेतुना सपक्षे महानसे सत्त्वं वह्निमत्त्वम् । विपक्षे नास्तिता यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा जलाशये वह्निमत्त्वं व्यावर्तमानं व्याप्यं धूमवत्त्वमादाय व्यावर्तते ॥११॥ अयं संक्षेपो निवेदितः कथितः, बौद्धानां राद्धान्तः सिद्धान्तः [तस्य] [तद्वाच्यः] यद्वाच्यम्, इतो नैयायिकस्य विशेषशैवशासनस्य ॥१२॥ अक्षपादा नैयायिकाः । सृष्टिः प्राणी (णि)नां समु[नामु]-त्पत्तिः, संहारः तद्विनाशः तत्करोतीति । विश्वस्य हि कश्चित् स्रष्टा संहर्ता विज्ञेयः, केवलसृष्टौ च निरन्तरोत्पद्यमानापारप्राणिगणस्य भुवनत्रयेऽप्यमात्वमिति [ प्राणिगणस्यापारत्वात् ] संहारकर्तापि कश्चिदभ्युपगन्तव्यः जगतः कार्यत्वाच्च । शिव ईश्वरः । विभुः [सर्व] व्यापकः । नित्यश्चासौ एकश्चेति, [अ] प्रच्युतानुत्पन्नस्थिर-[रैक] स्वभावं हि नित्यम्, एकोऽद्वितीयः बहूनां घटाना[घटनां]युक्तेः । सर्वज्ञः स सर्वविशेषज्ञानात्[तात्] शाश्वतबुद्धिस्थानम्, क्षणिकबुद्धित्वे हि पराधीनता ॥१३॥ अत्र नैयायिकमते प्रमाणादीनि षोडशतत्त्वानि यथाक्रमं व्याक्रियमाणानि । नामानि सुगमानि । एवम् अमुना प्रकारेण प्रकटनमार्यस्य[मर्थस्य]पदार्थस्योपलब्धिर्ज्ञानं तस्य हेतुः कारणं प्रमाणं चतुर्विधम् ॥१४-१६॥ चतुः प्रमाणि [ण] (णानां) नामानि । अथ प्रत्यक्षानुमानस्वरूपमाह— इन्द्रियं चार्थश्चेति तयोः संनिकर्षात् संयोगादुत्पन्नम्, इन्द्रियार्थयोर्हि नैकदा (द्यात्) संयोगाज्ज्ञानम् । यदुक्तम्—"आत्मा सहे (है) ति मनसा मन इन्द्रियेण, स्वार्थेन चे[इ]न्द्रियम [मि] तिक्रम एव शीघ्रः ।

योगोऽयमेव मनसा किमगम्यमस्ति यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥"

अव्यभिचारि [र] कं ज्ञानान्तरेण नान्यथाभावि, शुक्तिशकले कलधौतबोधो व्यभिचारी । व्यवसायात्मकं व्यवहारसाधकं सजलधरणितले जलहारं [ज्ञानं] व्यवहारासाधकत्वादप्रमाणम् । व्यपदेशो विपर्ययस्तेन रहितम् । तु पुनरनुमानं तत्पूर्व [र्वं] प्रत्यक्षपूर्वं त्रिप्रकारम् ॥१७–१८॥ पूर्ववच्छेषवत् सामान्यतो दृष्टम् । तत्र त्रिषु मध्ये कारणात् मेया [चात् कार्यं] तद्वृष्टिलक्षणं यतो ज्ञायते तत्कारणकार्यमनुमानं निदर्शनेन द्रढयति ॥१९॥ रोलम्बा भ्रमराः, गवलं माहिषं शृङ्गम्, व्यालाः गजाः सर्पाश्च[वा], तमाला वृक्षाः, मलिना अर्थात् कृष्णा त्विट् येषाम् । एवंप्राया इत्युपलक्षणेन परेऽप्युन्नतत्वगर्जितत्वा [ता] दयो विशेषा ज्ञेयाः ॥२०॥ यथा [यच्च] कार्यात्फलात् कारणानुमानं फलोत्पत्तिहेतुपदार्थाविगमनं तच्छेषवत् । यथाविधप्रवहत्सलिलनदीपूरात् उपरिशिखरिशिखरोपरि जलाभिवर्षणज्ञानम् ॥२१॥ चः पुनरर्थे । सामान्यतोदृष्टं तदनुमानं यथा पुंसि देवदत्तादौ देशान्तरत्वासिर्गति-पूर्विका दृष्टा यथा उज्जयिन्याः प्रस्थिता [तो] माहिष्मतीं प्राप [प्तः] । तथा सूर्योदया (सूर्यस्य उदया) [सूर्येऽपि उदया] चलात् सायमस्ताचलगमनं [गमनं] ज्ञापयति ॥२२॥ क्रमागतमपि शाब्दप्रमाणमुपेक्ष्य उपमानमाह— तदुपमानं यत्तदोर्नित्याभिसंबन्धात् । यत्, किंचिद् अप्रसिद्धस्य अज्ञायमानस्य अर्थस्य ज्ञापनं प्रसिद्धधर्मसाधर्म्यादाबालगोपालाङ्गनाविदितात् क्रियते । साधर्म्यं समानधर्मत्वम् । यथा अरण्यवासी चिरपरिचितगोगवयलक्षणो नागरिकेण गावा [गवोप] लक्षणवता पृष्टो दृष्टान्तमदात् ॥२३॥ तु पुनः । आप्तोऽवितथवादी हितश्च यो जनताथ्यो [जनस्तस्य तथ्यो] हितोपदेशो देशनावाक्यं तच्छाब्दमागमप्रमाणम् । अथ प्रमाण [प्रमेय] लक्षणमाह [प्रमेयलक्षणमाश्रित्याह-अथ] प्रमाणग्राह्योऽर्थः प्रमेयम् । तुः पुनरर्थे । आत्मा च देहश्चेति द्वन्द्वः । आदिशब्देन षण्णां प्रमेयार्थानां परिग्रहः । तत्र सचेतनत्वकर्तृत्वसर्वगतत्वादिना आत्मा अनुमीयते एवं देहादयः, अत्र तु ग्रन्थविस्तरतया नात्र प्रपञ्चिताः ॥२४॥ संशयादिस्वरूपमाह । दूरावलोकनेन पदार्था [र्थ]-परिच्छेदकधर्मेषु किमेतदिति सन्देहो वः स्थाणुर्वा पुरुषो वेति संशयः । अर्थत्वावणी ( ? ) साध्यं कार्यं प्रति प्रवर्त्तते प्रतीत्य अध्याहार्यम् । न हि निष्फलः कार्यारम्भः इति ॥२५॥ यस्मिन्नुपन्यस्ते वचने वादगोचरो न भवति उभयसम्मतत्वात् [संशयत्वात्] । उक्तं च—"तावदेव चलत्यर्थो मन्तो विषयमागतः । तावन्नोत्तम्भते नैव दृष्टान्तो नावलम्ब्यते [दृष्टान्तेनावसन्ध्यते] ।" एष दृष्टान्तः । सिद्धान्तः पुनश्चतुर्धा— सर्वतन्त्रप्रतितन्त्र-अधिकरण-अभ्युपगमभेदात् । विशेषार्थो विस्तरग्रन्थादवसेयो नाममात्र-कथनम् ॥ २६ ॥ प्रतीज्ञापक्षः वह्निमानयं सानुमान् । हेतुर्लिङ्गवचनं धूमवत्त्वात् । दृष्टान्त उदाहरणम्, यथा महानसमिति । उपनयो

Jain Education International For Private & Personal Use Only www.jainelibrary.org

हेतोरुपसंहारकं वचनम्, धूमवांश्चायम् । निगमनं हेतुपदेशेन पुनः साधर्म्योपसंहरणम्, तद्वह्नि तस्माद् वह्निमान् पर्वत इत्यादि पञ्चावयवस्वरूपनिरूपणमवयवतत्त्वम्[ज्ञेयमिति] । दूराद् दृगगोचरे स्पष्टप्रतिभासाभावात् 'किमयं स्थाणुर्वा पुरुषो वा' इति संशयः, तदुपरमे काकादिपतनावलोकनेन आदिशब्दात् स्थाणुधर्मो [र्मा] ग्राह्यः, अत्र कीलकेन भाव्यम्, पुरुषस्य शिरःकम्पनहस्तचालनादिभावात् । स्थाणुरेवायं पुरुष एवायमिति वः प्रतीति-विषयः । [ स निर्णयः ] ॥२७-२८॥ कथा प्रामाणिकी तस्या अभ्यासकारणं या सा वादः पक्षः प्रतिज्ञा प्रति-पक्षः प्रतिज्ञोपन्यासप्रतिपंथी तयोः संग्रहात्, निग्राहकजयपराजयानपेक्षगुरुविनेययोः ॥२९॥ विजयाभिलाषिणो वादिनः प्रतिवादिनश्च प्रारब्धप्रमाणोपन्यासगोष्ठी छलं त्रिधा—वाक्छलम्, सामान्यछलम्, उपचारछलम् । जातयः २४ भेदाः । आदे [दिशब्दात्]निग्रहस्थानानि[दि] । एतैः कृत्वा परपक्षनिराकरणं दूषणोत्पादेन[पादनेन] स्वमात[मत]स्थापनेन स्व[स] जल्पः । सा वितण्डा, या वादिप्रयुक्तपक्षप्रतिरोधकप्रतिवादिन्यस्तप्रतिपक्षरहिता ॥३०॥ हेतुरूपवदाभासन्ते हेत्वाभासाः पञ्च । पक्षे [क्ष] धर्मत्वं नास्ति सोऽसिद्धः । विपक्षे सन् प्रतिपक्षे[सपक्षे] वा [चा] सन् विरुद्धः । पक्षत्रयवृत्तिरनैकान्तिकः । प्रत्यक्षागमविरोधः कालात्ययापदिष्टः । विशेषाग्रहणं हेतुत्वेन प्रयुज्यमानं प्रकरणसमः । परोपन्यस्तवादे स्वाभिमतकल्पनया वचनविघातः छलम् । नवोदकः प्रत्य-ग्रोदकः नवसंख्यामारोप्य दूषयति । मञ्चाः क्रोशन्तीति छलम् । अदूषणान्यपि दूषणवदाभासन्ते आभासमात्र-त्वादेव पक्षं न दूषयन्ति जातयः [जाति] साधर्म्यादि । 'अनित्यः शब्दः कृतकत्वात् घटवत्' वादिनेत्युक्ते प्रतिवाद्याह—नित्यः शब्दो निरवयवत्वादाकाशवत् । न चात्र हेतुः घटवदनित्यत्वे आकाशवन्नित्यत्वे नित्यत्वेऽप्साकाशवत् वास्ति ॥३१॥ येन केनचिद्द्रव्येण विपक्षो निगृह्यते तन्निग्रहस्थानम् । प्रतिज्ञाशब्दः संबध्यते – प्रतिज्ञाहानिः प्रतिज्ञासंन्यासः प्रतिज्ञाविरोध इत्यादि । हेतौ अनैकान्तिके कृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तधर्मेऽभ्युपगच्छतः प्रतिज्ञाहानिनिग्रहस्थानम्, यथा अनित्यः शब्द ऐन्द्रियकत्वात् घटवदिति प्रतिज्ञा साधनाभासवादी वदन् परेण 'सामान्यमैन्द्रियकमपि नित्यं दृष्टम्' इति हेतावनेकान्ते कृते यद्येवं ब्रूयात् 'सामा-न्यवद् घटोऽपि नित्यो भवति' इति ब्रुवाणः शब्दानित्यत्वप्रतिज्ञां त्यजेत् 'पक्षसाधनदूषणोद्धाराशक्त्या प्रतिज्ञामेव निह्नुवानस्य प्रतिज्ञासंन्यासो निग्रहस्थानम् । यथानित्यः शब्द ऐन्द्रियकत्वेन तथैव सामान्येनानैकान्तिकताया-मुद्भावितायां यदि ब्रूयात् क एवमाह अनित्यः शब्द इति प्रतिज्ञासंन्यासः । प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः निग्रहस्थानम् । यथा गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति प्रतिज्ञाहेत्वोर्विरोधः । यदि गुणद्रव्यातिरिक्तं तदेयं प्रतिज्ञा विरुद्धाभिधानात् पराजीयते ॥३२॥ पूर्वार्धं सुगमम् । सांख्याः क (का) पिलाः, अपि[आदि]पुरुषनिमित्तेयं संज्ञा । तदभीष्ट[भीष्टाश्च]पञ्चविंशतितत्त्वादिभावानां संक्षेपः कथ्यते ॥३३॥ ईश्वरं देवता ये [तया] न मन्यन्ते केवलाध्यात्मवादिनः । केचित्पुनः ईश्वरदेवताः । तेषामुभयेषामपि तत्त्वानां पञ्च-विंशतिर्भवति । तत्त्वं ह्यपवर्गसाधकम् । यदुक्तम्—पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतिः । जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥३४॥ तावदिति प्रक्रमे । गुणत्रयम्, क्रमेण परिपाट्या विशेषयति । सत्त्वं प्रसाद[दः]कार्यलिङ्गम्, वदननयनादिप्रसन्नता जनिरजसि [त] तदा आनन्दपर्यायः । तमोगुणे वा [च] दैन्यं वयो वियता [चो विच्छायता] नेत्रसंकोचादि । एतेनैव [न च] आधिभौतिक-आध्यात्मिक-आधिदैविकं [दैव] लक्षणं दुःखत्रयमाक्षिप्यते ॥३५॥ एतेषां सत्त्वरजस्तमसां [भोगुणानां] प्रीत्यप्रीतिरूपविषयरूपाणां [विषादरूपाणां] समतयावस्थितिः सा किल प्रकृतिरुच्यते । प्रधानाव्यक्तशब्दाभ्यां वाच्या [शब्दवाच्याः-] प्रकृतिः प्रधानमव्यक्तं चेति नामान्तरम् । शाश्वतभावतया प्रसिद्धा नित्या, नानापुरुषाश्रया या च प्रकृतिः ॥ ३६ ॥ ततो गुणत्रयाभिघातान्महानिति बुद्धिरुत्पद्यते । एवमेतन्नान्यथा, गौरेवायं नाश्वः स्थाणुरेवायं न पुरुष इति निश्चयेन पदार्थप्रतिपत्तिः । तस्याः ८ रूपाणि—धर्मज्ञानवैराग्यैश्वर्यरूपाणि सत्त्वभूतानि अधर्मादीनि च-असात्त्विकानि । ततो बुद्धेरहंकारोऽभिमानात्मकः तस्मादहंकारात् षोडशकगणमाह ॥३७॥ बुद्धिप्रधा-नानि बुद्धिसहचराण्येवेति कृत्वा बुद्धीन्द्रियाणि । स्पर्शनं त्वगिन्द्रियम् । कर्म-क्रियासाधनानि इन्द्रियाणि कर्मेन्द्रियाणि । पायुरपानम् । उपस्थः प्रजननम् । वचःपाणिपादाः (हस्ताः) प्रसिद्धाः । मन एकादशम् । पञ्चतन्मात्राणि शब्दरूपरसगन्धस्पर्शाख्यानि । एवं षोडशको गु(ग)णः ॥३८-३९॥ पञ्चभ्यस्तन्मात्रेभ्यो

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भूतपञ्चकम् । शब्दतन्मात्रादाकाशम्, शब्दो ह्यम्बरगुणः । स्पर्शतन्मात्राद्वायुः । रसतन्मात्रादापः । रूपतन्मात्रात्तेजः । गन्धतन्मात्राद्भूमिः । शब्दतन्मात्रासहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः । शब्दस्पर्शसहितरूपतन्मात्रात्तेजः । शब्दस्पर्शरूपगुणम् । शब्दस्पर्शरूपगुणसहित [ रस ] तन्मात्रादाप; शब्दस्पर्शरूप [ रस ] गुणाः । शब्दस्पर्शरूपरससहितगन्धतन्मात्रात् पृथिवी शब्दस्पर्शरस [रूपगन्ध] गुणा जायते ॥ ४० ॥ प्रकृतेर्महानहंकारः पञ्चबुद्धीन्द्रियाणि [ पञ्चकर्मेन्द्रियाणि ] मनश्च पञ्च तन्मात्राणि पञ्च भूतानि, २४ तत्त्वानि रूपं यस्य तत्प्रधानं प्रकृतिः कथिता । पञ्चविंशं तत्त्वं पुरुषः अन्यः अकर्त्ता । प्रकृतिरेव करोति बध्यते मुच्यते च । पुरुषस्तु "अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः । अकर्ता निर्गुणः सोऽपि [सूक्ष्म] आत्मा कापिलदर्शने ॥" अन्यः प्रकृतिरेव कर्ता तु पुनर्न पुरुषः । विगुणः सत्त्वरजस्तमो-रूपगुणत्रयविकलः । भोक्ता भोगी । नित्यं यासौ चिच्चैतन्यशक्तिः तथाभ्युपेतः सहितः । आत्मा हि स्वबुद्धेरव्यतिरिक्तं मन्यते । सुखदुःखादयो विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति । बुद्धिश्चोभयमुखदर्पणाकारा । ततस्तस्यां चैतन्यशक्तिः प्रतिबिम्बते । ततः सुख्यहं दुःख्यहमित्युपचर्यते ॥४१॥ तत्त्वोपसंहारमाह—पूर्वार्धं सुगमम् । अत्र सांख्यमते प्रकृतिपुरुषयोर्वर्तनं पङ्ग्वन्धयोरिव । यथा पङ्ग्वन्धौ संयुतावेव कार्यक्षमौ न पृथक्, तथा प्रकृतिनरौ । प्रकृत्युपात्तं पुरुषो भुङ्क्ते इत्यर्थः ॥४२॥ प्रकृत्या सह विरहे पुरुषस्य मोक्षः । एतस्याः प्रकृतेर्विषयमान्तरं ज्ञानं बन्धविच्छेदाद् भवति । बन्धस्त्रिविधः प्राकृतिकवैकारिकदाक्षणिकभेदात् । प्रकृतावात्मज्ञानात् प्राकृतिकः । भूतेन्द्रियाहंकारबुद्धिविकारान् पुरुषबुद्ध्योपासते वैकारिकः । इष्टापूर्ते दाक्षिणः । पुरुषतत्त्वानभिज्ञो ह्यिष्टापूर्तकारी त्रिविधबन्धच्छेदात् परमब्रह्मज्ञानानुभवः । प्रमाणत्रयम्, प्रत्यक्षमिन्द्रियोपलभ्यम्, लैङ्गिकमनुमानम्, शाब्दं चागमस्वरूपम् ॥४३॥ चः समुच्चये । न केवलं बौद्धनैयायिकयोः सांख्यमतस्यापि संक्षेपः कथितः । सुष्ठु शोभनो विचारोऽर्थोऽस्यास्तीति साभिप्रायम् । अपराणि दर्शनानि—"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥" इत्याद्यविचारपदवीमाद्रियन्ते । जैनस्त्वाह—"अस्ति वक्तव्यता काचित्तेनेदं न विचार्यते । निर्दोषं काञ्चनं चेत्स्यात् परीक्षाया बिभेति किम्" जैनो युक्तिमवीवगाहते—"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ ४४ ॥ देवतत्त्वमाह—जयन्ति रागादीन् जिनाः केवलिनः तेषामिन्द्रः स्वामी । रागः सांसारिकः स्नेहः । द्वेषो वैरानुबन्धः तद्रहितः । धवखदिरपलाशादिविशेषावबोधो ज्ञानम्, वनमिति सामान्यावबोधो दर्शनम् । केवलशब्दोभ ( शब्द उभ ) यत्र संबध्यते । केवलम् इन्द्रियज्ञामानपेक्षम् । छद्मस्थस्य हि प्रथमं दर्शनं ततो ज्ञानम्, केवलिनस्त्वादौ ज्ञानं ततो दर्शनम् ॥ ४५ ॥ मोहनीयकर्मोदयाद् हिंसात्मकशास्त्रेभ्योऽपि युक्तिकाङ्क्षादिमोहः स एव मल्लः, स हि येन रागद्वेषमोहसद्भावादेवमन्यतीर्थाधिष्ठातारो मुक्तितया प्रसिद्धाः । सुरासुरसेव्यमानत्वमानुषङ्गिकफलम् । सद्रूपान् द्रव्यपर्यायरूपान् नित्यानित्यसामान्यविशेषाद्यनन्तधर्मात्मकान् पदार्थानुपदिशति यः सर्वाणि धनधान्यादीनि कर्माणि जीवयोग्यावद्यपुद्गलाः तेषां क्षयं विधाय मोक्षं संप्राप्तः । अपरे सौगतादयः मोक्षं प्राप्ता अपि स्वतीर्थतिरस्कारदर्शने पुनर्भवमवतरन्तः श्रूयन्ते, न तेषां कर्मक्षयः । कर्मक्षये हि भवावतारः कुतः ॥ ४६ ॥ तत्त्वान्याह । तन्मते जैनमते तत्त्वानि ज्ञेयानि निगदसिद्धनामानि ॥ ४७ ॥ जीवादिस्वरूपमाह । जैनमते चैतन्यलक्षणो जीव इति संबन्धः । ज्ञानदर्शनचारित्रधर्माणां गुणाभिन्नो भिन्नश्च । स्वापेक्षया ज्ञानवत्त्वमभिन्नं ज्ञानादिभ्यः, परापेक्षयाज्ञानवत्त्वं भिन्नम्, लेशतोऽपि यदि सर्वजीवेषु न न ज्ञानं तदा जीव-अजीवत्वं प्राप्नुयात् । विवृत्तिः परिणामः सुरनरनारकतिर्यक्षु एकेन्द्रियादिजातिषु विविधोत्पत्तिरूपान् परिणामाननुभवति जीवः । शुभं सातवेद्यम् अशुभमसातवेद्यम्, एवंविधं कर्म करोतीति कर्तृभूतः । स्वोपार्जितपुण्यपापफलभोक्ता, न चान्यकृतस्यान्यो भोक्ता ॥ ४८ ॥ चेतनास्वभावत्वं लक्षणं यस्य सूक्ष्मबादरएकेन्द्रियास्तथा विकलेन्द्रियाः संज्ञ्यसंज्ञिनः पञ्चेन्द्रियाः पर्याप्तापर्याप्तभेदेन चतुर्दशजीवभेदाः । अस्माद्यो विपरीतोऽचेतनादिलक्षणः स अजीवः धर्माधर्माकाशपुद्गलाः स्कन्धदेशदेशगुणाः, अद्धा केवलपरमाणवश्चेति चतुर्दश जीवभेदाः । सत् शुभनं सातवेद्यं कर्म तस्य पुद्गलाः दलपाटकानि ते च ॥ ४९ ॥ तु पुनः पुण्यप्रकृतिविसदृशं पापम्, ८२ भेदाः । मिथ्यादर्शनाविरतिप्रमादकषाययोगा हेतवः । यस्तैर्मिथ्यात्वादिभिर्बन्धस्य हेतुः कर्मबन्धः स आस्रवः



Jain Education International For Private & Personal Use Only www.jainelibrary.org

४२ भेदाः । पञ्चेन्द्रियाणि, चत्वारः कषायाः, पञ्च व्रतानि, मनोवचनकायाः, पञ्चविंशतिक्रियाः काथिक्यादय इति ॥ ५० ॥ आस्रवद्वारप्रतिरोधः संवरः ५७ भेदाः । तु पुनरर्थः । यो जीवस्य कर्मणा बद्धस्य परस्परं क्षीरनीरन्यायेन लोलीभावात् संबन्धो योगः स बन्धो नाम, प्रकृतिस्थित्यनुभागप्रदेशभेदाच्चतुर्धा । प्रकृतिः परिणामः स्यात् ॥ ५१ ॥ यः पुनर्बद्धस्य मृ वृ निधत्तनिकाचितादिरूपस्य कर्मणस्तपश्चरणध्यानादिभिः शाटः क्षपणं सा निर्जरा सकामाकामभेदेन द्विधा । तु पुनः । देहेन्द्रियधर्मादिजीवरहे आत्यन्तिको वियोगो मोक्षे ९ विधः । ननु सर्वथा प्राणाभावादजीवत्वप्रसङ्गः, तथा मोक्षाभावः; न, द्रव्यप्राणानामेवाभावः, भावप्राणास्तु क्षायिकसम्यक्त्ववीर्यज्ञानादयो निष्कर्मावस्थायामपि सन्त्येव ॥ ५२ ॥ स्थिराशयो दृढचित्तः सन् श्रद्धत्ते अवैपरीत्येन मनुते, जानन्नपि अश्रद्दधानो मिथ्यादृगेव । सम्यक्त्वं च ज्ञानं च तयोर्योगः, ज्ञानदर्शनविनाकृतस्य हि चारित्रस्य निष्फलत्वात् सम्यक्चारित्रव्यवच्छेदार्थं सम्यग्ज्ञानग्रहणम् ॥५३॥ तथेत्युपदर्शने । परिपक्वभव्यत्वेन तद्भवावश्यकमोक्षगन्तव्येन पुंसः स्त्रियो वा ज्ञानदर्शनचारित्रत्रयं पुमान् मोक्षभाजनं मुक्तिश्रियं भुङ्क्ते । सम्यगिति ज्ञानामागमावबोधः क्रिया चरणकरणात्मिका, तासां योगः संबन्धः, न केवलं ज्ञानं दर्शनं चारित्रं वा मोक्षहेतुः किन्तु समुदितं त्रयम् ॥ ५४ ॥ तथेति प्रस्तुतमतानुसंधाने । अश्नुते अक्ष्णोति वा व्याप्नोति सकलक्षेत्रकालभावान् इत्यक्षो जीवः । अश्नुते विषयमित्यक्षमिन्द्रियं च । असमक्षं प्रतिगतं प्रत्यक्षम् इन्द्रिया-[ण्याश्रित्य]श्रितव्यवहारसाधकम् । अवधिमनःपर्ययकेवलानि तद्भेदाः अतएव [वं] सांव्यवहारिकपारमार्थिकेन्द्रि-यानिन्द्रियादयो भेदाः अनुमानाधिकविशेषप्रकाशक[श]त्वादत्रैवान्तर्भवन्ति । अक्षाणां परं परोक्षं स्मरणप्रत्यभि-ज्ञानतर्कानुमानागमभेदमिति । मतिश्रुतज्ञानेऽपि परोक्षे । तु पुनः । इह जिनमते प्रमाणयोः प्रत्यक्षपरोक्षयोः विषयो गोचरः वस्तुतत्त्वं पदार्थरूपम्, अनन्ताः त्रिकालविषयत्वादपरमितयो[ता ये]धर्मा सहभाविनः क्रमभाविनश्च पर्याया आत्मा स्वरूपं यस्य अनन्तधर्मकत्वं साध्यो धर्मः, सत्त्वान्यथानुपपत्तेरिति साधनम्, हेतो [रन्त]र्व्याप्त्यैव साध्यसिद्धत्वाद् दृष्टान्तादिभिः किं प्रयोजनम् ? य [त]दनन्तधर्मात्मकं न भवति तत्सदपि न स्यात् यथा आकाश-पुष्पम् । आत्मादीनां साकारानाकारोपयोगकर्तृत्वभोक्तृत्वादयो जगत्प्रसिद्धा धर्माः ॥ ५५ ॥ अक्षगोचरातीतितः [तः] परोक्षः तदभावोऽपरोक्षः तया साक्षात्कारितया अर्थस्य वस्तुनो ग्राहकम् ईदृगेव ज्ञानं प्रत्यक्षम्, अन्य-थोक्तप्रत्यक्षनिषेधः । इतर [द] साक्षात्कारितया स्वसंवेदनबहिःपर्यालोचनया परोक्षम् ॥ ५६ ॥ येन कारणेन यत् उत्पादव्ययध्रौव्यात्मकं तत् सत् सत्त्वरूपमुच्यते तेन कारणेन अनन्तधर्मकं वस्तु प्रमाणगोचरः । सर्ववस्तुषु उत्पत्तिविपत्तिसत्तासद्भावात् उत्पत्यादित्रययुक्तस्यैवानन्तधर्मता तेनैव पुनरनन्तधर्मात्मकत्वमुक्तं न पौनरुक्त्यम् ॥ ५७ ॥ जिनदर्शनस्य संक्षेपः प्रोक्तः विस्तरस्य अगाधत्वेन वक्तुमगोचरत्वात् अ ना यानि दू [नयो निर्दू] षणाः [णः] सर्वज्ञमूलत्वात् [तु पुनः] समुच्चये, आदौ प्रांच ते [प्रान्ते] च परस्पर [वि] रुद्धर्षेत [र्थता] यत्र नः, आस्तां केवलिप्रणीते छद्मस्थप्रणीतेऽप्यङ्गादिके न दोषलवः परेषां [परस्परं] शास्त्राणि परस्पर-विरोधाघ्रात [तत्त्वे] न व्याघ्रा [घ्र] इव दुःशक्या कर्णे धर्तुम् ॥ ५८ ॥ वैशेषिकाणां काणादानां नैयायिकैः समं शिवदेवविषयो भेदो नास्ति तत्त्वेषु शासनरहस्येषु तु भेदो निर्दिश्यते ॥ ५९ ॥ तन्मते वैशेषिकमते तु निश्चितं च तत्त्वषट्कम्, नामानि सुगमार्थानि ॥ ६० ॥ नवविधं द्रव्यं पञ्चविंशतिगुणाश्चेति [श्च नि] गदसिद्धान्येव संस्कारस्य वेगभावनास्थित [ति]स्थापकभेदात् त्रिविधोऽपि [त्रैविध्येऽपि] संस्कारत्वजात्यपेक्षया एकत्वम् । शौर्यौ-दार्यादीनां गुणानामेष्वेवान्तर्भावात् नाधिक्यम् ॥ ६१-६३ ॥ पञ्चापि कर्मभेदाः स्पष्टा एव । गमनग्रहणाद् भ्रमणरेचनस्यन्दनाद्यविरोधः । तु पुनः सामान्ये द्वे परसामान्यमपरसामान्यं चेत्यर्थः ॥ ६४ ॥ एतद्व्यक्ति[क्तं]-विशेषव्यक्तिं चाह—तत्र परं सत्ता भावो महासामान्यम्, [अपरसामान्यं] च द्रव्यत्वादि, एतच्च सामान्यविशेष इत्यपि व्यपदिश्यते । तथाहि द्रव्यत्वं नवसु द्रव्येषु वर्तमानत्वात् सामान्यं गुणकर्मव्यावृत्तत्वाद् विशेषः । एवं द्रव्यत्वापेक्षया पृथिवीत्वादिकमपरं तदपेक्षया घटत्वादिकम् । चतुर्विंशतौ गुणेषु वृत्तेर्गुणत्वं सामान्यं द्रव्यकर्मभ्यो निवृत्तेश्च विशेषः । गुणत्वापेक्षया नील [रूप]त्वादिकम् । एवं कर्मादीन्यपि । नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अत्य-न्तव्यावृत्तिहेतवः । ते द्रव्यादिवैलक्षण्यात् पदार्थान्तराः [रम्] । अन्त्ये[न्ते]षु भवा अन्त्याः, स्वाश्रयविशेषकत्वाद् विशेषाः । गवादिषु अश्वादिभ्यः तुल्याकृतिक्रियावयवोपचयसंयोगविलक्षणोऽयं प्रत्ययव्यावृत्ते[त्ति]र्विशेषः ॥६५॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इह [इतर] प्रस्तुतमते अयुतसिद्धानां परस्परपरिहारेण पृथगाश्रया [ना] श्रितानाम् आधार्याधारभूतानामिह प्रत्ययहेतुः संबन्धो यः स समवायः। इह तन्तुषु पट इत्यादौ समवायः। स्वकारणसामर्थ्यादुपजायमानं पटाद्याधार्यं तन्वाद्याधार [रे] संबध्यते यथा छिदिक्रिया छेद्येनेति। षण्णामपि पदार्थानां स्वरूपकथनमात्राधिकृतत्वात् ग्रन्थस्य नेह प्रतन्यते विस्तरः ॥६६॥ यद्यप्यौलूक्यशासने व्योमशिवाचार्योक्तानि त्रीणि प्रमाणानि तथापि श्रीधरमतापेक्षयाऽत्रोभे एव निगदिते। च पुनरर्थे। अमीषां वैशेषिकाणां प्रमाणं द्विधा—प्रत्यक्षमेकम् लैङ्गिकमनुमानं द्वितीयम्। एवमिति प्रकारवचनम्। यद्यपि प्रमातृफलाद्यपेक्षया बहु वक्तव्यं तथापि तथाप्येवममुना पूर्वोक्तप्रकारेण वैशेषिकमतस्य संक्षेपः परिकीर्तितः कथितः ॥ ६७ ॥ षष्ठं दर्शनमाह। जैमिनिमुनेरमी जैमिनीयाः, पुत्रपौत्राद्यर्थे तद्धित ईयप्रत्ययः। जैमिनिशिष्याश्चैके पूर्वमीमांसावादिनः। एके उत्तरमीमांसावादिनो ते हि पुरुषाद्वैतवादसाधनव्यसनिनः शब्दार्थखण्डकाः। पूर्वमीमांसावादिनो द्विधा प्राभाकर[राः]भट्टाश्च क्रमेण पञ्चषट्प्रमाणप्ररूपकाः। अत्र तु सामान्येनैव[न] सूत्रकृत् पूर्वमीमांसावादिन एव जैमिनीयानुद्दिष्टवान्। तन्मते प्राहुः—सर्वज्ञत्वादिविशेषणोपपन्नः कोऽपि नास्ति मानुषत्वावि[द्वि]शेषेण विप्रलम्भकत्वात् द्रव्यपुरुषाद्यभावः [सर्वज्ञत्वादिविशिष्टपुरुषादिभावः] यदुक्तं प्रमाणं भवेद् वाक्यम्। अथ कथं यथावस्थिततत्त्वनिर्णयः ॥६८॥ तस्मात् प्रामाणिकपुरुषाभावात् अतीन्द्रियार्थानां चक्षुराद्यगोचरपदार्थानां साक्षाद् दर्शकस्य सर्वज्ञादेः पुरुषस्याभावात् नित्येभ्यः शाश्वतेभ्यो वेदवाक्येभ्योऽपौरुषेयवचनेभ्यो यथावस्थितपदार्थधर्मादिस्वरूपविवेचनं भवतीत्यध्याहारः ॥६९॥ अथ यथावस्थिततत्त्वार्थस्थापकं तत्त्वो[तथो]पदेशमाह। अत एव [यतो] हेतोः वेदाभिहिततत्त्वानुष्ठानादेव तत्त्वनिर्णयः। अतएव पुरा पूर्वं प्रयत्नाद् वेदपाठः कार्यः, ऋग्यजुःसामाथर्वणवेदानां पाठः कण्ठपीठोलोचनं[पीठीलुण्ठन्तम्] न तु [ननु] श्रवणमात्रेण ततोऽनन्तरं धर्मसाधनापुण्योपचयहेतुः। धर्मस्य हेयोपादेयस्वरूपस्य वेदाभिहितस्य ज्ञातुमिच्छा कर्त्तव्या वेदोक्ताभिधेयविधाने यतितव्यमित्यर्थः ॥७०॥ नोदनैव लक्षणं यस्य स नोदनालक्षणः। तु पुनः नोदना क्रियां प्रति प्रवर्तकं वचः, वेदोक्तं भवति, नोदना पुनः क्रियां हवनसर्वभूताहिंसनदानादिप्रतिक्रियां प्रतिप्रवर्तकं प्रेरकं वचो वेदवचनं प्राहुः मीमांसका भाषन्ते। हवनादिक्रियाविषये यदेव प्रेरकं वेदस्य वचनं सैव नोदनेति भावः। प्रवर्तकं तद्वचनमेव निदर्शनेन दर्शयति स्वःकामोऽग्निं यजेदिति। अथेति उपदर्शनार्थः। स्वः स्वर्गे कामना यस्य स स्वःकामः पुमान् स्वःकामः सन् अग्निं वह्निं यजेत् तर्पयेत्। अत्रेदं श्लोकबन्धानुलोम्येनेत्थमुपन्यस्तम्, अन्यथा त्वेवं भवति—अग्निहोत्रं जुहुयात्स्वर्गकाम इति। प्रवर्तकवचनस्योपलक्षणत्वात् निवर्तकमपि वेदवचनं नोदना ज्ञेया, यथा न हिंस्यात् सर्वभूतानि। अथ प्रमाणस्य विशेषलक्षणं विवक्षुः प्रथमं तन्नामानि तत्संख्यां चाह, प्रत्यक्षानुमानशब्दोपमानार्थापत्यभावलक्षणानि षट् प्रमाणानि जैमिनिमुनेः संमतानीत्यध्याहारः। चकारः समुपयोगार्थः। तत्राद्यानि पञ्चैव प्रमाणानीति प्राभाकरोऽभावस्य प्रत्यक्षेणैव ग्राह्यतान्मन्यमानोऽभिमन्यते षडपि तानि ते भट्टो भाषते। अथ प्रत्यक्षप्रमाणस्य क्षणमाचष्टे। तत्र प्रमाणषट्कम् अक्षाणामिन्द्रियाणां वेदोक्तस्वर्गसाधकाम्नायस्य क्रियाप्रवर्तकं वचनं नोदना तामाहुः दृष्टान्ते न स्पष्टयति ॥७१॥ प्रमाणान्याह। जैमिनेः षट्प्रमाणानि ज्ञेयानि, यद्यपि प्रभाकराणां मते पञ्च, भट्टानां षट्; तथापि ग्रन्थकृत् सामान्यतः षट्संख्यामाचष्टे। प्रमाणनामानि निगदप्रसिद्धान्येव ॥७२॥ तत्र प्रमाणषट्के अक्षाणामिन्द्रियाणां प्रयोगे पदार्थैः सह संयोगे यथा[या]बुद्धिरिदमिदमित्यवबोधः तत्प्रत्यक्षम्। सत्तामदुष्टेन्द्रियाणामिति। एतावता मरुमरीचिकाजलवत् [कार्यां जलभ्रमः] शुक्तौ रजतभ्रमश्च इन्द्रियार्थसंप्रयोगेऽपि द्रष्टुरविकलेन्द्रियत्वाभावान्न प्रत्यक्षं प्रमाणम्। आत्मा यदनुमीयते [यदनुमिमीते] स्वयं तदनुमानमित्यर्थः। लिङ्गाज्जातं लैङ्गिकम्। व्युत्पत्तिभेदाद्भेदः। उभयशब्दकथनं बालावबोधार्थम् ॥७३॥ शब्दमागमप्रमाणं शाश्वताद्वेदाज्जातम्, वेदानां च शाश्वतत्वम्, अपौरुषेयत्वादेव। यत्प्रसिद्धार्थस्य प्रतीतपदार्थस्य साधर्म्यात् साम्यात् [साहार्यात्] अप्रसिद्धस्य वस्तुनः साधनं तदुपमानं यथा प्रसिद्धगोगवयस्वरूपो वनेचरः अप्रसिद्धगवयस्वरूपं नागरकं प्राह यथा गौर्गवयस्तथा। अत्र सूत्रानुक्तावपि यत्तदावर्थसंबन्धादध्याहार्यौ ॥७४॥ यद्बलेन कस्याप्यदृष्टस्य कल्पना संघटना विधीयते। दृष्टः परिचितः प्रत्यक्षलक्ष्योऽर्थः देवदत्ते पीनत्वादिः तस्यानुपपत्त्याघटमानतया अन्यथानुपपन्नेत्यर्थः यथा पीनो देवदत्तो दिवा

Jain Education International For Private & Personal Use Only www.jainelibrary.org

